सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः ।
शब्दैराख्यायिका भाति शय्येव प्रतिपादुकैः ॥ २१ ॥

दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे ।
कथंचिन्नीयते शय्यां कथा नववधूरिव ॥ २२ ॥

जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः ।
सकलप्रणयिमनोरथसिद्धिः श्रीपर्वतो हर्षः ॥ २३ ॥

---

भावः । नृपतेर्हर्षस्य । निर्वहणाकुलः यावत्समाप्तिनयनाकुलः, निर्वहणत्वात् निर्गतयानपात्रत्वाद् आकुल इति च । 'बोहित्थं प्रवहणं वहनं पोत' इति यानपात्रस्य पर्यायः । जिह्वाप्लवनं जिह्वया तरणम् ॥ २० ॥

आख्यायिकास्वप्येवं विशिष्टैः (?) स्पृहणीया यथास्मदीयेत्याह—सुखेति । सुखप्रबोधललिता सुबोधार्थतया हृद्या; अन्यत्र प्रसुप्तस्य यथा सुखं प्रबोधो भवति तथा ललिता । सुवर्णघटनोज्ज्वलैः शोभनानां वर्णानामक्षराणां घटनया कान्तैः; अन्यत्र सुवर्णस्य कनकस्य घटनया श्लेषणेन दीप्तैः । प्रतिपादुकैः अर्थगमकैः, पादधारणपीठैश्च । प्रतिपादुकैः शब्दैः आख्यायिका भाति । प्रतिपादुकैः शय्येवेत्यन्वयः। एवम्भूतैः शब्दैरुपलक्षितैवाख्यायिका भाति, नेतरेत्यर्थः। पादधारणपीठपक्षे तु पादुकाशब्दस्य 'पादुकानुपदीना स्यात्' इति वैजयन्तीकारमतेन स्त्रीलिङ्गत्वे निर्बन्धवन्तः केचित् प्रतिपादकैरिति पठन्ति ॥ २१ ॥

प्रबन्धवस्तुशरीरस्य वस्तुदुर्निर्वहतां प्रतिपादयति—दर्शयन्तीति । मुखे आरम्भे, वदने च। खेदम् अशक्तिं, निर्वेदं च। प्रस्खलन्ती चलन्ती, पतन्ती च। पदे पदे प्रतिशब्दं, प्रतिचरणविक्षेपं च। शय्यां ग्रन्थसन्दर्भं, भर्तुः शयनं च। 'शय्या तल्पे ग्रन्थगुम्फे' इति वैजयन्ती। 'गुम्फः सन्दर्भ' इति च तत्रैवोक्तम्। कथा प्रबन्धवस्तुशरीरम् ॥ २२ ॥

आरम्भ एव प्रबन्धस्य विषयं प्रकाशयन् नायकमुपश्लोकयति—जयतीति । जयतीत्येतत् स्तुत्येषु स्तोतृभिः प्रयुज्यमानस्तुतिवचनम् । सर्वोत्तरो भवतीत्यर्थः । 'जि जये', 'जि अभिभवे' इति द्वौ धातू भवतः । तत्र जयार्थं जयतिधातुं वैयाकरणा उत्कर्षार्थकमकर्मकं चाहुः। तत्र दैवं च—

**एवमनुश्रूयते—पुरा किल भगवान् स्वँल्लोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः शुनासीरप्रमुखैर्गीर्वाणैः परिवृतो ब्रह्मोद्याः**

---

'जयेज्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः। उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः॥' इति। ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः ज्वलता उद्दीप्यमानेन प्रतापज्वलनेनैव प्रतापाग्निनैव प्राकारेण सालेन कृतजगद्रक्षः; अन्यत्र ज्वलतः समिध्यमानस्य प्रतापस्य प्रकृष्टोष्णस्य अग्नेः प्राकारेण प्रकृष्टेनाकारेण कृतजगद्रक्षः। एतदुक्तं भवति—श्रीपर्वते हि जगतामभ्युदयसूचकमूर्ध्वं ज्वलदग्निरूपं ज्योतिर्लिङ्गाख्यं ज्योतिस्तेजः प्रकाशते। तेन च सर्वोपद्रवनाशकतया रक्षा च कृता भवतीति सकलप्रणयिमनोरथसिद्धिः। श्रीपर्वतः सकलार्थिनां वाञ्छितार्थलाभे श्रीपर्वतभूतः। श्रीपर्वतोऽपि सिद्धिक्षेत्रत्वात् सर्वेषां वाञ्छितार्थलाभस्थानम्॥ २१॥

इति पूर्वोक्तप्रकारं मङ्गलसूक्त्यादिपुरस्सरं कविना गद्यात्मिका कथा आरभ्यते—**एव**मित्यादि। अनुश्रूयते परम्परया श्रूयते। अनेन सरस्वतीशापादिका सारस्वतवृत्तावसाना कथा विषयीकृता, न तूत्तरा, तस्याः[1] प्रयोगानुभवविषयत्वात्। अनुभवविषयभूतायाः पुष्यभूत्यादिकथायाः तद्विदां जानपदवृद्धानां सकाशात् साक्षात् तदात्वेऽनुभूयमानाया इव श्रूयमाणाच्चानुश्रूयत इति प्रयोक्तुं युक्तत्वात्। एतेन सरस्वतीशापादिका सारस्वतवृत्तावसानैषा कथा ऐतिहासिकोपदेशपरम्परयैव श्रूयते, न तु कादम्बर्यादिषु कथेव मयोत्प्रेक्षितेति दर्शितम्। किल वार्तायाम्। स्वँल्लोकं स्वं लोकमिति पदच्छेदः। 'वा पदान्तस्य' (पा०सू०८.४.५९) इति सानुनासिको लकारः। स्वं लोकम् आत्मीयं लोकं, ब्रह्मलोकमित्यर्थः। केचित्तु स्वर्लोकमिति पाठमादृत्य स्वर्गलोकमिति व्याचक्षते। तदयुक्तम्, उत्तरत्र ब्रह्मलोक एव निवासस्य लिङ्गदर्शनात्। अधितिष्ठन् अध्यासीनः। पद्मविष्टरे पद्म एवासने। 'वृक्षासनयोर्विष्टरः' (पा० सू० ८. ३. ९३) 'विष्टरः पीठमासनम्' इति हलायुधश्च। शुनासीरप्रमुखैः इन्द्रप्रधानैः। 'क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः' इत्यमरसिंहः। गीर्वाणैः देवैः। ब्रह्मोद्याः ब्रह्मणः परमात्मनः

---

१. स्यां प्रायेणानुभव-ख. ग. २. या अपि तदन्तर्भूताया अद्भुतरूपायाः पुष्य,

कथाः कुर्वन्नन्याश्च निरवद्या विद्यागोष्ठीर्विभावयन् कदाचिदासाञ्चक्रे। तथासीनं च तं त्रिभुवनप्रतीक्ष्यं सर्वे मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरस्सरा महामुनयः सिषेविरे। केचिदृचः स्तुतिचतुराः समुदाचरन्। केचिदपचितिभाञ्जि यजूंष्यपठन्। केचित्प्रशंसासामानि जगुः। अपरे विवृतक्रतुक्रियातन्त्रान् मन्त्रानाचचक्षिरे। विद्याविसंवादकृताश्च तेषां तत्रान्योन्यस्य विवादाः प्रादुरभवन्। अथातिरोषणः प्रकृत्या महातपा मुनिरत्रेस्तनयस्ताराधिपतेर्भ्राता नाम्ना दुर्वासा द्वितीयेन मन्तुनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान्धो विस्वरमकरोत्। सर्वेषु च शापभयप्रतिपन्नमौनेषु मुनिषु अन्यार्थालापलीलया चावधीरयति भगवति

---

प्रतिपादकाः। ब्रह्मोद्या इति ब्रह्मवादीत्यर्थे 'कृत्यल्युटो बहुलम्'(पा०सू० ३.३.११३.) इति बहुलग्रहणात्, 'वदः सुपि क्यप् च' (पा०सू० ३.१.१०६.) इति क्यप् कर्तरि। केचिदेतद् भावप्रत्ययान्तं मन्यमानाः ब्रह्मोद्याः कथाः ब्रह्मोक्तिरेव कथा इति व्याचक्षते। तदयुक्तं, तदानीमस्य कृत्यप्रत्ययान्तत्वाद्, वैजयन्तीकारेण 'ब्रह्मोद्याद्या भावकृत्या' इति नपुंसकत्वानुशासनात् नपुंसकत्वप्रसिद्धेः। किं च ब्रह्मपदस्यैव कर्मभावार्हत्वाद् ब्रह्मोद्याः कुर्वन्नित्येवं वक्तव्ये कथाशब्दोपादानं निरर्थकमेव स्यात्। कथाः वाक्यसन्दर्भान्। गोष्ठीः परिषदः। विभावयन् निरूपयन्। मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः, 'ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः। मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः॥ वसिष्ठः परमेष्ठी च विवस्वान् सोम एव च। कर्दमश्चापि यः प्रोक्तः क्रतो विकृतिरेव च॥ एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः।' इति **महाभारतोक्ताः**। 'मरीचिरत्र्यङ्गिराश्च पुलहश्च तथा क्रतुः। पुलस्त्योऽथ वसिष्ठश्च सप्तर्षय इमे स्मृताः॥' अपचितिभाञ्जि पूजापराणि। प्रशंसासामानि स्तुतिरूपाणि सामानि। विवृतक्रतुक्रियातन्त्रान् व्याख्यातयागकर्मप्रयोगान्। 'तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने परिच्छदे। शास्त्रौषधप्रधानमुख्येषु प्रयोगेऽध्वरकर्मणाम्॥' इति **वैजयन्ती**। विसंवादः आत्मनोऽधिगतप्रकारस्य असाकल्यार्थता। ताराधिपतेः चन्द्रस्य।

कमलसम्भवे, कुमारी किञ्चिदुन्मुक्तबालभावे भूषितनवयौवने वयसि र्तमाना, गृहीतचामरप्रचलितभुजलता पितामहमुपवीजयन्ती, निर्भर्त्सन-ताडनजनितरागाभ्यामिव स्वभावारुणाभ्यां चरणपल्लवाभ्यामुद्भासमाना, शेष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा, धर्मनगर-तोरणस्तंभविभ्रमं बिभ्राणा जङ्घाद्वितयं, सलीलमुत्ककलहंसकुलकलालापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया, विद्वन्मानसनिवासलग्नेनेवांसाव-लम्बिना गुणकलापेन ब्रह्मसूत्रेण पवित्रीकृतकाया, भास्वन्मध्यनायक-मनेकमुक्तानुयातमपवर्गमार्गमिव हारमुरसा समुद्वहन्ती, वदनप्रविष्टसर्व-विद्यावधूचरणालक्तकरसपाटलेनेव स्फुरता दशनच्छदेन विराजमाना, संक्रान्तकमलासनकृष्णाजिनप्रतिबिम्बा, मधुरगीताकर्णनावकीर्णशशि-हरिणमिव कपोलस्थलीं दधाना, तिर्यक् सावज्ञमुन्नमितैकभ्रूलता, श्रोत्रमेकं विस्वरश्रवणकलुषितं प्रक्षालयन्तीवापाङ्गनिर्गतेन लोचनांशुजलप्रवाहेण

---

द्वितीयेन सहायेन। कलहायमानः कलहं कुर्वन्। मौनं तूष्णींभावः। अन्यालाप-शीलया अन्यालापक्रियया। अवधीरयति उपेक्षमाणे। 'उपेक्षा त्ववधीरणम्' इति वैजयन्ती। कुमारी कौमारावस्था। बालभावे बाल्ये। निर्भर्त्सनताडनं अलक्तका-घातः। 'निर्भर्त्सनमलक्तेऽपि' इति वैजयन्ती। पदक्रममुखरेण चरणविक्षेपवाचालेन; अन्यत्र पदक्रमाध्ययनमुखरेण। विभ्रमः शोभा। 'विभ्रमः संशये भ्रान्तौ शोभायां च' इति वैजयन्ती। उत्क उन्मनाः। गुणकलापेनेति, गुणः शुभ्र इति कविसमयः, कीर्तिवत्। ब्रह्मसूत्रेण यज्ञसूत्रेण। भास्वन्मध्यनायकम् भास्वान् दीप्तिमान् मध्यनायकमणिर्यस्य। 'हारमध्ये स्थितं रत्नं तरलं नायकं विदुः।' इति हलायुधः। अन्यत्र आदित्यमध्येन नेतारं मोक्षिणम्। आदित्यमण्डलमध्येन परमं पदं प्रविशन्तीत्यौपनिषदाः। 'द्वारं यन्मुक्तिभाजाम्' इति सूर्यशतके च। मुक्तानुयातं मुक्ताभिर्मौक्तिकैर्युक्तम्। अन्यत्र मुक्तैः मोक्षं प्राप्तैः अनुगतम्। अपवर्गो मोक्षः। कलुषितं दूषितं, धूसरितमिति च। इतरश्रवणेनोपलक्षिता।

इतरश्रवणेन च विकसितसितसिन्दुवारमञ्जरीजुषा हसतेव प्रकटितविद्यामदा, श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसमधुकरकुलैरुपास्यमाना, सूक्ष्मविमलेन प्रज्ञाप्रतानेनेवांशुकेनाच्छादिततनुलता, वाङ्मयमिव निर्मलं दशनज्योत्स्नालोकं दिक्षु विकिरन्ती देवी सरस्वती श्रुत्वा जहास ॥

दृष्ट्वा तु तां तथा हसन्तीं स मुनिः 'आः! पापे! दुर्गृहीतविद्यालवावलेपदुर्विदग्धे! ननु मामुपहससि' इत्युक्त्वा शिरःकम्पविशीर्यमाणबन्धविशरारोरुन्मिषत्तडित्पिङ्गलिम्नो जटाकलापस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण दश दिशः कृतकालसन्निधानामिवान्धकारितललाटाष्टापदाम् अन्तकमण्डनपत्रभङ्गमकरिकां भ्रूकुटीमाबध्नन् अतिलोहितेन चक्षुषा स्व-

---

सिन्दुवारं निर्गुण्डीपुष्पम् (൭൩൦ച്ചിപ്പൂ) श्रुतिप्रणयिभिः श्रोत्रसक्तयुक्तैः, वेदपरिचयवद्भिश्च । 'प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च' इति वैजयन्ती। प्रणवैः ऋग्वेदादिगतव्यक्तिविवक्षया बहुवचनम् । उपास्यमाना निषेव्यमाणा । सूक्ष्मविमलेन सूक्ष्मेण विमलेन च । सूक्ष्मं लघु विमलं निर्मलम्; अन्यत्र सूक्ष्मं अध्यात्मं तेन विमलेन अध्यात्मज्ञानेन शुद्धेनेत्यर्थः । 'सूक्ष्ममध्यात्मदभ्रयोः' इति वैजयन्ती । अथवा सूक्ष्मं कुशाग्रवत् तीक्ष्णम् । प्रज्ञाप्रतानेन बुद्धिविस्तारेण । वाङ्मयं वाक्समूहम् । निर्मलं धवलम्, शुद्धं च । ज्योत्स्नालोकं ज्योत्स्नाप्रकाशम् । विकिरन्ती विक्षिपन्ती, विस्तारयन्तीति वा ॥

आः! कोपसूचकमव्ययमिदम्। 'आस्तु स्यात् कोपपीडयोः' इत्यमरसिंहः। दुर्गृहीतं ईषद्गृहीतम्, अशोभनगृहीतं वा । दुर्विदग्धे ननु दुर्ललिते ननु । उपहससि अपहससि । विशरारोः विशरणशीलस्य । उन्मिषत् स्फुरत् । कालो मृत्युः। अन्धकारितललाटाष्टापदां, भ्रूकुटिभिः सिरालत्वात् ललाटमष्टापदत्वेन रूपितम् । अन्धकारितं भीषणमित्यर्थः । अष्टापदम् द्यूतेषु शारिफलकम् । 'अष्टापदं शारिफलम्' इत्यमरसिंहः (ചൂതുപലക) । अन्तकमण्डनपत्रभङ्गमकरिकाम् अन्तकस्य मण्डनेषु लिख्यमानां पत्रभङ्गरूपां मकरिकां मत्स्यस्त्रियम् । एतदुक्तं भवति— सर्वेषां मण्डनसमये कपोलादिषु पत्रभङ्गत्वेन मकरिका लिख्यते । सा त्वन्तकसम्बन्धिनीवास्याभत । भ्रूकटीति अन्तकसम्बन्धित्वं तु भीषणत्वद्योतनार्थम् ।

रुधिरोपहारमिवामर्षदेवतायै प्रयच्छन् निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भयपलायमानां देवीं वाचमिव निरुन्धन्नंसस्रंसिनः शापशासनपटस्येव ग्रथ्नन् ग्रन्थिमन्यथा कृष्णाजिनस्य स्वेदप्रतिबिम्बितैः शापशङ्काशरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्वावयवः कोपकम्पतरलितांगुलिना करेण प्रसादनलग्नामक्षरमालिकामिवाक्षमालिकां विक्षिप्य कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह ।

अत्रान्तरे च स्वयंभुवोऽभ्याशे समुपविष्टा देवी मूर्तिमती पीयूषफेनपिण्डपाण्डरं कल्पद्रुमदुकूलवल्कलं वसाना बिसतन्तुमयेनेवाच्छेनांशुकेनोन्नतस्तनमध्यनिबिडनिबद्धगात्रिकाग्रन्थिः तपोनिर्जितत्रिभुवनविजयपताकाभिरिव तिसृभिर्भस्मपुंड्रकराजिभिर्विराजितललाटाङ्कणा स्कन्धावलम्बिना

---

भ्रूकुटीं भ्रूभङ्गम्[1] । आबध्नन् उत्पादयन् । उपहारं बलिद्रव्यम् । उपह्रियत इत्युपहारः। प्रयच्छन् दिशन् । 'दाण् दान' इति धातुः । 'पाघ्रा' दिसूत्रेण शिति यच्छादेशः । दशनच्छद ओष्ठः । पलायमानां अपसरन्तीम् । शापशासनपटस्य 'तच्छापशासनपटं शापैर्लोकस्य निग्रहे । बद्धव्रतेन मुनिना सदा यद्ध्रियते पटम्[2] ॥' ग्रथ्नन् बध्नन् । ग्रन्थिं बन्धम् । अन्यथा अयथार्थम् । स्वेदः स्वेदजलम् । तरलितं चलितम्[3] । अक्षमालिकां जपपटम् । विक्षिप्य त्यक्त्वा । कामण्डलवेन कमण्डलुसम्बन्धिना । वारिणा जलेन । समुपस्पृश्य आचम्य । शापजलं शापार्थं जलं वारि ।

अभ्याशे समीपे । कल्पद्रुमदुकूलवल्कलं कल्पद्रुमोद्भूतशुक्लपल्लवम् (!) । वसाना आच्छादयन्ती । गात्रिकाग्रन्थिः स्तनकक्ष्याबन्धः । पुण्ड्रकं ललाटे कृता रेखा । ललाटाङ्कणं ललाटमेवाङ्कणम् अजिरम् । स्कन्धावलम्बिना भुजशिरोऽवलम्बिना; अन्यत्र स्कन्धा ब्रह्मलोकादयः सप्त मारुतमार्गाः । 'ब्रह्मलोकश्चेन्द्रलोको द्यौर्दिशो विदिशस्तथा । अन्तरिक्षं मही चैते सप्त स्कन्धा उदाहृताः ॥'

---

१. भ्रुकुटीति-ख. २. तथं, ३. चालितं-क.

**फेनधवळेन तपःप्रभावकुण्डलीकृतेन गगनगङ्गास्रोतसेव योगपट्टकेन विरचितवैकक्ष्यका, सव्येन ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव स्फाटिकं कमण्डलुं करेण कलयन्ती, दक्षिणमक्षमालाकृतपरिक्षेपं कम्बुनिर्मितोर्मिकादन्तुरं तर्जन-तरळिततर्जनीकमुत्क्षिपन्ती करम्, 'आः पाप! क्रोधोपहत! दुरात्मन्! अनात्मज्ञ! ब्रह्मबन्धो! मुनिखेटक! निराकृते! कथमात्मस्खलितविलक्षः सकलसुरासुरमुनिमनुजवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तु-मभिलषसि' इत्यभिदधाना रोषविमुक्तवेत्रासनैरोङ्कारमुखरमुखैरुत्क्षेप-डोलायमानजटाभारभरितदिग्भिः परिकरबन्धभ्रमितकृष्णाजिनपटच्छाया-श्यामायमानदिवसैः अमर्षनिःश्वासडोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव**

फेनधवलेन फेनवद्धवलेन; फेनैर्धवलेन च। कुण्डलीकृतेन [1] वलयितेन। योग-पट्टकेन, 'योगसाधनभूतं यज्जानुस्वस्तिकबन्धनम्। पट्टकं योगिनां तत्तु योग-पट्टकमुच्यते ॥' वैकक्ष्यकम् उरसि तिर्यक् क्षिप्ता माला। 'वैकक्ष्यकं तु तत्। यत् [2] तैर्यक् क्षिप्तमुरसि' इत्यमरसिंहः। 'यज्ञोपवीतन्यासेन माले'ति क्षीरस्वामी। उत्पत्तिः जननस्थानम्। पुण्डरीकं सिताम्भोजम्। कलयन्ती धारयन्ती। परिक्षेपः परिवेष्टनम्। कम्बुः शङ्खः। ऊर्मिका अङ्गुलीयकम्। दन्तुरम् उदग्रम्। यद्यपि दन्तुरशब्दस्य उन्नतदन्त एव व्युत्पत्तिः तथापि अत्रानेनोन्नतत्वमात्रं लक्ष्यते। तर्जनी प्रदेशिनी। (ചൂണ്ടാണി)। ब्रह्मबन्धो! ब्राह्मणाधम!। 'ब्रह्मबन्धुर्द्विजाधमः' इति **हलायुधः**। मुनिखेटक! मुनीनामधम!। 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' **इत्यमरः**। निराकृते! अश्रोत्रिय!। 'अस्वाध्यायो निराकृतिः' **इत्यमरः**। विलक्षः, 'आत्मनः स्खलने सम्यग् ज्ञातेऽन्यैर्यस्य जायते। अपत्रपातिमहती स विलक्ष इति स्मृतः ॥' वेत्रासनम् आसन्दी। 'वेत्रासनं तथासन्दी' इति **हलायुधः**। उत्क्षेपः परिक्षेपणम्। भरितं पूरितम्। 'भरितं पूरितं पूर्णम्' इति **हलायुधः**। परिकरबन्धः दृढगात्रिकाबन्धः। [3](കെട്ടിച്ചുററിയൊരു പട്ടകം) 'विवेके स्यात् परिकरः पर्यस्तिपरिवारयोः। प्रगाढगात्रिकाबन्धे समूहारम्भयोरपि ॥' इति **वैजयन्ती**।

१. वलयीकृतेन-क. २. माल्यम् इति मुद्रितपाठः. ३. கட்டிச்சுற்றி ஒரு பட்டிகை-क.

स्वेदविसरव्याजेन स्रवद्भिरग्निहोत्रपवित्रभस्मस्मेरललाटैः कुशतन्तुचीरचीवरिभिराषाढिभिः प्रहरणीकृतकमण्डलुमण्डलैर्मूर्तैश्चतुर्भिर्वेदैस्सह बृसीमपहाय सावित्री समुत्तस्थौ ।

ततो 'मर्षय भगवन्! अभूमिरेषा शापस्य' इत्यनुनाथ्यमानोऽपि तापसैः 'उपाध्याय! स्खलितमेकं क्षमस्वे'ति बद्धाञ्जलिपुटैः प्रसाद्यमानोऽपि स्वशिष्यैः, 'पुत्रक मा कृथास्तपसः प्रत्यूह'मिति निवार्यमाणोऽप्यत्रिणा, रोषावेशविवशो दुर्वासा 'दुर्विनीते! व्यपनयामि ते विद्यालवावलेपजनितामुन्नतिम् । अधस्ताद्गच्छ मर्त्यलोकम्' इत्युक्त्वा तच्छापोदकं विससर्ज । ततः प्रतिशापदानोद्यतां च सावित्रीं 'सखि! संहर रुषम् । असंस्कृतमतयोऽपि जात्यैव द्विजन्मानो माननीयाः' इत्यभिदधाना सरस्वत्येवैनां न्यवारयत् ।

---

प्रेङ्खोलितं तरलितम् । अग्निहोत्रम्, 'अग्निहोत्रं नित्यहोमः' इति वैजयन्ती । स्मेरं धवलमित्यर्थः । कुशतन्तुचीरचीवरिभिः चीरं छिद्रवस्त्रं, चीवरं भिक्षूणां वस्त्रम् । उभयत्र वैजयन्ती—'छिद्रवस्त्रेऽश्चीरम् ।' 'चीवरं भिक्षुसङ्घाटी' इति च । कुशपत्रमयैः तन्तुभिः विरचितैः चीरैः निर्मितानि चीवराणि येषामित्यर्थः । आषाढिभिः पलाशमयदण्डवद्भिः । 'पलाशो दण्ड आषाढो व्रते' इत्यमरः । प्रहरणीकृतं आयुधीकृतम् । मूर्तैर्मूर्तिमद्भिः, अर्शआदित्वादच्प्रत्ययः । बृसीम् आसनम् । 'व्रतिनामासनं बृसी' इत्यमरः । अत्र ऋकारपरो बकारः न तु रेफपरः । 'विप्रवरा जाख्यं ते चक्रुः स्वबृसीरुदस्य राजाख्यन्ते ।' इति युधिष्ठिरविजये तथा प्रयोगदर्शनात् ॥

मर्षय क्षमस्व । अभूमिः अस्थानम् । अनुनाथ्यमानः याच्यमानः । 'नाथृ याचने' इति धातुः । स्खलितं स्खलनम् । तपसः प्रत्यूहं तपसो विघ्नम् । शापेन तपः क्षीयत इति भावः । आवेशोऽभिभवः । विवशः, 'विवशस्त्वस्वतन्त्रात्मा' इति वैजयन्ती । असंस्कृतम् अशिक्षितम् ॥

---

अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा भगवान् पितामहः कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्नुद्गच्छदच्छांगुलीयकमरतकमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमनकुशापीडधारिणेव दक्षिणकरेण निवार्य शापकलकलमतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सधीरमुवाच—'ब्रह्मन्! न खलु साधुसेवितोऽयं पन्थाः, येनासि प्रवृत्तः। विहन्त्येषः[1] पुरस्ताद् उद्दामप्रसृतेन्द्रियवाजिसमुत्थापितं हि रजः कलुषयति दृष्टिमनक्षजिताम्। कियद्दूरं वा चक्षुरीक्षते। विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्वानर्थानसतस्सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिवैकत्र धर्मक्रोधयोर्वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि।

---

मृणालसूत्रं मृणालतन्तुः। उपप्लव उपद्रवः। कुशापीडः कुशबन्धः। शापकलकलं शापनिमित्तसम्भूतं घोषम्। सूत्रपातं मनःसूत्रपातम्। सधीरं सधैर्यमित्यर्थः। धीरशब्दः सत्त्वादिशब्दवद् भावप्रधानः। ब्रह्मन्! ब्राह्मण! एष मार्गः। विहन्ति बाधत इत्यर्थः। पुरस्तादित्यादि। पुरस्तादग्रे। उद्दामप्रसृतैः स्वैरगतैः। इन्द्रियवाजिभिः इन्द्रियाख्यैरश्वैः। समुत्थापितं उद्भावितम्। रजो रजोगुणः। अनक्षजिताम् अनिन्द्रियजिताम्। दृष्टिं ज्ञानम्। कलुषयति दूषयति। अन्यत्र पुरस्तादुद्दामप्रसृतैः अनिवारितगतैः। वाजिभिः अक्षयोजिततुरङ्गैः। समुत्थापितं खुरोद्धुतम्। रजो धूलिः। अनक्षजिताम् अजितशकटानाम्, अज्ञातशकटगमनानाम्। दृष्टिं चक्षुः। कलुषयतीति च ध्वन्यते। अक्षशब्द इन्द्रिये शकटे च वर्तते। 'शकटे पाशके कर्षे द्यूतभेदेऽक्षमिन्द्रिये' इति **वैजयन्ती**। विशुद्धयेत्यादि। कृतबुद्धयः शिक्षितबुद्धयः पुरुषा असतो हेयान् सत उपादेयांश्चार्थान् विशुद्धया धिया हि पश्यन्ति। न त्वशुद्धया नापि चक्षुषा इति भावः। कृतबुद्धय इत्यत्र कृतशब्दः कृतहस्तकृतमुखकृतकर्मकृतास्त्रकृतपुङ्खादिष्विव शिक्षितार्थः। आलोकं ज्ञानं, प्रकाशमिति च। तमसि अज्ञाने अन्धकारे च।

---

1. मन्यते, २. त्वविशु—क.

क्षमा हि मूलं सर्वतपसाम् । परदोषदर्शनदक्षा दृष्टिरिव कुपिता न ते बुद्धिरात्मनो दोषान् पश्यति । क्व महातपोभारवैवधिकता, क्व पुरोभागित्वम् । अतिरोषणश्चक्षुष्मानप्यन्ध एव जनः । न खलु कोपकलुषिता विमृशति मतिः कर्तव्यमकर्तव्यं वा । कुपितस्य हि प्रथममन्धकारीभवति विद्या, ततो भ्रुकुटिः । आदाविन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः । आरम्भे तपो गलति, पश्चात् स्वेदसलिलम् । पूर्वमयशः स्फुरति, अनन्तरमधरः । कथं च विषपादपस्येव ते लोकविनाशाय जटावल्कलानि

---

क्षमा क्षान्तिः । मूलं कारणम् । परदोषदर्शनदक्षा स्वव्यतिरिक्तानां स्खलनानुसन्धाननिपुणा; अन्यत्र स्वव्यतिरिक्तानां दोषदर्शननिपुणा । कुपिता कोपयुक्ता, सरागा च । दोषान् स्खलनानि, काचादींश्च । पश्यति जानाति, प्रेक्षते च । महातपोभारवैवधिकता महातपोभारस्य वाहकता । वैवधिको विवधेन भाराणां हारकः । विवधशब्दात् तेन हरतीत्यर्थे 'विभाषा विवधात्' (पा० सू० ४.४.१७.) इति ठक् । विवधः क्षीरादिहरणसाधनभूतः कोटिद्वयावलम्बितशिक्यः अंसवाह्यो यष्टिः । महाभारभारिकेतेति प्रयोक्तव्ये तत्तद्देशेषु भारवाहाणां विवधेनैव भारहरणस्याचारात्, भारिकशब्दवद् भारवाहिन्यस्यैव निरूढतया वृत्तिदर्शनाद् वैवधिक इति प्रयुक्तम् । पुरोभागित्वं गुणेषु सत्स्वपि दोषैकदर्शित्वम् । 'दोषैकदृक् पुरोभागी' इत्यमरः । अन्धकारीभवति अन्धकारमयी भवति । अर्थानां सम्यग् दर्शयित्री न भवतीत्यर्थः । अन्यत्र भीषणा भवतीत्यर्थः । आदौ पूर्वम् । इन्द्रियाणि, मनआदीनि ज्ञानेन्द्रियाणि इन्द्रियशब्देन विवक्षितानि । रागः कोपः, अरुणिमा च । समास्कन्दति अभिभवति, आक्रामति । चक्षुरिन्द्रियाधिष्ठानं गोळकोऽत्र चक्षुश्शब्देन विवक्षितः । आरम्भे पूर्वम् । गलति नश्यति, स्रवति च । स्फुरति प्रादुर्भवति, कम्पते च । जटावल्कलानि जटाश्च वल्कलानि च । जटा बद्धकेशाः । वल्कलानि वस्त्रभूतास्त्वचः । अन्यत्र जटाः शिफाः, वल्कलानि त्वचः । 'जटा विकारे केशानां मूलेऽपि पृथिवीरुहाम्' इत्यजयः ।

---

१. सरोषा—ख. ग. २. [illegible]

च जातानि । अनुचिता खल्वस्य ते मुनिवेषस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः। शैलूष इव वृथा वहसि कृत्रिमोपशमं शून्येन चेतसा तापसाकल्पम्। तपसः स्वल्पमपि न ते पश्यामि कुशलजातम्। अनेनातिलघिम्नाद्याप्युपर्येव प्लवसे ज्ञानोदन्वतः। न खल्वनेलमूका एडा मूका जडा वा सर्वे एते महर्षयः। रोषदोषनिषद्ये! स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्। एतानि तान्यात्मस्खलितवैलक्ष्याणि, यैर्याति याप्यतामविदग्धो जनः' इत्युक्त्वा पुनराह—'वत्से! सरस्वति! मा गा विषादम्। एषा त्वामनुयास्यति सावित्री, विनोदयिष्यति चास्मद्विरहदुःखिताम्। आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति' इत्येतावदभिधाय विसर्जितसुरासुरमुनिमण्डलः ससम्भ्रमोपगतनारदस्कन्धविन्यस्तवामहस्तपल्लवः समुचिताह्निककरणायोदतिष्ठत्। सरस्वत्यपि शप्ता किञ्चिदधोमुखी कृष्णधवलशारां कृष्णाजिनलेखामिव तपसे दृष्टिमुरसि पातयन्ती सुरभि-

---

वृत्तमुक्ता वृत्तात् सदाचारान्मुक्ता। अन्यत्र वृत्ताः वृत्ताकारा मुक्ताः मौक्तिकानि यस्याम् 'वर्तुलं निस्तलं वृत्तम्' इत्यमरः। शैलूषो नटः। कृत्रिमोपशमं व्याजोपशमम्। उभयत्र समानम्। शून्येन ज्ञानहीनेन। अन्यत्र पारमार्थिकतापसत्वबुद्धिहीनेन। आकल्पो वेषः। कुशलजातं कुशलस्योद्भवम्। लघिम्ना क्षुद्रतया, लाघवेनेति च। अनेलमूकाः 'अन्धो ह्यनेलमूकः स्याद्' इति हलायुधः। 'एडमूकका' इति च पाठः। वाक्छ्रोत्रहीना इत्यर्थः। 'एडमूकस्त्ववाक्छ्रुतिः' इति वैजयन्ती। एडा बधिराः। 'एडो बधिर उच्यते' इति हलायुधः। जडा अज्ञाः। अनेलमूका इत्यादिभिः पदैरेतेऽपि तव सामगानस्खलने मुखविकारादि दृष्टवन्तः, स्वरदोषं श्रुतवन्तश्चेत्युक्तम्। रोषदोषनिषद्ये!, एतन्मुनेः सम्बोधनम्। रोषदोषाणां व्यवहारस्थानभूतेत्यर्थः। केचिदेतत् स्वहृदय इति पदस्य विशेषणं मन्यन्ते। तदयुक्तम्। अस्य स्त्र्यधिकारविहितप्रत्ययान्तत्वात्। स्त्रीलिङ्गत्वे सप्तम्येकवचनस्य निषद्यायामिति रूपप्रसङ्गात्। निषद्येति 'संज्ञायां समज—' (पा० सू० ३.३.९९.) इत्यादिना क्यपि कृते रूपम्। निग्राह्ये दण्ड्ये। स्खलितवैलक्ष्याणि स्खलनज्ञानजनिता लज्जा। याप्यताम् अधमताम्। 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः। अविदग्धः अपटुः। आह्निकं अह्नि कर्तव्यम्। कृष्णधवलशाराम्

---

१. नटः சந்திக்கூத்தன்—क.

निःश्वासपरिमललग्नैः शापाक्षरैरिव षट्चरणकदम्बकैराकृष्यमाणा शोकशिथिलितहस्ताधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुररवव्याहाराहूतैर्भवनकलहंसकुलैर्ब्रह्मलोकनिवासिमुनिजनहृदयैरिवानुगम्यमाना समं सावित्र्या गृहमगात्।

अत्रान्तरे सरस्वत्यवतरणवार्तामिव कथयितुमवततार मध्यमं लोकमंशुमाली। क्रमेण च मन्दायमाने मुकुलितबिसिनीविसरव्यसनविषण्णसरसि वासरे, मधुमदमुदितकामिनीकोपकुटिलकटाक्षक्षिप्यमाण इव क्षेपीयः क्षितिधरशिखरमवतरति तरुणतरकुपितकपिलपनलोहिते लोकचक्षुषि भगवति, प्रस्नुतमखमाहेय्यूधःक्षरत्क्षीरधाराधवलितेष्वासन्नचन्द्रोदयोद्दामक्षीरोदक्षालितेष्विव दिव्याश्रमोपशल्येषु अपराह्णप्रचारप्रचलिते चामरिणि चामीकरतटताडनरणितरदने रदति सुरस्रवन्तीरोधांसि स्वैरम्

---

उभयत्र समानम्। यद्यपि शारशब्दस्य वैजयन्तीकारेण 'कृष्णरक्तसितः शारः' इति वर्णत्रयसङ्करे वृत्तिर्दर्शिता, तथाप्यनेनात्र कृष्णधवलशब्दयोरुपादानाद् रक्तसङ्करमात्रमेव विवक्षितम्। शापेत्यादि। षट्चरणकदम्बकैरुपलक्षिता। तदानीं शापाक्षरैराकृष्यमाणेवेत्यर्थः। षट्चरणानां शापाक्षरसादृश्यं पापरूपतया शापाक्षराणामपि मलिनतामभिप्रेत्योक्तम्। षट्चरणो भृङ्गः। व्याहारः शब्दः।

मध्यमं लोकं भूलोकम्[1]। अंशुमाली आदित्यः। अंशुमालास्यास्तीति 'व्रीह्यादिभ्यश्च'(पा०सू०५.२.११६.) इतीनिः। मन्दायमाने अल्पशेषीभवति। बिसिनीविसरव्यसनं पद्मसमूहविपत्। कोपकुटिलकटाक्ष[2]क्षिप्यमाण इति। कोपस्तु स्वसं[3]भोगभोग्याया रात्रेरागमनस्यायं विघातक इति कृत्वा जातः। क्षेपीयः क्षिप्रतरम्। लपनं मुखम्। लोकचक्षुषि आदित्ये। 'कर्मसाक्षी जगच्चक्षुः' इति हलायुधः। लोकैकचक्षुषीत्यपपाठः। तदानीमस्य विशेषणत्वप्रतीतेः, विशेष्यभूतस्य पदान्तरस्याभावाच्च। प्रस्नुतमखमाहेयी प्र[4]क्षरितस्तना अग्निहोत्रधेनुः। 'माहेयी सौरभेयी गौः' इत्यमरः। ऊधः आपीनम् (ಆಂಕಿಲ್ರ್). उद्दामं निरर्गलम्। वर्धितजलमित्यर्थः। उपशल्येषु समीपभूमिषु। प्रचारः सञ्चारः। रणितरदने शब्दितदन्ते। रदति विलिखति। 'रद विलेखने' इति धातुः। सुरस्रवन्ती

---

१. कम्, स्वर्गपाताले प्रकृत्य भूलोकस्य मध्यमत्वम्, अंशु, २. क्षविक्षि, ३. संभो. ४. प्रक्षरिताग्निहोतृधेनुः–क.

**ऐरावते, प्रसृतानेकविद्याधराभिसारिकासहस्रचरणालक्तकरसानुलिप्त इव प्रकटयति पाटलतां तारापथे, *सिद्धदत्तदिनकरास्तमयार्घावर्जिते रञ्जितककुभि कुसुम्भभासि स्रवति पिनाकपाणिप्रणतिमुदितसन्ध्यास्वेद इव रक्तचन्दनद्रवे, वन्दारुमुनिवृन्दारकवृन्दबध्यमानबन्धुरसन्ध्याञ्जलिवने, ब्रह्मोत्पत्तिकमलसेवासमागतसकलकमलाकर इव राजति ब्रह्मलोके, समुच्चारिततृतीयसवनब्रह्मणि ब्रह्मणि प्रज्वलितवैतानज्वलनज्वालाजाल-जटालाजिरेष्वारब्धधर्मसाधनशिबिरनीराजनेष्विव सप्तर्षिमन्दिरेष्वघमर्षण-**

---

सुरनदी । स्वैरं स्वच्छन्दम् । प्रसृतः सञ्चरितः । अभिसारिका, 'कामात् कान्तं याति यासावविनीताभिसारिका' इति **वैजयन्ती** । तारापथे आकाशे । सिद्धेत्यादि । सिद्धदत्ते सिद्धैः सम्पादिते । दिनकरास्तमयार्घे दिनकरस्यास्त-मयरचितायां पूजाक्रियायाम् । 'मूल्ये पूजाविधावर्घः' इति **अमरसिंहः** । आवर्जिते क्षिप्ते। आवर्जनं द्रवरूपस्य वस्तुनः क्षेपः । 'आवर्जनं द्रवक्षेपे' इति **वैजयन्ती** । अर्घ्यावर्जित इति च पाठः । तदा दत्तशब्दः प्रतिपादितार्थः । सिद्धैर्दत्तात् प्रतिपादिताद् दिनकरास्तमयसमयार्घ्यात् दिनकरास्तमयसमयप्रदेयात् पूजाद्रव्यादावर्जिते विहिते । अर्घशब्दादर्घार्थमिदमित्येतस्मिन्नर्थे 'पादार्घाभ्यां च' (पा० ५.४.२५.) इति यत्प्रत्यये अर्घ्यमिति रूपम् । कुसुम्भं वस्त्रादीनां रञ्जनसाधनं द्रव्यम् । (குயும்ப)। वन्दारुः वन्दनशीलः । मुनिवृन्दारकवृन्दं मुनिमुख्यानां समूहम् । 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' (पा०सू० २.१.६२) इति समासः । 'वृन्दारकौ देवमुख्यौ इत्यमरः' । अथवा मुनीनां वृन्दारकाणां देवानां च वृन्दम् । 'वृन्दारका निर्जराः' इति **हलायुधः** । कमलाकरे कमलसमूहे । 'आकरो निकरे खनौ' इति **वैजयन्ती** । समुच्चारिततृतीयसवनब्रह्मणि समुच्चा-रिततृतीयसवनयोजनमन्त्रे । प्रज्वलितेति । वैतानज्वलनो यागाग्निः । जटालो जटावान् , निबिड इत्यर्थः । आरब्धधर्मसाधनस्य धर्मसम्बन्धिन्याः सेनायाः शिबिरस्य निवेशस्थानस्य नीराजनं शान्तिकर्म यैः । धर्मः सपरिकरोऽत्राभिराज्यं

---

१. ञारि, २. यार्घ्यं, ३, साधनभूतद्रव्यं குங்குமப்பூ. ४. याजमान. ५. निवेशनस्था—क.

मुषितकिल्बिषविषगदोल्लाघलघुषु यतिषु, सन्ध्योपासनासीनतपस्विपङ्क्तिपूतपुलिने प्लवमानपद्मयोनियानहंसदन्तुरोर्मिणि मन्दाकिनीजले, जलदेवतातपत्रे पत्ररथकुलकलत्रान्तःपुरसौधे निजमधुमधुरामोदिनि कृतमधुपमुदि मुमुदिषमाणे कुमुदवने, दिवसावसानताम्यत्तामरसमधुरससपीतिप्रीते सुषुप्सति मृदुमृणालकाण्डकण्टककण्डूयनकुण्डलीकृतकन्धरे धुतपक्षराजिवीजितराजीवरजसि राजहंसयूथे, विकटतटलताकुसुमधूलिधूसरितसरिति सरति च सकलसिद्धपुरपुरन्ध्रीनीरन्ध्रधम्मिल्लमल्लिकागन्धग्राहिणि सायन्तने तनीयसि निशानिःश्वासनिभे नभस्वति, स्वपति* सङ्कोचोदञ्चदुच्चकेसरकोटिसङ्कटकुशेशयकोशकुटीकुटिलशायिनि षट्चरणकदम्बके, नृत्तोद्धूतधूर्जटिजटाटवीकुटचकुड्मलनिकरनिभे नभस्थलं स्तवकयति तारागणे,

---

करोतीत्यभिप्रायेण सप्तर्षिमन्दिराणि शिबिरत्वेनोक्तानि। अयमर्थः—धर्मसाधनशिबिरभूतानां सप्तर्षिमन्दिराणाम् अजिरेषु ज्वलन्तो वैतानज्वलना धर्मसाधनशिबिरस्य नीराजनानला इवाभवन्निति। अघमर्षणम् 'सर्वैनसामपध्वंसि जप्यं स्यादघमर्षणम्' इति। विषगदोल्लाघो विषव्याधिना मुक्तः। 'रोगान्मुक्त उल्लाघः' इति हलायुधः। प्लवमानः सन्तरन्। यानहंसः विमानवाहको हंसः। पत्ररथः पक्षी। मधुरामोदिनि मधुरगन्धवति। मुमुदिषमाणे विकासोन्मुखे। अनिच्छायामपि सनोऽस्ति रूपम्। (कूलं) पिपतिषतीत्यादिषु यथा। ताम्यन् ग्लायन्। सपीतिः सहपानम्। कण्टकः दण्डसूची (?)। कुण्डलितं वक्रीकृतम्। वीजितं चालितम्। राजीवं पद्मम्। राजहंसो लोहितचञ्चुचरणैः सिताङ्गो हंसः। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः। सरति वाति। धम्मिल्लः केशबन्धः। सङ्कोचेन बाह्यदलसंरोधेन। उदञ्चितानां ऊर्ध्वीभवताम्। अत एवोच्चावचानां दीर्घाणाम्। कोट्या अग्रेण। सङ्कटायां कुशेशयकोशकुट्यां पद्ममुकुलाख्यगृहे कुटिलशायिनि। नृत्तोद्धूतं नृत्तरभसविक्षिप्तम्। नभस्तलं स्तबकयति तारागणे नभस्तलस्य स्तबकं कुर्वति। स्तबक इव भवतीत्यर्थः। यथा व्याकरणं

---

१. सुरभिगन्ध, २. सन्नस्ति कूलं पिप, ३. णको हंसः—क. ४. रसवि—ख. ग.

* 'सङ्कोचोदञ्चितोच्चावचकोटि...' इति [illegible]

सन्ध्यानुबन्धताम्रे परिणमत्तालफलत्वक्त्विषि कालमेघमेदुरे मेदिनीं निमीलयति नववयसि तमसि, तरुणतरतिमिरपटलपाटनपटीयसि समुन्मिषति यामिनीकर्णपूरचम्पककलिकाकदम्बके प्रदीपप्रकरे, प्रतनुतुहिनकरकिरणालोकलावण्यपाण्डुन्याश्याननीलनीरविमुच्यमानकालिन्दीकूलबालपुलिनायमाने शातक्रतवे कशयति तिमिरमाशामुखे, खमुचि मेचकितविकचकुवलयसरसि शशधरकरनिकरकचग्रहाविले विलीयमाने मानिनीमनसीव शर्वरीशबरीचिकुरचये चाषत्विषि तमसि, उदिते च भगवत्युदयगिरिशि*खरकटकतटकुहरगतहरिखरनखरनिवहहेतिनिहतनिजहरिणगलितरुधिरनिचयनिचितमिव लोहितं वपुरुदयरागधरमधरमिव विभावरीवध्वा धारयति श्वेतभानौ, अचलच्युतचन्द्रकान्तजलधाराधौत इव ध्वस्ते ध्वान्ते, गोलोकगलितदुग्धविसरवाहिनीदन्तमयमकरमुखमहाप्रणाल इव प्रवृत्ते पूरयितुं पयोधिमिन्दुमण्डले, स्पष्टे प्रदोषसमये, सावित्री शून्यहृदयामिव किमपि ध्यायन्तीं सास्रां सरस्वतीम् एवमवादीत्—'सखि! त्रिभुवनोपदेशदानदक्षायास्ते पुरो जिह्वा जिह्रेति मे जल्पन्ती । जानास्येव

---

सूत्रयतीत्यत्र व्याकरणस्य सूत्रं करोतीत्यर्थे तत्करोतीति वाक्येन णिचि कृते रूपं सम्पद्यते, तथेहापि नभस्तलस्य स्तबकं करोतीति णिचि कृते नभस्तलं स्तबकयतीति भवति । अनुबन्धः सम्बन्धः । तालो वृक्षविशेषः, (പന) । मेदुरे सान्द्रस्निग्धवर्णे । निमीलयति अन्तरयति । आश्यानं शुष्कम् । नीरं जलम् । कशयति कृशीकुर्वति । खमुचि आकाशत्यागिनि । आविले कलुषे । विलीयमाने नश्यति, द्रवति च । शबरी किरातस्त्री । चिकुरचये केशपाशे । चाषः नानावर्णच्छदः पक्षिविशेषः, (കാടൻ) । तटकटककुहरं तटकटकयोः कुहरम् । तटः प्रपातः । कटकः (മലയിനാരെപ്പുറം) । नखरो नखः । हेतिः आयुधम् । गोलोको गवां निवासलोकः । दुग्धं क्षीरम् । प्रणालः जलनिर्गमनाली, (പാത്തല°) । त्रिभुवनोपदेशदानदक्षायाः त्रिभुवनेषु विद्यमानानां सर्वेषां युगपदेव तत्तदभिमतसमस्तविद्योपदेशकरणनिपुणायाः इत्यर्थः । उपदेशदानं

---

* शिखरतटकटकेति व्याख्यानुसारी पाठः

-4-

यादृश्यो विसंस्थुला गुणवत्यपि जने दुर्जन इव निर्दाक्षिण्याः क्षणभङ्गिन्यो नातिक्रमणीया न रमणीया दैवस्य वामा वृत्तयः। निष्कारणा च निकारकणिकापि क्लेशयति मनस्विनो मानसमसदृशजनादापतन्ती। अनवरतनयनजलसिच्यमानस्तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति। अतिसुकुमारं जनं सन्तापपरमाणवोऽपि मालतीकुसुममिव म्लानिमानयन्ति। महतां चोपरि निपतन्नणुरपि सृणिरिव करिणां क्लेशः कदर्थनायालम्। सहजस्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः। दारयति च दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः। सा नार्हस्येवं भवितुम्। अभूमिः खल्वसि दुःखक्ष्वेळांकुरप्रसवानाम्। अपि च, पुराकृते बलवति कर्मणि शुभेऽशुभे वा फलकृति तिष्ठत्यधिष्ठातरि प्रष्ठे पृष्ठतश्च को वावसरो विदुषि! शुचाम्। इदं च ते त्रिभुवनमङ्गलैकभूतममङ्गलभूताः

---

उपदेशकरणम्। विसंस्थुला विषमाः। निर्दाक्षिण्याः निरानुकूल्याः। क्षणभङ्गिन्यः प्रतिक्षणं नाशिन्यः, अस्थिरा इत्यर्थः। वामाः प्रतिकूलाः। निष्कारणा अकारणोत्पन्ना। निकारकणिका विप्रियलवः। असदृशः निहीनः। अनवरतेत्यादि। अनवरतनयनजलसिच्यमानः सन्ततोद्भूतेनाश्रुणा सिच्यमानः संवर्ध्यमानः। विपल्लवः अल्पविपदपि। सहस्रधा प्ररोहति सहस्रधा उद्भवति। यथा विपल्लवोऽपि विगतकिसलयोऽपि तरुः अनवरतनयनेन अनुपरतप्रवाहेण जलेन सिच्यमानः सहस्रधा प्ररोहति तथा इति। सुकुमारं मृदुम्। सन्तापः क्लेशः, ऊष्मा च। म्लानिं खेदम्, म्लानतां च। महतां महात्मनां, तुङ्गात्मनां च। सृणिः अङ्कुशः। कदर्थनाय खेदनाय। दुस्त्यजाः त्यक्तुम् अशक्या, मोचयितुमशक्या इति च। दारयतीत्यादि। दारुणस्तीक्ष्णः। संस्तुतजनविरहो हृदयं चित्तं दारयति क्लेशयति। यथा क्रकचपातो दारुणः काष्ठस्य हृदयं मध्यप्रदेशं दारयति भिनत्ति तथेति। क्रकचं करपत्रम्, (௵७௰/००)। अभूमिरस्थानम्। क्ष्वेळाङ्कुरप्रसवानां विषप्ररोहोद्भवानाम्। अपीत्यादि। प्रष्ठे अग्रगामिनि। 'प्रष्ठोऽग्रगामिनि' (पा० सू० ८. ३. ९२.) इति निपातनम्। विदुषि! एतत् सरस्वत्याः

---

१. लब्धवसि, २ अनवरत, ३. मृदुलं-क. ४. ग्लानिं खेदं म्लानिं च-ख. ग.
५. கரவாளம்-क.

कथमिवाननमपवित्रयन्त्यश्रुबिन्दवः। तदलम्। अधुना कथय कतमं भुवो भागमलङ्कर्तुमिच्छसि। कस्मिन्नवतितीर्षति वा पुण्यभाजि प्रदेशे हृदयम्। कानि वा तीर्थान्यनुग्रहीतुमभिलषसि। केषु वा धन्येषु तपोधनधामसु तपस्यन्ती स्थातुमभिवाञ्छसि। सज्जोऽयमनुसरणचतुरः सहपांसुक्रीडा-परिचयपेशलः प्रेयान् सखीजनः। कृतक्षितितलावतरणसङ्कल्पा चानन्य-शरणाद्यप्रभृति प्रतिपद्यस्व मनसा वचसा क्रियया च सर्वविद्याविधातारं धातारं श्वःश्रेयसाय स्वचरणरजःपवित्रीकृतत्रिदशासुरं सुधासूतिकला-कलिकाकलितावतंसकं देवदेवं त्रिभुवनगुरुं त्र्यम्बकम्। 'अल्पीयसैव कालेन स ते शापशोकविरतिं वितरिष्यती'ति।

तयैवमुक्ता मुक्तमुक्ताफलधवललोचनजललवा प्रत्यवादीत्। 'प्रिय-सखि! त्वया सह विहरन्त्या न मे काञ्चिदपि पीडामुत्पादयिष्यति ब्रह्म-लोकविरहः शापशोको वा। केवलं कमलासनसेवासुखमार्द्रयति मे हृदयम्। अपिच, त्वमेव वेत्सि भुवि धर्मधामानि समाधिसाधनानि योगयोग्यानि च स्थातुं स्थानानी'त्यभिधाय विरराम। रणरणिकोपनीय-मानप्रजागरा चोन्मीलितलोचनैव तां निशामनैषीत्।

---

सम्बोधनम्। अपवित्रयन्ति अशुद्धयन्ति। अमुना शोकादिनेति शेषः। तपस्यन्ती तपश्चरन्ती। सज्ज उद्युक्तः। पेशलः सस्नेह इत्यर्थः। प्रेयान् प्रियतरः। अनन्यशरणा अन्यः शरणं रक्षिता यस्या न भवति सा अनन्यशरणा। 'शरणं गृहरक्षित्रोः' इत्यमरः। प्रपद्यस्व शरणं गच्छ। धातारं स्रष्टारम्। श्वःश्रेयसाय कल्याणाय। सुधासूतिश्चन्द्रः। 'चन्द्रमास्तु सुधासूतिः' इत्यमरः। कलिका कोरकः। अवतंसः शेखरम्। विरतिं नाशम्। वितरिष्यति दास्यति।

विहरन्त्याः सञ्चरन्त्याः। 'विहारस्तु परिक्रमः' इत्यमरः। केवलम् एकः। 'निर्णीते केवलमिति त्रिलिङ्गस्त्वेककृत्स्नयोः' इत्यमरशेषः। समाधिः चित्तवृत्तेरवधानम्। स्थातुं वेत्सीत्यन्वयः। स्थातुं क्षमाणि स्थानानीति केचित् पठन्ति। रणरणिका चित्तव्याकुलता। प्रजागरो निद्राभावः।

अथापरेद्युरुदिते भगवति त्रिभुवनशेखरे तुरगमुखखणखणायितखरखलीनक्षतक्षरत्क्षतजेनेव पाटलितवपुष्युदयाचलकिरीटचूडामणौ जरत्कृकवाकुचूडारुणेऽरुणपुरस्सरे विरोचने विरोचमाने नातिदूरवर्ती पितामहविमानहंसकुलपालकः पर्यटन्नपरवक्त्रमुच्चैरगायत्—

‘तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते!।
अवतर कलहंसि! वापिकां पुनरपि यास्यसि पङ्कजालयम्॥’

तच्छ्रुत्वा सरस्वत्यप्यचिन्तयत्। ‘अहमिवानेन पर्यनुयुक्ता। भवतु मानयामि मुनेर्वचन’मित्युत्थाय कृतक्षितितलावतरणसङ्कल्पा परित्यज्य वियोगविक्लवं सपरिजनं ज्ञातिवर्गमपगणा त्रिः प्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनयनिवर्तितानुयायिव्रतिव्राता ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम।

ततः क्रमेण ध्रुवपदप्रवृत्तां धर्मधेनुमिवाधोधावमानधवलपयोधराम्,

---

खणखणायितं खणखणेति शब्दितम्। खलीनं कविका, (മുഖക്കയറ്)। क्षतं कृत्तम्। क्षतजं रक्तम्। कृकवाकुचूडा कुक्कुटशिखा। विरोचने सूर्ये। विरोचमाने दीप्यमाने। पर्यटन् परितः सञ्चरन्। तरलयसीत्यादि इदं सरस्वत्या इव श्रुतेश्च भवति। अकलुषमानसं प्रसन्नमानससरः, शुद्धमन इति च। पङ्कजालयं पद्माकरम्, ब्रह्माणमिति च। अहमिवानेन पर्यनुयुक्ता अहमनेन पर्यनुयुक्तेव। पर्यनुयोगो नियोगः। उपालम्भ इति केचित्। भवतु सम्प्रधारणे। ज्ञातिवर्गं बन्धुसमूहम्। अपगणा अपगतसमूहा। व्रतिव्रातः मुनिसमूहः।

ध्रुवपदप्रवृत्तां ध्रुवपदो[1] नक्षत्रस्थानम्, आकाशमित्यर्थः। तेनागताम्; अन्यत्र ध्रुवो बन्धनार्थं स्थापितः कीलः, तस्य पदे[2] स्थाने[3] प्रवृत्तां प्रकर्षेण वर्तनयुक्ताम्। बन्धनस्थाने निवर्तयन्तीमित्यर्थः। ‘स्थाणुर्वा ना ध्रुवः शङ्कुः’ इत्यमरः। ध्रुवप्रवृत्तामिति च पाठः। ध्रुवमूलप्रवृत्ताम् इत्यर्थः। अधोधावमानधवलपयोधराम् अधोधावमानानाम् अधोभागे प्रवहतां धवलानां शुभ्राणां पयसां जलानां धरां धारयित्रीम्। अथवा अधोधावमाना अधोगच्छन्तो धवला मेघा यस्याः।

---

१. ध्रुवो नक्षत्रविशेषः तस्य पदं स्थानं आकाशमित्यर्थः २. पदेन ३. तेन.

उद्धुरध्वनिमन्तकमथनमौलिमालतीमालिकाम्, आलीयमानवालखिल्यरुद्ध-रोधसमरुन्धतीधौततारवत्वचं, त्वङ्गत्तुङ्गतरङ्गतरळिततारकां, तापसविकीर्ण-तरळतिलोदकपुळकितपुळिनाम्, आप्लवनपूतपितामहपातितपितृपिण्डपाण्ड-रिततीराम्, पर्यन्तसुप्तसप्तर्षिकुशशयनसूचितसूर्यग्रहसूतकोपवासाम्, आच-मनशुचिशचीपतिमुच्यमानशिवार्चनकुसुमशारां, शिवपुरपतितनिर्माल्य-मन्दारदामकामानादरदारितमन्दरदरीदृषदम्, अनेकनाकनायकनिकाय-कामिनीकुचकलशलुळितविग्रहां, ग्रहग्रावस्खलितमुखरवहुस्रोतसं सुषुम्नास्नुत-शशिसुधाशीकरस्तवकतारकिततीरां, धिषणाग्निकार्यधूमधूसरितसैकतां, सिद्धविरचितवालुकालिङ्गलङ्घनत्रासविद्रुतविद्याधरां, निर्मोकमुक्तिमिव गगनोरगस्य, लीलाललाटिकामिव त्रिविष्टपविटस्य, विक्रयवीथीमिव पुण्य-पण्यस्य, दन्तार्गलामिव नरकनगरस्य, अंशुकोष्णीषपट्टिकामिव सुमेरोः,

---

'चारौ श्रेष्ठे वृषे श्वेते धवलो धवली गवि' इति वैजयन्ती। उद्धुरं उद्धतम्। अन्तकमथनः ईश्वरः। आलीयमानाः क्रियमाणवासाः। बालखिल्याः आदित्य-पुरोगामिनः अङ्गुष्ठमात्रा मुनयः। धौतं शोधितम्। तारवं तरुसम्बन्धि। त्वङ्गत् चलत्, 'त्वगि चलने' इति धातुः। पुलकितं पुलकयुक्तम्। आप्लवनं स्नानम्। पातितं दत्तम्। सूचितसूर्यग्रहसूतकोपवासः ग्रहो ग्रहणं, सूतकम् आशौचम्। सूर्यग्रहणनिमित्तमाशौचे क्रियमाण उपवास इत्यर्थः। 'सूर्यग्रहणे लोकस्या-शौचम्' इति शास्त्रविदो वदन्ति। तथोक्तं च—'सर्वेषामेव वर्णानां सूतकं राहु-दर्शनम्। स्नात्वा कर्माणि कुर्वीत श्रृतमन्नादि वर्जयेत्॥' इति। आचमन-मुपस्पर्शः। शिवपुरं शिवलोकः। निर्माल्यम् अनुभूयोज्झितमाल्यम्। मन्दारः सुरतरुविशेषः। दाम माला। अनादरम् अयतनम्। नाकनायका देवाः। ग्रहग्राव-(स्खलितं) सूर्यादिग्रहाख्यपाषाणस्खलितम्। सुषुम्ना चन्द्रानुबन्धी सूर्यरश्मिविशेषः। स्तबकः पुञ्ज इत्यर्थः। धिषणो बृहस्पतिः। अग्निकार्यं होमः। वालुकालिङ्गं वालुकाकृतं शिवलिङ्गम्। निर्मोकः सर्पत्वक्। ललाटिका ललाटे चन्दनादिभिः कृतो रेखाविशेषः। 'रचिता ललाटपट्टे ललाटिका कथ्यते रेखा' इति हलायुधः। वीथी रथ्या। पण्यं विक्रययोग्यं वस्तु। अर्गला परिघः (കണ്ണയാറം) नरकाख्यनगरस्य।

---

१. [illegible] २. [illegible]—क. ३. मग्न। मग्नें—ख. ग. ४. स्नानकर्माणि—क.

दुकूलकदलिकामिव कैलासकुञ्जरस्य, पद्धतिमिवापवर्गस्य, नेमिमिव कृतयुगस्य, सप्तसागरराजमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकमवततार।

अपश्यच्चाम्बरस्यैव हारमिव वरुणस्य, अमृतनिर्झरजलमिव चन्द्राचलस्य, शशिमणिनिष्यन्दमिव विन्ध्यस्य, कर्पूरद्रवप्रवाहमिव दण्डकारण्यस्य, लावण्यरसप्रस्रवणमिव दिशां, स्फटिकमणिशिलापट्टकशयनमिवाम्बरश्रियः, स्वच्छशिशिरसरसवारिपूर्णं भगवतः पितामहस्यापत्यं हिरण्यबाहुनामानं महानदं, यं जनाः शोण इति कथयन्ति। दृष्ट्वा च रामणीयकहृतहृदया तस्यैव तीरे वासमरोचयत्। उवाच च सावित्रीम्—'सखि! मदमधुरमयूरविरुतयः कुसुमपांसुपटलसिकतिलतरुतलाः पुष्पपरिमलमत्तमधुपश्रेणीवीणारणितरमणीया रमयन्ति मां मन्दीकृतमन्दाकिनीद्युतेरस्य महानदस्योपकण्ठभूमयः। पक्षपाति च मे मनः स्थातुमत्रैवे'ति। अभिनन्दितवचना च तथेति तया तस्य पश्चिमे तीरे वासं कर्तुमवातरत्। एकस्मिंश्च शुचौ शिलातलसनाथे तटलतामण्डपे गृहबुद्धिं बबन्ध। विश्रान्ता च तत्र नातिचिरादुत्थाय सावित्र्या सार्धमुच्चितार्चनकुसुमा सस्नौ। पुलिनपृष्ठप्रतिष्ठापितसैकतशिवलिङ्गा भक्त्या परमया पञ्चब्रह्मपुरःसरां सम्यङ् मुद्रां बबन्ध। विहितपरिकरा ध्रुवागीति-

---

अंशुकोष्णीषपट्टिकां सूक्ष्मवस्त्रेण कृतां शिरोवेष्टनकक्ष्याम्। 'उष्णीषं शिरोवेष्टकिरीटयोः' इत्यमरः। दुकूलकदलिकां शुक्लवस्त्रकृतकेतुम्। 'दुकूलं शुक्लवस्त्रेऽपि', 'कदली करिणां केतुः' इति च वैजयन्ती। पद्धतिं मार्गम्। नेमिं सीमाम्।

निष्यन्दं प्रस्रवणम्। रामणीयकं रमणीयता। वासं वर्तनम्। अरोचयत् श्रद्दधे। विरुतयः शब्दाः। सिकतिलं सिकतायुक्तम्। तरुतलस्य देशत्वात् 'देशे लुबिलचौ च' (पा०सू० ५.२.१०५.) इति इलच् प्रत्ययः। तलं मूलदेशः। रमयन्ति सुखयन्ति। पक्षपाति पक्षपातयुक्तम्। सनाथे युक्ते। उच्चितम् उपचितम्। पुलिनपृष्ठं पुलिनोपरिभागः। सैकतलिङ्गं सिकताविरचितं शिवलिङ्गम्। परमया उत्तमया पञ्चब्रह्मपुरस्सरां पञ्चब्रह्मजप-

---

१. क्ष्याम्। 'अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः' इति वैजयन्ती। उष्णीषं—क.

* सैकतलिङ्गेति व्याख्यानुसारी पाठः.

गर्भामवनिपवनगगनदहनतपनभुवनतुहिनकिरणयजमानमयीर्मूर्तीरष्टावपि ध्यायन्ती सुचिरमष्टपुष्पिकामदात्। अयत्नोपनतेन फलमूलेनामृतरसमप्यतिशिशयिषमाणेन तेन च स्वादुना शिशिरेण शोणवारिणा शरीरस्थितिमकरोत् । अतिवाहितदिवसा च तस्मिन्नेव लतामण्डपशिलातले कल्पितपल्लवशयना सुष्वाप । अन्येद्युरप्यनेनैव क्रमेण नक्तंदिवमत्यवाहयत् ।

एवमतिक्रामति काले, गच्छत्सु दिवसेषु, कदाचिद्यामममात्रमिवोद्गते रवौ, उत्तरस्यां दिशि, प्रतिशब्दपूरितवनगह्वरं गम्भीरतारं तुरङ्गहेषितह्रादमश्रृणोत्। उपजातकुतूहला च निर्गत्य लतामण्डपाद् विलोकयन्ती विकचकेतकीगर्भपत्ररेणुपाण्डरं रजस्सङ्घातं नातिदवीयसि प्रदेशे व्यलोकयत् सम्मुखमापतन्तम्। क्रमेण च सामीप्योपजायमानाभिव्यक्ति तस्मिन्नेव महति रजसि शफरोदरधूसरे पयसि मकरचक्रमिव प्लवमानम्, पुरः प्रधावमानेन

---

पूर्विकाम् । 'सद्योजातं प्रपद्यामी'त्यादिमन्त्रपञ्चकं पञ्चब्रह्म । श्रीपञ्चाक्षरमन्त्र इति केचित् । मुद्रा हस्तबन्धनविशेषः । विहितपरिकरा तत्तदाराधनोपकरणसंयुक्ता । ध्रुवागीतिः देवताप्रीणनो गीतिविशेषः । भुवनं जलम् । अष्टपुष्पिकाम्, 'भवायेत्यादिभिर्मन्त्रैरष्टमूर्तेस्तथाष्टभिः । अष्टौ मूर्तीरपि ध्यात्वा प्रयुक्ता चाष्टपुष्पिका ॥' अष्टाभ्यो मूर्तिभ्यो दातव्यानि पुष्पाणि च । 'बुकः पेणः सधुर्धूरः सुमनाः पाटला तथा। पद्ममुत्पलगोसूर्यमष्टौ पुष्पाणि शङ्करे ॥' इत्युक्तान्येतानि। स्थितिं धारणाम् । अतिवाहितं गमितम् । अन्येद्युः अन्यतरस्मिन्नहनि । 'सद्यः परुत्—' (पा०सू०६.३.२२.) इत्यादिना निपातनम् । नक्तंदिवं सप्तम्यर्थवृत्त्योरव्यययोरपि नक्तंदिवाशब्दयोः 'अचतुर' (पा०सू०५.४.७७.) इत्यादिसूत्रेण निपातनादेव समासः, समासान्तोऽच् प्रत्ययश्च । रात्र्यहनी इत्यर्थः ।

एवमतिक्रामतीत्यादि। याममात्रमिवोद्गते रवौ दिवसस्य याममात्रेऽतीत इत्यर्थः। गम्भीरतारं मन्द्रोच्चम्। हेषितह्रादं हेषितशब्दम्। विकचं विकसितम्। नातिदवीयसि नातिदूरे । सामीप्योपजायमानाभिव्यक्ति अश्ववृन्दं ददर्शेति सम्बन्धः । अभिव्यक्तिः स्फुटत्वम् । चक्रं समूहः । प्लवमानं धावमानं,

**प्रलम्बकुटिलकचपल्लवघटितललाटचूलिकेन धवलदन्तपत्रद्युतिहसितकपोलभित्तिना पिनद्धकृष्णागुरुपङ्ककल्कच्छुरणकृष्णशबलकषायकञ्चुकेनोत्तरीयकृतशिरोवेष्टनेन वामप्रकोष्ठनिविष्टहाटककटकेन द्विगुणपट्टपट्टिकागाढग्रन्थिग्रथितासिधेनुना सततव्यायामकृशकर्कशशरीरेण वातहरिणयूथेनेव मुहुर्मुहुः खमुड्डीयमानेन लङ्घितसमाविषमावटतटप्रपातविटपेन कोणधारिणा कृपाणपाणिना च सेवागृहीतविविधवनकुसुमफलमूलपर्णेन 'चल चल याहि याहि अपसर्पापसर्प पुरः प्रयच्छ पन्थानम्' इत्यनवरतकृतकलकलेन युवप्रायेण सहस्रमात्रेण सर्वपदातिजनेन सनाथमश्ववृन्दं ददर्श ।**

**मध्ये च तस्य सार्धचन्द्रेण मुक्ताफलजालिना विविधरत्नखण्डखचितेन शङ्खक्षीरफेनपिण्डपाण्डरेण क्षीरोदेनेव स्वयं लक्ष्मीं दातुमागतेन**

---

सन्तरच्च । कचपल्लवः केशबन्धः, (കുറുനിര[1]) । चूलिका स्रगादिभिर्वेष्टितः केशबन्धः, (ചുഴിയം[2]) । दन्तपत्रं दन्तरचितं कर्णभूषणम् । हसितं हासयुक्तम् । धवलीकृतमित्यर्थः । पिनद्धः सम्बद्धः । कृष्णागुरुपङ्कः कृष्णागुरुप्रकृतिकः पङ्कः, (ചാന്തു°) । कल्कं, (കൊട്ടം[3]) । छुरणं सम्बन्धः । कषायं कषायगन्धयुक्तं; कषायशब्दस्य गुणगुणिनोरुभयोरपि वृत्तिरस्ति । तथा—'एते सत्यादयः शब्दाः शब्दस्पर्शादिगोचराः । उक्तलिङ्गा गुणार्थास्ते सर्वेऽपि गुणिनि त्रिषु ॥' इति सत्यादिशब्दानां गुणगुणिनोर्वाचकत्वे लिङ्गवृत्तिभेदं दर्शयता **वैजयन्ती**कारेण दर्शितं च । कषायशब्दश्च सत्यादिष्वन्तर्भूतः । कषायः सुरभिर्गन्धः 'सुरभिः कटुस्तिक्तः कषायकः' इति **वैजयन्ती** । हाटककटकं सौवर्णवलयम् । द्विगुणाः द्विवेष्टनाः । पट्टपट्टिका पट्टनिर्मिता कक्ष्या, (പട്ടക്കച്ച) । असिधेनुः छुरिका, (പത്തിരം) । 'स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका' इत्यमरः । व्यायामः श्रमः । कृशम् अमेदस्कम् । वातहरिणो मृगजातिविशेषः । उड्डीयमानेन उत्प्लवमानेन । अवटं निम्नम् । तटप्रपातः पारिकटकम् (?) । विटपः शाखा । अत्र मार्गगतवृक्षशाखा विवक्षिता । कोणो लगुडः ।

अर्धचन्द्रः अर्धचन्द्राकार आभरणविशेषः, अर्धशशाङ्कश्च । मुक्ताफलजालिना लम्बितमौक्तिकेन; अन्यत्र मुक्तायुक्तेन । विविधेत्याद्युभयत्र

---

१. குழல் கட்டு, २. சுழியம், ३. கோஷ்டு—क.

**गगनगतेनातपत्रेण कृतच्छायम्, अच्छाच्छेनाभरणदीधितीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेनानुगम्यमानम्, आनितम्बावलम्बिन्या मालतीशेखरस्रजा सकलभुवनविजयार्जितया रूपपताकयेव विराजमानम्, उत्सर्पिभिः शिखण्डकपद्मरागमणेररुणैरंशुजालैरदृश्यमानवनदेवताविधृतैर्बालपल्लवैरिव प्रमृज्यमानमार्गरेणुपरुषवपुषं, बकुलमण्डलीमुण्डमालामण्डनेन मनोहारिणा कुटिलकुन्तलस्तबकमालिना मौलिना मीलितातपं पिबन्तमिव दिवसं, पशुपतिजटामुकुटमृगाङ्कद्वितीयशकलघटितस्येव सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनःशिलापङ्कपिङ्गलेन लावण्येन लिम्पन्तमिवान्तरिक्षम्, अभिनवयौवनावष्टम्भप्रगल्भदृष्टिपाततृणीकृतत्रिभुवनस्य चक्षुषः प्रथिम्ना विकचकुमुदकुवलयकमलसरस्सहस्रसंछादितदशादिशं शरत्संपदमिव प्रवर्तयन्तम्, आयतनयननदीसीमान्तसेतुबन्धेन ललाटशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा घोणावंशेन विराजमानम्, अतिसुरभिसहकारकर्पूरतकोललवङ्गपारिजातपरिमळमुचा मत्तमधुकरकुलकोलाहलमुखरितेन मुखमारुतेन सनन्दनवनं वसन्तमिव वमन्तम्,**

---

समानम् । रत्नखण्डं रत्नशकलम् । शङ्खक्षीरफेनपिण्डपाण्डरेण शङ्खक्षीरफेनपिण्डवत् पाण्डरेण । अन्यत्र शङ्खैः क्षीराणां फेनपिण्डैश्च पाण्डरेण । रूपपताकया रूपशोभाप्रकाशनाय बद्धया पताकया । शिखण्डकः शिरसि बद्ध आभरणविशेषः । परुषं रूक्षम् । बकुलमण्डलीमुण्डमाला बकुलपुष्पकृता वेष्टनेन मुण्डाकारा शिरोमाला । कुटिलं वक्रम् । कुन्तलस्तबकः केशगुच्छः[1] । मौलिना बद्धकेशेन । मीलितम् अप्रकाशीकृतमित्यर्थः । लावण्येन, 'भूयिष्ठं तेज एवाङ्गैर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजननं लावण्यमिति कथ्यते ॥' इति दिवाकरः । अवष्टम्भः सत्त्वबलम् आक्रमणं वा । तृणीकृतं तृणवदवज्ञातम् । सीमान्तं सीमावसानम् । द्राघीयसा दीर्घतरेण । घोणावंशेन नासिकादण्डेन, (മൂക്കുതണ്ട്) । 'वंशः पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणे कुले । नासोर्ध्वास्थीक्षुभेदे च' इति वैजयन्ती । तक्कोलं कोशफलम्, (തക്കോലപ്പുട്ടൽ) । लवङ्गं देवपुष्पम्, (ഇലവങ്കം) । पारिजातं जातिफलम्, (ജാതിക്ക) । वमन्तं उद्गिरन्तम् ।

---

1. केशगुच्छः=மயிர்க்கொத்து.

आसन्नसुहृत्परिहासभावनोत्तानितमुखमुग्धहसितैर्दशनज्योत्स्नास्नपितदिङ्मुखैः पुनःपुनर्नभवलिसञ्चारिणं चन्द्रालोकमिव कल्पयन्तं, कदम्बमुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिकण्टककर्णाभरणस्य प्रेङ्खतः प्रभया समुत्सर्पन्त्या कृतसकुसुमहरितकुन्दपल्लवकर्णावतंसकृत्यमिवोपलक्ष्यमाणम्, आमोदिमृगमदपङ्कलिखितमकरमुखपत्रभङ्गभास्वरं भुजयुगलमुद्दाममकराक्रान्तशिखरमिव मकरकेतुकेतुदण्डद्वयं दधानं, धवलब्रह्मसूत्रसीमन्तितं सागरमथनसामर्षगङ्गास्रोतस्सन्दानितमिव मन्दरं देहमुद्वहन्तं, कर्पूरक्षोदमुष्टिच्छुरणपांसुलेन युवतिजनकुचचक्रवाकयुगलविपुलपुलिनेनोरःस्थलेन स्थूलभुजायामपुञ्जितं पुनर्विस्तारयन्तमिव दिक्चक्रवालं, पुरस्तादीषद्विधानाभिनिहितैककोणकमनीयेन पृष्ठतलकक्ष्याधिकक्षिप्तपल्लवेनोभयतस्संवलनप्रकटितोरुत्रिभागेण हारीतहरितेन निबिडनिपीडितेनाधरवाससा विभज्यमानतनुतरमध्यभागम्, अनवरतश्रमोपचितमांसबन्धविकटमकरमुखमग्रजानुभ्यां विशालवक्षःस्थलोपलवेदिकोत्तम्भनशिलास्तम्भाभ्यां चारुचन्दनस्थासकस्थूलतरकान्तिभ्यामूरुदण्डाभ्यामपहसन्तमिवैरावत—

---

परिहासभावना नर्मालापसम्भावना। उत्तानितमुखं उन्मुखीकृतमुखम्। मुग्धं सौम्यम्। 'मुग्धं सौम्ये नवे मूढे' इति वैजयन्ती। त्रिकण्टककर्णाभरणस्य त्रिकण्टकफलाकारस्य कर्णाभरणस्य। त्रिकण्टको गोक्षुरकः, (ഞെരിഞ്ഞി)। 'गोक्षुरः स्थलशृङ्गाटः श्वदंष्ट्रः स्यात् त्रिकण्टके' इति हलायुधः। प्रेङ्खतः चलतः। 'इखि चलन' इति धातुः। कुन्दः लताविशेषः, (കുരു°)। मृगमदः कस्तूरी। पत्रभङ्गः पत्रच्छेदः, (പത്തിക്കീറ°)। सीमन्तितं सीमन्तयुक्तम्। सीमन्तः केशमध्यपद्धतिः। सीमन्ताकारोपेतमित्यर्थः। सागरेत्यादि। सागरस्य पत्नीत्वाद् गङ्गायाः सामर्षत्वम्। सन्दानितं बद्धम्। 'बद्धे सन्दानितम्' इत्यमरः। क्षोदश्चूर्णः। पांसुलेन पांसुयुक्तेन। आयामः दैर्घ्यम्। कोणः प्रान्तः। तलकक्ष्या गुह्यपिधानम्, (കീഴ്°കച്ചോത്ത)। पल्लवं वस्त्रान्तम्। संवलनं सङ्कोचनम्। त्रिभागः तृतीयो भागः। हारीतः हरितवर्णः पक्षिविशेषः, (പച്ചക്കിളി)। हरितेन हरितवर्णेन। निबिडनिपीडितेन दृढबद्धेन। श्रमो व्यायामः, (ഖിരമം)। उपचितो वृद्धः। विकटस्तुङ्गः। मकरमुखः जानुसन्धिबन्धः। उत्तम्भनं धारणम्। चन्दनस्थासकः चन्दनचर्चा। 'चर्चा तु चार्चिक्यं स्थासकः' इत्यमरः।

---

१. அழுபோக்கு, २. संवलनं=திரைப்பு—क.

[illegible]

करायामम्, अतिभरितोरुभारवहनखेदेनेव तनुतरं जङ्घाकाण्डं वहन्तम्, कल्पपादपपल्लवपाटलस्योभयपार्श्वविलम्बिनः पदद्वयस्य डोलायमानै-र्नखमयूखजालकैरश्वमण्डनचामरमालामिव रचयन्तम्, अभिमुखमुच्चै-रुदञ्चद्भिरतिचिरमुपरिविश्राम्यद्भिरिव वल्गनविकटं, पतद्भिः खुरैः खण्डितभुवि प्रतिक्षणं दशनग्रहणविमुक्तिखणखणायितखरखलीने दीर्घ-घ्राणलीनलालिके ललाटपट्टिकालुठितचारुचामीकरचक्रके शिञ्जानशात-कुम्भायानशोभिनि मनोरंहसि गोलाङ्गूलकपोलकान्तिकायरोम्णि नील-सिन्दुवारवर्णे वाजिनि महति समारूढम्, उभयतः पर्याणपट्टिकाश्लिष्टहस्ता-भ्यामासन्नपरिचारकाभ्यां दोधूयमानधवळचामरयुगळम्, अग्रतः पठतो वन्दिजनस्य सुभाषितमुत्कण्टकितकपोलफलकेन लग्नकर्णोत्पलकेसरशकले-नेव मुखशशिना भावयन्तम्, अनङ्गयुवावतारमिव दर्शयन्तम्, चन्द्रमयीमिव सृष्टिमुत्पादयन्तं, विलासमयमिव जीवलोकं जनयन्तम्, अनुरागमयमिव सर्गान्तरमानयन्तं, शृङ्गारमयमिव दिवसमापादयन्तं, रागराज्यमिव प्रवर्तयन्तम्, आकर्षणाञ्जनमिव चक्षुषोः, वशीकरणमन्त्रमिव मनसः, स्वस्थावेशचूर्णमिवेन्द्रियाणाम्, असन्तोषमिव कौतुकस्य, सिद्धियोगमिव

---

भरितं पूर्णम् । जङ्घाकाण्डं जङ्घास्तम्बम् । अभिमुखं मुखाभिमुखम् । उदञ्चद्भिः उद्गच्छद्भिः । वल्गनं चलनविशेषः, ([illegible]) । विकटं सुन्दरम् । लालिका नासारज्जुः, (മൂക്കുകയറ്) । 'नासारज्जुस्तु लालिका' इति वैजयन्ती । ललाटपट्टिकालुठितं ललाटगतपट्टिकायां लिखितपट्टिकायां परावृत्तम् । चक्रं चक्राकार आभरणविशेषः । शिञ्जानं शब्दायमानम् । 'शिजि अव्यक्ते शब्दे' इति धातुः । आयानम् अश्वालङ्कारविशेषः । 'आयानं स्यादलङ्कारः' इति वैजयन्ती । गोलाङ्गूलः कृष्णमुखमर्कटः, ([illegible]) । 'गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः' इति हलायुधः । पर्याणं पल्ययनम्[2] । आसन्न अन्तरङ्गः । दोधूयमानं पुनःपुनर्धूयमानम् । 'धूञ् कम्पने' इति धातोर्यङि शानचि (यङ्लुकि) च कृते रूपम् । उत्कण्टकितं अतीव कण्टकितम् । भावयन्तं लालयन्तम् । स्वस्थावेशचूर्णं स्वस्था अभ्रान्ता आविश्यन्ते भ्राम्यन्ते येन चूर्णेन स स्वस्थावेशचूर्णः । सिद्धियोगं सिद्धि-

---

१. पर्ययनं—ख.ग. २. [illegible]—क.

सौभाग्यस्य, पुनर्जन्मदिवसमिव मन्मथस्य, रसायनमिव यौवनस्य, एकराज्यमिव रामणीयकस्य, कीर्तिस्तम्भमिव रूपस्य, मूलकोशमिव लावण्यस्य, पुण्यकर्मपरिणाममिव संसारस्य, प्रथमाङ्कुरमिव कान्तेः, सर्गाभ्यासफलमिव प्रजापतेः, प्रतापमिव विभ्रमस्य, यशःप्रवाहमिव वैदग्ध्यस्य, अष्टादशवर्षदेशीयं युवानम् अद्राक्षीत् ।

पार्श्वे च तस्य द्वितीयं संसक्ततुरङ्गमपरं प्रांशुमुत्तप्ततपनीयस्तम्भावदातं, परिणतवयसमपि व्यायामकठिनकायं, नीचनखश्मश्रुकेशं, शुक्तिखलतिम्, ईषत्तुन्दिलं, लोमशोरःस्थलम्, अनुल्बणोदारवेषतया जरामपि विनयमिव शिक्षयन्तं, गुणानपि गौरवमिवारोपयन्तं, महानुभावतामपि शिष्यतामिव नयन्तम्, आचारस्याप्याचार्यकमिव कुर्वाणं, वलक्षवारबाणधारिणं धौततनुदुकूलपट्टिकापरिवेष्टितमौलिं पुरुषम् ।

---

सङ्गतिं, स्वरूपसम्पत्त्युपायम् इति वा । रसायनं शरीरसिद्धिकरमौषधम् । कीर्तिस्तम्भं जयस्तम्भम् । रूपस्य सौन्दर्यस्य । 'रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु । सौन्दर्ये च स्वभावे च' इति वैजयन्ती । मूलकोशं कुलधनम् । अष्टादशवर्षदेशीयं अष्टादशवर्षकल्पम् । ईषदसमाप्तौ देशीयर् प्रत्ययः ।

पार्श्वे इत्यादि । पार्श्वे पृष्ठेऽपरं पुरुषं चाद्राक्षीदिति सम्बन्धः । संसक्तं संश्लिष्टम् । प्रांशुं तुङ्गम् । अवदातं गौरवर्णम् । '*अवदातः परिशुद्धे सिते काञ्चनसन्निभे' इति वैजयन्ती । नीचम् अदीर्घम् । शुक्तिखलतिं शुक्तिवत् खलतिम् । ललाटप्रान्तयोः शुक्त्याकारवत् क्षीणकेशमित्यर्थः । 'खलतिः शिपिविष्टः स्याद्' इति हलायुधः । ईषत्तुन्दिलम् ईषदुन्नतोदरम् । तुन्दम् अस्यास्तीति 'तुन्दादिभ्य इलच्च' (पा० सू० ५. २. ११७.) इति इलच्प्रत्ययः । 'तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः' इत्यमरः । लोमशं लोमयुक्तम् । 'लोमादि—' (पा० सू० ५. २. १००) इति सूत्रेण मत्वर्थीयः शः । अनुल्बणोदारवेषतया, एतदेवोत्तरत्र वाक्यचतुष्टयेऽपि जरादीनां विनयशिक्षणादौ प्रत्येकं हेतुर्भवति । अनुल्बण अनुद्धतः । जरामपि विनयमिव शिक्षयन्तम् । अपिशब्दो जरायाः स्वभावत एव विनयहेतुत्वं द्योतयति । आचार्यकम् आचार्यत्वम् । वलक्षवारबाणं धवलकञ्चुकम् । 'वलक्षो धवलोऽर्जुनः ।' इत्यमरः ।

---

१. खलतिं=கருண்முடி, २. 'अनुद्धुक्तम्'-क.

* 'अवदातः सिते गौरे शुद्धे चाथावलम्बिते' इति मुद्रितपुस्तके आनुपूर्वी दृश्यते.

अथ स युवा पुरोयायिनां यथादर्शनं प्रतिनिवृत्य विस्मयमानमनसां कथयतां पदातीनां सङ्काशादुपलभ्य दिव्याकृति तत्कन्यकायुगलम्, उपजातकुतूहलः प्रतूर्णतुरङ्गो दिदृक्षुस्तं लतामण्डपोद्देशमाजगाम । दूरादेव च तुरगादवततार । निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यामेव सविनयमुपससर्प । कृतोपसङ्ग्रहणौ च तौ सावित्री समं सरस्वत्या किसलयासनदानादिना कुसुमफलार्घ्यावसानेन वनवासोचितेनातिथ्येन यथाक्रममुपजग्राह । आसीनयोश्च तयोरासीना नातिचिरमिव स्थित्वा तं द्वितीयं प्रवयसमुद्दिश्याब्रवीत् । 'आर्य सहजलज्जाधनस्य प्रमदाजनस्य प्रथमाभिभाषणम् अशालीनता, विशेषतो वनमृगीमुग्धस्य कुमारीजनस्य । केवलमियमालोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः । प्रथमदर्शने चोपायनमिवोपनयति सज्जनः प्रणयम् । अप्रगल्भमपि जनं प्रभवता प्रश्रयेणार्पितं मनो मध्विव वाचालयति ।

---

पदातीनां सङ्काशात् पदातीनां सन्निधेः । 'सङ्काशं सन्निधौ' इति वैजयन्ती । पदातिभ्य इति प्रयोक्तव्ये सङ्काशशब्दो वाक्यालङ्कारार्थे प्रयुक्तः । उपलभ्य अनुभूयेत्यर्थः । 'उपलम्भस्त्वनुभवः' इत्यमरः । प्रतूर्णतुरङ्गः अतित्वरिताश्वः । साधुना आर्येण । उपसङ्ग्रहणं पादग्रहणेन अभिवादनम् । आतिथ्येन अतिथिपूज(ायोग्य?)या, उपजग्राह अनुकूलयाञ्चकार; गृहीतवती वा । 'उपग्रहः स्तुतौ च स्याद् ग्रहणेऽप्यनुकूलने' इति वैजयन्ती । प्रवयसं वृद्धम्[1] । 'प्रवयाः स्थविरो वृद्धः' इत्यमरसिंहः । शालीनता[2] अधृष्टता । 'शालीनकौपीने अधृष्टाकार्ययोः'(पा०सू०५.२.२०.) इति[3] निपातः । 'स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्वितः' इत्यमरः । केवलं निश्चितम् । चक्षुषे स्पृहयन्ती 'स्पृहेरीप्सितः' (पा० सू० १.४.३६.) । उदन्तो वृत्तान्तः । उपायनम् उपहारम् । प्रणयं स्नेहम् । अप्रगल्भमित्यादि । अप्रगल्भमपटुमपि जनम् । प्रभवता प्रभुणा । प्रश्रयेण विनयेन । *[अर्पितं मनो वाचालयति । अप्रगल्भमपि जनम् आनुकूल्योपेतः प्रभूणां नमस्कारो

---

१. स्थविरम्, २. अशालीनता धृष्टता, ३. इति शालीनशब्दो हि अधृष्टेऽभिधेये कृतनिपातः—क.

* कोष्ठकान्तर्गतो भागः खगमातृकयोर्नास्ति.

अयत्नेनैवातिनम्रे साधौ धनुषीव गुणः परां कोटिमारोहति विस्रम्भः। जनयन्ति च विस्मयमतिधीरधियामप्यदृष्टपूर्वा दृश्यमाना जगति स्रष्टुः सृष्टयतिशयाः। यतस्त्रिभुवनाभिभावि रूपमिदमस्य महानुभावस्य कुमारस्य। सौजन्यपरतन्त्रा चेयं देवानांप्रियस्यातिभद्रता कारयति कथां नः, न तु युवतिजनसहोत्था तरलता। तत् कथय आगमनेनापुण्यभाक् कतमो देशो विजृम्भितविरहव्यथः शून्यतां नीतः? क्व वा गन्तव्यम्? को वायमपहृत-हरहुङ्काराहङ्कारोऽपर इवानन्यजो युवा? किंनाम्नो वा सद्धृतपसः पितुरयम् अमृतवर्षी[1] कौस्तुभमणिरिव हरेर्हृदयमाह्लादयति? का वास्य त्रिभुवननमस्या

---

व्यवहारादिषु पाटवं कारयतीत्यर्थः। यथा अप्रगल्भमपि शालीनमपि कामिजनं प्रभवता भर्त्रा प्रश्रयेण अनुवृत्त्या अर्पितं दत्तं मधु वाचालयति जल्पयति तथेति।] अतिनम्रे अत्यनुकूले; अतीव नते च। गुणो मौर्वी। पराम् उत्तमाम्; उपरितनीं च। कोटिम् उत्कर्षम्, अग्रं च। विस्रम्भो विश्वासः। यतः, इत्यर्थद्योतकमव्ययमिदं प्रथमदर्शन इत्यादिषु वाक्येषु सम्बध्यते। सज्जनादयः प्रणयोपनयनादिकं कुर्वन्ति यतः, अतोऽस्येदं रूपम् इयमतिभद्रता च नः कथां कारयति, न तु युवतिजनसहोत्था तरलतेति वाक्योपन्यासः। उत्तरत्रापि यत्र यतश्शब्दप्रयोगः तत्र सर्वत्रापि अयमेव योजनाप्रकारः। सौजन्यपरतन्त्रा सौजन्येन परप्रधाना। 'तन्त्रं प्रधानम्' इत्यमरः। देवानांप्रियस्येति। अयं प्रत्यक्षेण मान्यानां प्रधानानां व्यवहारस्यानुचिततया उपचारकैर्व्यपदेशाय प्रयुज्यमानः शब्दः। उत्तरत्रापि प्रयोक्ष्यते—'इहापि च जन्मनि दत्तमेवास्माकम् अमुना तपःक्लेशेन फलमसुलभं दर्शनमुपदर्शयता देवानांप्रियेणेति। वैजयन्तीकारस्यापि मूर्खस्य यस्य प्रधानं नाम व्यवहर्तुं बीभत्सन्ते जनास्तैस्तस्य व्यपदेशाय प्रयुज्यमानं नामेति मतम्। तथा च—'मूर्खे त्वनेडो देवानांप्रियो यो नामवर्जितः। अपि वैधेयमूढाज्ञा मातृशिष्टयथोद्गतौ॥' इति मूर्खप्रकरणे पठितः। लौकिकास्तूभयत्रापि साधुरित्यविरोधं नयन्ति। देवानांप्रिय इत्यत्र 'षष्ठ्या अलुग्वक्तव्य' इति वाक्यादलुक्। कथा वाक्यसन्दर्भः। अनन्यजः कामः। किंनाम्नः किंसंज्ञकस्य। अमृतवर्षी चक्षुरादीनां प्रीत्यतिशयेनैवमुक्तम्; अन्यत्रामृतबिन्दुवर्षी।

---

१. तबीजवर्षी—ख. ग.

प्रभातसन्ध्येव महतस्तेजसो जननी ? कानि वास्य पुण्यभाञ्जि भजन्त्यभि-ख्यामक्षराणि ? आर्यपरिज्ञानेऽप्ययमेव क्रमः कौतुकानुरोधिनो हृदयस्ये'ति। एवमुक्तवत्यां च तस्यामसौ प्रकटितप्रश्रयः प्रतिव्याजहार—'आयुष्मति! सतां हि प्रियंवदता कुलविद्या। न केवलमाननं हृदयमपि ते चन्द्रमयमिव सुधाशीकरशीतलैराह्लादयति वचोभिः। सौजन्यजन्मभूमयो हि भूयसा शुभेन कर्मणा सज्जननिर्माणशिल्पकला इव भवादृश्यो दृश्यन्ते। दूरे तावदन्योन्यस्यालपनम्, अभिजातैस्सह दृष्टोऽपि मिश्रीकृता महतीं प्रीति-मारोपयन्ति। श्रूयताम्—एष खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवःस्व-*स्त्रयीतिलकस्य, अदभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य, सुरासुरमकुट-मणिशिलाशयनदुर्ललितपादपङ्कजस्य, निजतेजःप्रसरप्लुष्टपुलोम्नश्च्यवनस्य

---

हृदयं चित्तम् ; वक्षश्च। 'हृदयं वक्षसि स्वान्ते' इत्यजयः। स्वान्त-शब्दस्य चित्तपर्यायत्वममरसिंहेन दर्शितम्—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति। नमस्या वन्द्या। महतस्तेजसः तेजस्विनोऽपि तेजस्त्वेन वर्णनमतिशयोक्तिः; अन्यत्र सूर्यस्य। जननी माता ; जनयित्री च। 'अभिख्या नामशोभयोः' इत्यमरः। क्रमः प्रकारः। कौतुकानुरोधिनः कुतूहलानुवर्तिनः। आयुष्मतीत्युपचारशब्दः। प्रियंवदता प्रियवादिता 'प्रियवशे वदः खच्' (पा० सू० ३.२.३८) इति खच्। शिल्पकलाः शिल्पविद्याः। अभिजातैः महावंशप्रसूतैः पण्डितैरिति वा। मिश्रीकृताः सम्पृक्तीकृताः। भूर्भुवःस्वस्त्रयीतिलकस्य भूर्भुवः-स्वरिति त्रयस्यापि तिलकस्य। भूरादयो लोकविशेषाः। अदभ्रप्रभावस्तम्भित-जम्भारिभुजस्तम्भस्येति। 'पुरा च्यवनमुनये अश्विनौ आत्मरूपसदृशं रूपं ददतुः। स चापि प्रीतः ताभ्यां शर्यातनृपस्य यज्ञे आश्विनं ग्रहं गृहीतवान्। तदसहमान इन्द्रः तं कुलिशेन प्रहर्तुमुद्युक्तवान्। स तु तस्य सवज्रं करं निजप्रभावात् स्तम्भितवान्' इति कथा। दुर्ललित उत्सुकः। निजतेजःप्रसरप्लुष्टपुलोम्न इति। 'पुलोमा नाम कश्चिद् राक्षसो भृगोर्भार्यां पुलोमाभिधामपजहार। अपह्रियमाणाया-स्तस्याः क्रोधवशाद् उदरगतो गर्भोऽपतत्। तं दृष्ट्वा राक्षसस्तस्य तेजसा भस्मीबभूव। स गर्भश्च नाम्ना च्यवनोऽभूद्' इति कथा। तेजः प्रभावः; वह्निरिति च।

बहिर्वर्त्ति जीवितं दधीचो नाम तनयः। जननी चास्य जितजगतोऽनेक-पार्थिवसहस्रानुयातस्य शर्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम। तां खलु देवीमन्तर्वत्नीं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात् स्वगृहमानाययत्। असूत च सा तत्र देवी दीर्घायुषमेनमनेहसा। अवर्धत च तत्रैवायमानन्दितज्ञातिवर्गो बालस्तारकाराज इव राजीवलोचनो राजगृहे। भर्तृभवनमागच्छन्त्यामपि मातरि नासेचनकदर्शनमिममसुञ्चन्मातामहो मनोविनोदनं नप्तारम्। अशिक्षत चायं तस्मिन्नेव सर्वा विद्याः सकलाः कलाश्च। कालेन चोपारूढनवयौवनमिवालोक्याहमिवासावप्यनुभवतु मुखकमलावलोकनसुखमस्येति मातामहः कथंकथमप्येनं पितुरन्तिकमधुना व्यसर्जयत्। मामपि तस्यैव देवस्य सुगृहीतनाम्नः शर्यातस्याज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुमवधारयतु

---

पुष्टो दध्नः। शर्यातस्य सुता राजपुत्रीति पुनर्वचनं सौकुमार्यसौन्दर्यादिगुणप्रदर्शनार्थम्। एवंविधा वचनव्यक्तिः कादम्बर्यामप्यस्ति—'तत्तनयश्च हारीतनामा तापसकुमारः' इति। कन्यारत्नं कन्यासु श्रेष्ठम्। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। अन्तर्वत्नी गर्भिणी। वैजनने मासि प्रसवयोग्ये मासि। 'सूतिमासो वैजननः' इत्यमरः। यद्यपि वैजननशब्दस्यैव प्रसववाचकत्वे सामर्थ्यं तदा मासशब्दस्याधिकप्रयोगः परं पारमित्यादिष्विव बोद्धव्यः। मासशब्दस्य सप्तम्येकवचने 'पद्दन्नोमास्—' (पा०सू० ६.१.६३.) इत्यादिना सूत्रेण मासादेशे मासीति रूपम्। सकारान्तो मासशब्दोऽस्तीति केषांचिन्मतम्। तथा वैजयन्तीकारेण 'मासौ मासनिशाकरौ' इत्येकाक्षरप्रकरणे पठितम्। पार्श्वात् समीपात्। ज्ञातिवर्गो मातृप्रमुखबन्धुवर्गः। नामुञ्चदित्यन्वयः। आसेचनकं दर्शनम्। 'यत्सदा प्रेक्षमाणानां तत्सौभाग्याद् वितृष्णता। न जायते क्षणमपि तदासेचनकं मतम्॥' इति। तथा वैजयन्ती च—'तत्तु स्यादासेचनकं न तृप्तिर्यस्य दर्शनाद्' इति। अतृप्तदर्शनमित्यर्थः। विनोदनं विनोदकरम्। नप्तारं दौहित्रम्। 'नप्तारौ पौत्रदौहित्रौ' इति वैजयन्ती। अशिक्षत 'शिक्ष विद्योपादाने' इति धातुः। तस्मिन्नेव राजगृहे एव। सुगृहीतनाम्नः, अयं पूज्यानां नामवचनप्रकारः। 'भृत्यैर्नामास्य पूज्यत्वाद्धृदयेन सुगृह्यते। न च नाम्नोच्चारणे [illegible] ॥' [illegible] अयं च

**भवती। पितुः पादमूलमायान्तं च मया साभिसरम् अमुमकरोत् स्वामी। तद्धि नः कुलक्रमागतं राजकुलम्। उत्तमानां च चिरन्तनता जनयत्यनुजीविन्यपि जने कियन्मात्रमिव मन्दाक्षम्। अक्षीणः खलु दाक्षिण्यकोशो महताम्। इतश्च खलु गव्यूतिमात्रमिव पारेशोणं तस्य भगवतश्च्यवनस्य स्वनाम्ना निर्मितव्यपदेशं च्यावनं नाम चैत्ररथकल्पं काननं निवासः। तदवधिरेवेयं नो यात्रा। यदि वो गृहीतक्षणं दाक्षिण्यम्, अनवहेडं वा हृदयमस्माकमुपरि, भूमिर्वा प्रसादानामयं जनः, श्रवणार्हो वा, ततो न**

---

प्रभुमुद्दिश्य आत्मनो लाघवसूचनप्रकारः। अवधारयतु अवगच्छतु। साभिसरं ससहायम्। 'अनुप्लवश्चानुचरः सहायोऽभिसरः समाः' इत्यमरः।* [तद्धीत्यादि। राजकुलमिति लोकोक्तिच्छायामाश्रित्योक्तं, वाल्लभ्यमित्यर्थः। अथवा राजभवनमेवोच्यते। तद् राजभवनमस्माकं वंशक्रमागतम्। अतो मयास्य साभिसरत्वम् उक्तमिति भावः।] अन्येष्वपि भृत्येषु विद्यमानेषु किमेवं भवत्स्वामी भवन्तमेवानुचरं कृतवानित्यत्राह—उत्तमानामिति। चिरन्तनता पुरातनता। कियन्मात्रं मन्दाक्षम् 1अदन्तकटाक्षादिशब्दवद् अल्पनिरीक्षणे वर्तते, न तु 'मन्दाक्षं ह्रीस्त्रपा' इति निघण्टुषु पठ्यमानम्। ननु त्वादृशे भृत्यपरमाणौ किमेवमतिमहतः प्रसादस्य कारणमित्यत्राह—अक्षीण इति। महतां दाक्षिण्यकोशः प्रसादधनम् अक्षीणः खलु। प्रसादस्य नावधिरित्यर्थः। 'दाक्षिण्यं नाम तत् प्राहुः स्वानुकूल्यं प्रवृत्तिषु। प्राणानप्याददानस्य स्थातुं शक्तिर्न यद् भवेत्॥' इति दिवाकरः। गव्यूतिः क्रोशयुगम्, (അരക്കാതം)। पारेशोणं शोणाभिधानस्य नदस्य पारे। 'पारे मध्ये षष्ठ्या वा' (पा०सू०२.१.१८.) इत्यव्ययीभावः। व्यपदेशो नाम उक्तिर्वा। चैत्ररथं वैश्रवणोद्यानम्। गृहीतक्षणं गृहीतावसरम्। अवसरदायीत्यर्थः। दाक्षिण्यं सरलता। अनवहेडं अवहेडरहितम्। 'हेडृ अनादरे' इति धातो रूपम्। 'रीढावमाननावज्ञावहेडनम्' इत्यमरः। आदरयुक्तमित्यर्थः।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

1. इदन्तकाक्षादि–ख. ग.

विमाननीयोऽयं नः प्रथमप्रणयः कुतूहलिनो हृदयस्येति। वयमपि शुश्रूषवो वृत्तान्तमायुष्मत्योः। नेयमाकृतिः दिव्यतां व्यभिचरति। गोत्रनामनी तु श्रोतुमभिलषति नो हृदयम्। तत्कथय। कतमो वंशः स्पृहणीयतां नीतः सत्रभवत्या जन्मना। का चेयमत्रभवती भवत्याः समीपे समवाय इव विरोधिनां पदार्थानाम्। तथाहि—सन्निहितबालान्धकारा भास्वन्मूर्तिश्च, पुण्डरीकमुखी हरिणलोचना च, बालातपप्रभाधरा कुमुदहासिनी च, समदहंसस्वना समुन्नतपयोधरा च, कमलकोमलकरा

---

विमाननीयः अनादरणीयः। प्रणयो याच्ञा। व्यभिचरति अतिक्रामति। गोत्रं वंशः। समवायः संहतिः। तथाहि एतद्विरोधिपदार्थसमवायतुल्यत्वं दर्शयति। सन्निहितबालान्धकारा सन्निहितनूतनान्धकारा। भास्वन्मूर्तिः आदित्यमूर्तिः। भास्वन्मूर्तेः सन्निहितबालान्धकारत्वं विरुद्धमिति भावः। बवयोरभेदः। सन्निहितो बालानां केशानाम् अन्धकारः कार्ष्ण्यं यस्याः। 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः। भास्वन्मूर्तिः भास्वरशरीरा। पुण्डरीकमुखी व्याघ्रमुखी। 'व्याघ्रो द्वीपी पुण्डरीकः' इति हलायुधः। हरिणलोचना मृगलोचना। व्याघ्रमुख्याः तद्विरुद्धमृगलोचनात्वमिति भावः। मुख्यार्थः—पुण्डरीकमुखी कमलमुखी, हरिणलोचना मृगाक्षी। बालातपप्रभाधरा बालातपस्य प्रभां धारयतीति। कुमुदहासिनी कुमुदानां हासः शोभा यस्याः। बालातपप्रभायुक्तायां रात्रिषु विकासिनां कुमुदानां हासयुक्तत्वं विरुद्धम्। *[मुख्यार्थः—बालातपप्रभाधरोऽधरोष्ठो यस्याः। कुमुदहासिनी कुमुदवद्धवलस्मितवती। समदहंसस्वना समदानां हंसानां स्वनो यस्याः। समुन्नतपयोधरा उद्गतमेघा। समदहंसस्वनवत्याः उद्गतमेघत्वं विरुद्धम्।] मेघकाले हंसानां निर्मदत्वात्। उक्तं च—'अभवन् विमदा हंसास्तस्मिन् काले शिखावलाः। महान्तं मदमायाता वीक्ष्य मेघावृतं नभः॥' इति। समदस्य हंसस्य स्वन इव स्वनो यस्याः। उन्नतपयोधरा तुङ्गस्तनी। कमलकोमलकरा कमलमिव कोमलः करः हस्तः यस्याः सा।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

१. अभवन्- क.

**हिमगिरिशिलापृथुनितम्बा च, करभोरूः विडम्बितगामिनी च, अमुक्त-कुमारभावा स्निग्धतारका च' इति। सा त्ववादीत्—'आर्य! श्रोष्यसि कालेन। भूयसो दिवसानत्र स्थातुमभिलषति नो हृदयम्। अल्पीयांश्चाय-मध्वा। परिचय एव प्रकटीकरिष्यति। आर्येण तु न विस्मरणीयोऽयमनु-षङ्गदृष्टो जनः' इत्यभिधाय तूष्णीमभूत्। दधीचस्तु नवाम्भोभरगम्भीराम्भो-धरध्वाननिभया भारत्या नर्तयन्निव वनलताभवनभाजो भुजङ्गभुजः सधीर-मुवाच—'आर्ये करिष्यति प्रसादमाराध्यमाना। पश्यामस्तावत्। उत्तिष्ठ**

---

हिमगिरिशिलापृथुनितम्बा हिमगिरेः हिमवत्पर्वतस्य शिलेव पृथुलो नितम्बो यस्याः, हिमसम्बन्धवत्याः कमलस्य कोमलता न सम्भवतीति[1] विरोधः। मुख्यार्थः—कमलकोमलकरा कमलवत् कोमलहस्ता। हिमगिरिशिलापृथु-नितम्बा हिमगिरिशिलावत् पृथुजघना। करभोरूः करभस्य उष्ट्रस्य ऊरुरिव ऊरुर्यस्याः। विडम्बितगामिनी मन्दगामिनी। करभोर्वा विडम्बितगामिनीत्वं[2] विरुद्धं, करभाणां द्रुतगामित्वात्। अत्र माघप्रयोगः—'भूमिर्महत्यप्यविडम्बित-क्रमं क्रमेलकैस्तत्क्षणमेव चिच्छिदे' इति। मुख्यार्थः—करभोरूः करभो मणि-बन्धकनिष्ठयोः[3] मध्यप्रदेशः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। करभ इवोरुर्यस्याः। ऊरुशब्दात् 'ऊरूत्तरपदादौपम्ये' (पा० सू० ४.१.६९.) इत्यूङ्प्रत्ययः। विडम्बितगामिनी मन्दगामिनी, मृदुगामिनीत्यर्थः। अमुक्त-कुमारभावा अमुक्तः कुमारे स्कन्दे भावः[4] संयोगो यया। स्निग्धतारका स्नेहयुक्त-तारकाख्यासुरा। कुमारे भावयुक्तायाः तारकासुरस्य स्नेहकरणमयुक्तमिति भावः। मुख्यार्थः—अमुक्तकुमारभावा अमुक्तकौमारावस्था। स्निग्धतारका स्निग्धत्वगुणयुक्ता अक्षिकनीनिका।[5] अल्पीयानित्यादि। अयमर्थः—च्यवनाश्रमशोणतीरयोरन्तरा-लाध्वा अल्पीयान्। अतोऽल्पान्तरालप्रदेशवर्तितया बहुशः प्रसङ्गागतेन दर्शनेन जातः परिचय एव अस्मद्गोत्रादिकं प्रकटीकरिष्यति। अनुषङ्गदृष्टः यदृच्छादृष्ट इत्यर्थः। प्रकृतस्य कार्यस्यानुवृत्तिरनुषङ्गः। 'अनुषङ्गस्तु कारुण्ये प्रकृतस्यानु-वर्तने' इति वैजयन्ती। भुजङ्गभुजः मयूरान्। उच्चचाल गन्तुं प्रवृत्तः।

---

१. सम्भवति। अत एव विरोधः-क. २. गामित्वं-ख. ग. ३. कनिष्ठिकयोः, ४. भावः सङ्गो, ५. स्निग्धतागुणविशिष्टा अक्षि-क.

व्रजामः' इति। तथेति चाभ्यनुज्ञातस्तेन शनकैरुत्थाय कृतनमस्कृतिः उच्चचाल। तुरगाधिरूढं च तं प्रयान्तं सरस्वती सुचिरमुत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत्। उत्तीर्य च शोणम् अचिरेणैव कालेन दधीचः पितुराश्रमपदं जगाम। गते च तस्मिन् सा तामेव दिशं विलोकयन्ती सुचिरमतिष्ठत्। कृच्छ्रादिव च सञ्जहार दृशम्।

अथ मुहूर्तमिव स्थित्वा, स्मृत्वा च तस्य तामेव रूपसम्पदं पुनः पुनर्व्यस्मयतास्या हृदयम्। भूयोऽपि चक्षुराचकाङ्क्ष च तद्दर्शनम्। अवशेव केनाप्यानीयत तामेव दिशं दृष्टिः। अप्रहितमपि मनः तेनैव सार्धमगात्। अजायत चास्या नवपल्लव इव बालवनलतायाः कुतोऽप्यनुरागः। सालसेव शून्येव सनिद्रेव दिवसमनयत्। अस्तमुपयाति च प्रत्यक्-पर्यस्तमण्डले लाङ्गलिकास्तबकताम्रत्विषि कमलिनीकामुके कठोरसारस-शिरःशोणशोचिषि सावित्रे त्रयीमये तेजसि, तरुणतमालश्यामले मलिन-यति व्योम व्यापिनि तिमिरसञ्चये, सञ्चरत्सिद्धसुन्दरीनूपुररवानुसारिणि च मन्दं मन्दं मन्दाकिनीहंस इव समुत्सर्पति गगनतलं शशिनि, कृत-सन्ध्याप्रणामा निशामुख एव निपत्य विमुक्ताङ्गी पल्लवशयने तस्थौ। सावित्र्यपि कृत्वा यथाक्रियमाणं सायन्तनं क्रियाकलापं समुचिते शयन-काले किसलयशयनमभजत। जातनिद्रा च सुष्वाप।

इतरा तु मुहुर्मुहुरङ्गवलनैर्विलुलितकिसलयशयना निमीलित-नयनापि नालभत निद्राम्। अचिन्तयच्च—'मर्त्यलोकः खलु सर्वलोकानाम् उपरि, यस्मिन्नेवंविधानि सम्भवन्ति त्रिभुवनभूषणानि सकलगुणग्राम-

---

रूपसम्पदं सौन्दर्यम्। अप्रहितम् अप्रेषितम्। सालसा आलस्ययुक्ता। प्रत्यक्पर्यस्तं प्रतीच्यां दिशि क्षिप्तम्। लाङ्गलिका लताविशेषः, (മെന്തോന്നി)। कमलिनीकामुके सूर्ये। कठोरो वृद्धः। शिरःशोणशोचिषि सतीति शेषः। व्योम मलिनयतीत्यन्वयः। व्यापिनि सर्वतो व्यापनशीले। विमुक्ताङ्गी प्रसारितावयवा। कलापः समूहः।

वलनैः वेल्लनैः।

गुरूणि रत्नानि । तथाहि—तस्य मुखलावण्यस्य निष्यन्दबिन्दुरिन्दुः । तस्य चक्षुषो विक्षेपाः कुमुदकुवलयकमलाकराः । तस्य चाधरमणेर्दीधितयो विकसितबन्धूकवनराजयः । तस्य चाङ्गस्य परिभोगोपकरणम् अनङ्गः । पुण्यभाञ्जि तानि चक्षूंषि चेतांसि यौवनानि वा स्त्रैणानि, येषामसावविषयः, दर्शयता च तमन्यजन्मजनितेन मे फलितमधर्मेण । का प्रतिपत्तिरिदानीम्' इति चिन्तयन्त्येव कथंकथमप्युपजातनिद्रा चिरात् क्षणमशेत । सुप्ता च तमेव दीर्घलोचनं स्वप्ने ददर्श । स्वप्नासादितद्वितीयदर्शना चाकर्णाकृष्टकार्मुकेण मनसि मनसिजेन निर्दयमताड्यत । प्रतिबुद्धाया मकरकेतुना मदनशरहतायाश्च वार्तामिवोपलब्धुम् अरतिराजगाम । तथाहि—ततः प्रभृति कुसुमधवलाभिरताडितापि वनलताभिः वेदनामधत्त । मन्दमारुतावधूतैः कुसुमरजोभिरदूषितलोचनापि अश्रुजलं मुमोच । हंसपक्षतालवृन्तवातविधुतैः शोणशीकरैः असिक्तापि अर्दितामगमत् । प्रेङ्खत्कादम्बमिथुनाभिरनूढापि अघूर्णत वनकमलिनीकल्लोलदोलाभिः । विघटमानचक्रवाकमिथुनविसृष्टैरस्पृष्टापि श्यामतामाततान विरहनिःश्वासधूमैः । पुष्पधूलिधूसरैरदष्टापि व्यावेष्टत मधुकरकुलैः ।

---

रत्नानि श्रेष्ठपुरुषाः, माणिक्यादि च । विक्षेपाः व्यापाराः । आकराः समूहाः । बन्धूकं बन्धुजीवम् । तस्येत्यादि । ताम्बूलदायकादिवद् अभिहितविषयोपस्थापनेन अनङ्गोऽस्य परिभोगोपकरणमित्यर्थः । एतेनानङ्गादप्यस्य सौन्दर्यातिशय उक्तः । स्त्रैणानि स्त्रीसमूहाः । स्त्रीशब्दात् 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (पा० सू० ४. १. ८७.) इति समूहार्थे नञ् । अन्यजन्म पूर्वजन्म । प्रतिपत्तिः कर्तव्यम् । उपलब्धुं ज्ञातुम् । अरतिः दुःखम् । अरतिशब्दस्य स्त्रीत्वात् काचित् स्त्री च ध्वन्यते । वेदना दुःखानुभवः । तालवृन्तं व्यजनम् । कादम्बो धूसरच्छदो हंसः । 'कादम्बः कलहंसः स्याद्धंस आधूसरच्छदः' इत्यमरः । अघूर्णत भ्रान्ता । 'घूर्ण भ्रमण' इति धातुः । दोला डोलों । आततान सम्बद्धवतीत्यर्थः । व्यावेष्टत वेष्टितवती ।

---

१. अभिमतविषयोप. २. अनङ्गस्य परि. ३. स्त्रीति च गम्यते. ४. [illegible]

अथ गणरात्रापगमे निवर्तमानस्तेनैव वर्त्मना तं देशमागत्य तथैव निवारितपरिजनः छत्रधारद्वितीयो विकुक्षिर्डुढौके। सरस्वती तु दूरादेव सम्मुखमापतन्तं प्रीत्या ससंभ्रममुत्थाय वनमृगीवोद्ग्रीवा विलोकयन्ती मार्गपरिश्रान्तमस्नपयदिव धवलितदशदिशा दृशा। कृतासनपरिग्रहं तु तं प्रीत्या सावित्री पप्रच्छ—'आर्य! कच्चित् कुशली कुमारः' इति। सोऽब्रवीत्—'आयुष्मति! कुशली च स्मरति च भवत्योः। केवलम् अमीषु दिवसेषु तनीयसीमिव तनुं बिभर्ति। अविज्ञायमाननिमित्तां च शून्यतामिव धत्ते। अन्वक्षमागमिष्यत्येव मालतीति नाम्ना वरवर्णिनी वार्तां वो विज्ञातुम्। उच्छ्वसितं हि सा कुमारस्य' इति। तच्छ्रुत्वा सावित्री पुनरपि समभ्यभाषत—'अतिमहानुभावः खल्वसौ कुमारो येनैवमविज्ञायमाने क्षणदृष्टेऽपि जने परिचयमनुबध्नाति। तस्य हि गच्छतो यदृच्छया कथमप्यंशुकमिव मार्गलतासु मानसमस्माकं समासक्तमासीद् मुहूर्तम्। अशून्यं हि सौजन्यमाभिजात्येन वः स्वामिसूनोः। अलसः खलु लोकः, यदेवं सुलभसौहार्दानि येनकेनचिन्न क्रीणाति महतां मनांसि। सोऽयमौदार्यातिशयः कोऽपि महात्मनामितरजनदुर्लभः, येनोपकरणी-

---

गणरात्रापगमे 'गणरात्रं निशा बह्व्यः' इत्यमरः। बहुषु दिवसेष्वतीतेषु इत्यर्थः। गणशब्दस्य 'बहुगणवतुडति संख्या' (पा० सू० १. १. २३.) इति संख्यासंज्ञा। रात्रिशब्दान्तात् 'अहः सर्वैकदेश—' (पा० सू० ५. ४. ८७.) इत्यादिना समासान्तः। डुढौके प्राप्तवान्। 'ढौकृ गतौ' इति धातुः। स्मरति भवत्योः। 'अधीगर्थदयेशां कर्मणि' (पा० सू० २. ३. ५२.) इति कर्मणि षष्ठी। अन्वक्षम् अनुपदम्, अव्ययीभावः। 'अनुपदमन्वक्षम्' इति वैजयन्ती। वरवर्णिनी उत्तमस्त्री। 'मत्तकाशिन्युत्तमा वरवर्णिनी' इत्यमरः। उच्छ्वसितम् उच्छ्वासवत् सदान्तरङ्गभूतेत्यर्थः। येनेत्यादि। एवमनुबध्नातीत्यन्वयः। आभिजात्येन महाकुलीनतया। अलसः मन्दः। औदार्यं दानम्। 'दानमभ्युपपत्तिश्च तथा च प्रतिभाषणम्। स्वजने वा परे वापि तदौदार्यं प्रकीर्तितम्॥'

---

१. संज्ञा। [illegible] रात्रिशब्दान्तात्—क. २. '[illegible]' इति [illegible]वैजयन्ती।

कुर्वन्ति त्रिभुवनम्' इति । विकुक्षिस्तूच्चावचैरालापैः सुचिरमिव स्थित्वा यथाभिलषितं देशमयासीत् ।

अथापरेद्युरुद्यति द्युमणावुद्दामद्युतावभिद्रुततारके तिरस्कृततमसि तामरसविसरव्यासव्यसनिनि सहस्ररश्मौ शोणमुत्तीर्यायान्ती, तरलदेहप्रभावितानच्छलेनात्यच्छं सकलमिव शोणसलिलमानयन्ती, स्फुटितातिमुक्तकुसुमसमत्विषि सटाले महति मृगपताविव गौरी तुरङ्गमे स्थिता, सलीलम् उरोवध्रारोपितस्य तिर्यगुत्कर्णिततुरङ्गमाकर्ण्यमाननूपुरयुगलरणितस्य अतिबहलेन पिण्डालक्तकरसेन पल्लवितस्य कुङ्कुमपिञ्जरितपृष्ठस्य चरणयुगलस्य प्रसर्पद्भिरतिलोहितैः प्रभाप्रवाहैः उभयतस्ताडनदोहललोभाद् आगतानि किसलयितानि रक्ताशोकवनानीवाकर्षन्ती, सकलजीवलोकहृदयहठहरणघोषणयेव रशनया शिञ्जानजघनस्थला, धौतधवलनेत्रनिर्मितेन निर्मोकलघुतरेणाप्रपदीनेन कञ्चुकेन तिरोहिततनुलता, अच्छाच्छ-

---

इति दिवाकरः । उपकरणीकुर्वन्ति परिकरतां नयन्ति । उच्चावचैः नैकविधैः । 'उच्चावचं नैकभेदम्' इत्यमरः ।

उद्यति उद्गच्छति । द्युमणौ, इदं तु विशेषणम् । द्युर्दिवसः 'दिवसो दिनं द्युः' इति हलायुधः । तस्य मणिभूते । अभिद्रुतो निरस्तः । व्यासः विकसनम् । तरलं भास्वरम् । 'तरलो भास्वरे हारे चञ्चलेऽपि' इति वैजयन्ती । स्फुटितेत्याद्युभयत्र समानम् । स्फुटितं विकसितम् । अतिमुक्तः वासन्ती । सटाले सटावति । सटा स्कन्धकेसरः । 'प्राणिस्थादातो लजन्यतरस्याम्' (पा० सू० ५. २. ९६.) इति लच् । गौरी दुर्गा । उरोवध्रा तुरगपर्याणबन्धनी चर्मपट्टिका । पिण्डालक्तकः श्रेष्ठः कश्चिदलक्तकभेदः । दोहलं गर्भोपादानम् । लोभः श्रद्धा । हठो बलात्कारः । नेत्रं वस्त्रविशेषः, ([2][illegible]) । आप्रपदीनेन, आप्रपदम् आपादाग्रम् । आप्रपदं प्राप्नुवता, 'आप्रपदं प्राप्नोति' (पा० सू० ५. २. ८.) इति खः । 'स्यात् त्रिष्वाप्रपदीनं तत् प्राप्नोत्याप्रपदं हि यत्'

---

१. अतिमुक्तकः= [illegible] २. [illegible]

कञ्चुकान्तरदृश्यमानैः आश्यानचन्दनधवलैरवयवैः स्वच्छसलिलाभ्यन्तर-विभाव्यमानमृणालकाण्डेव सरसी, कुसुम्भरागपाटलं पुलकबन्धचित्रितं चण्डातकम् अन्तःस्फुटं स्फटिकभूमिरिव रत्ननिधानमादधाना जघनस्थलेन, हारेणामलकीफलनिस्तलमुक्ताफलेन स्फुरितस्थूलग्रहगणशारा शारदीव श्वेतश्वेताविरलजलधरपटलावृता द्यौः, कुचपूर्णकलशयोरुपरि रत्नप्रलम्ब-मालिकाम् अरुणहरितकिरणकिसलयिनीं कस्यापि पुण्यवतो हृदयगृहप्रवेश-वन्दनमालामिव बद्धां धारयन्ती, प्रकोष्ठनिविष्टस्यैकैकस्य बालप्रवालकट-कस्य मरकतवेदिकासनाथस्य हरितारुणीकृतदिगन्तराभिः मयूखसंहतिभिः स्थलकमलिनीभिरिव लक्ष्मीशङ्कयानुगम्यमाना, बहलताम्बूलकृष्णिका-न्धकारितेनाधरपुटेन मुखशशिपीतं सन्ध्यारागमिश्रं तिमिरमिव वमन्ती, विकचनयनकुवलयवनकुतूहलनिलीनया अलिकुलसन्तत्या नीलांशुक-जालिकयेव निरुद्धार्धवदना, नीलीरागनिहितनीलिम्ना शिखिगलशितिना

---

इत्यमरः। कञ्चुकेन वारवाणेन। काण्डं दण्डः। कुसुम्भरागपाटलं कुसुम्भेन रागेण रञ्जनद्रव्येण पाटलम्; अन्यत्र कुसुम्भस्य रागवद् रक्तवर्णवत् पाटलम्। पुलकबन्धः पुलकशब्देन पुलकाकारत्वाद् वस्त्रप्रान्तेषूत्कीर्णाः चित्रबिन्दवो लक्षिताः। तेषां सम्बन्धः; अन्यत्र पुलको रत्नम्। 'पुलकोऽस्त्रे रत्नराज्यां रोमाञ्चे हीरके क्रिमौ' इति वैजयन्ती। चण्डातकम् अर्धोरुकं वस्त्रम्। 'अर्धोरुकं वरस्त्रीणां वासश्चण्डातकं मतम्' इति हलायुधः। निधानं निधिः। आमलकी धात्री[1]। निस्तलं वृत्तम्। प्रालम्बमालिकां कण्ठादृजुलम्बिनीं मालाम्। 'प्रालम्बमृजु-लम्बि स्यात् कण्ठाद्' इत्यमरः। वन्दनमाला तोरणबद्धमाला। 'नन्दिकौ तोरणस्तम्भौ शुककूटस्तयोः स्रजि। सैव वन्दनमालापि' इति वैजयन्ती। कटकस्य वलयस्य। मरकतवेदिका मरकतसम्बद्ध उन्नतप्रदेशः। अथवा मरकताङ्गुलिमुद्रा। 'अथ वेदिका, वेदिश्चाङ्गुलिमुद्रा च' इति वैजयन्ती। कृष्णिका रागबाहुल्योद्भूतं काष्ण्यर्म्। नयनकुवलयवनेति। वनशब्दो नयनस्य भामहत्त्वद्योतनाय प्रयुक्तः। जालिकया अवगुण्ठनपटेन। नीलीरागनिहितनीलिम्ना नीलीरसकृताञ्जनेन सम्पादितकार्ष्ण्येन। नीली (അമരി)। शितिना मेचकेन।

---

1. धात्री=നെല്ലി

वामश्रवणाश्रयिणा दन्तपत्रेण कालमेघपल्लवेन विद्युदिवोद्योतमाना, बकुलफलानुकारिणीभिः तिसृभिर्मुक्ताभिः कल्पितेन वालिकायुगलेनाधोमुखालोकजलवर्षिणा सिञ्चन्तीवातिकोमले भुजलते, दक्षिणकर्णावतंसितया सितया केतकीगर्भपलाशरेखया रजनिकरजिह्वालतयेव लावण्यलोभेन लिह्यमानकपोलतला, तरुणतमालश्यामलेन मृगमदामोदनिष्यन्दिना तिलकबिन्दुना मुद्रितमिव मनोभवसर्वस्वमुद्वहन्ती मुखं, ललाटरङ्गलासकस्य सीमन्तचुम्बिनश्चटुलतिलकमणेः उदञ्चता चञ्चलेनांशुजालकेन रक्तांशुकेनेव कृतशिरोवेष्टना, पृष्ठप्रेङ्खदनादरसंयमनशिथिलितजूटिकाबन्धना, नीलचामरावचूडिनी चूडामणिमकरिकासनाथेव मकरकेतुपताका, कुलदेवतेव चन्द्रमसः, पुनस्सञ्जीवनौषधिरिव पुष्पधन्वनः, वेलेव रागसागरस्य, ज्योत्स्नेव नवयौवनचन्द्रोदयस्य महानदीव रतिरसामृतसागरस्य, कुसुमोद्गतिरिव सुरततरोः, बालविद्येव वैदग्ध्यस्य, कौमुदीव कान्तेः, धृतिरिव धैर्यस्य,

---

वालिका श्रवणाभरणम्, (വാളി)। आलोकः द्युतिः। सितया शुक्लया। पलाशं दलम्। मृगमदामोदः कस्तूरीगन्धः। तिलकबिन्दुना बिन्द्वाकारेण तिलकेन। मुद्रितं मुद्रया बद्धम्। लासकस्य नर्तकस्य। 'लासको नर्तकः' इति हलायुधः। सीमन्तः केशमध्यपद्धतिः। तिलकमणेः तिलकाकारस्य रत्नस्य। उदञ्चता उद्गच्छता। अनादरसंयमनम् अतात्पर्येण बन्धनम्। जूटिकाबन्धनं केशबन्धविशेषः, (കുടുമ)। नीलचामरावचूडिनी नीलचामरैः कृतेनावचूडेन युक्ता। अवचूडः ध्वजस्य अधोमुखचूडः। 'अस्योच्चूडावचूडौ द्वावूर्ध्वाधोमुखचूडके' इति वैजयन्ती। चूडामणीत्यादि। चूडामणिमकरिका मकरिकेव चूडामणिरिति। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा० सू० २. १. ५६.) इति समासः। इयमत्र वचोभङ्गिः—एषा चूडामणिसनाथा, मकरकेतुपताका मकरिकासनाथा। एवंविधा वचनव्यक्तिः माघकाव्ये च दृश्यते—'श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं गूढार्थमेष निधिमन्त्रगणं बिभर्ति' इति। मकरिका मत्स्यस्त्री। वेला जलवृद्धिः। 'वेला वृद्धिस्तु वारिणः' इति हलायुधः।

गुरुशालेव गौरवस्य, बीजभूमिरिव विनयस्य, गोष्ठीव गुणानां, मनस्वितेव महानुभावतायाः, तृप्तिरिव तारुण्यस्य, कुवलयदलदामदीर्घलोचनया पाटलाधरदलया कुन्दकुड्मलस्फुटदशनया शिरीषमालासुकुमारभुजयुगलया कमलकोमलकरया बकुलकुसुमसुरभिनिःश्वसनया चम्पककलिकावदातया कुसुममय्येव ताम्बूलकरङ्कवाहिन्या महाप्रमाणाश्वतराधिरूढयानुगम्यमाना, कतिपयपरिवारपरिकरा मालती समदृश्यत ।

दूरादेव दधीचप्रेम्णा सरस्वत्या लुण्ठितेव मनोरथैः, आकृष्टेव कुतूहलेन, प्रत्युद्गतेवोत्कलिकाभिः आलिङ्गितेवोत्कण्ठया, अन्तःप्रवेशितेव हृदयेन, स्नापितेवानन्दाश्रुभिः, विलिप्तेव स्मितेन, वीजितेवोच्छ्वसितैः, आच्छादितेव चक्षुषा, अभ्यर्चितेव वदनपुण्डरीकेण, सखीकृतेव आशया, सविनयं समीपमुपययौ । अवतीर्य च तुरङ्गाद् दूरादवनतेन मूर्ध्ना प्रणामम् अकरोत् । आलिङ्गिता च ताभ्यां सविनयमुपाविशत् । सप्रश्रयं संभाविता च पुण्यभाजनमात्मानम् अमन्यत । अकथयच्च दधीचसन्दिष्टं शिरसि निहितेनाञ्जलिना नमस्कारम् । अगृह्णाच्च आकारतः प्रभृति अग्राम्यतया तैस्तैः अतिपेशलैरालापैः सावित्रीसरस्वत्योर्मनसी ।

---

गुरुशाला गुरुकुलम् । कुवलयदलदामदीर्घलोचनया कुवलयदलदामेव दीर्घं लोचनं यस्याः । एवमन्यान्यपि वाक्यानि ज्ञेयानि । पाटलाधरदलया पाटलं श्वेतरक्तम् अधरदलं यस्याः । पाटलवृक्षपुष्पमिवाधरदलं यस्या इति च । पाटलं[1] (பாதிரிப்பூ) । कुटचो गिरिमल्लिका । शिरीषं कपीतनम्, [2] (வாகைப்பூ) । महाप्रमाणः तुङ्गतरः । अश्वतरः वेसरः[3] । परिवारो दास्यादिः । लुण्ठिता विलुप्ता[4] । उत्कलिकाभिः उत्कण्ठाभिः । अकथयच्चेत्यादि । दधीचः शिरस्यञ्जलिमादाय युवां नमामीत्युक्तवानित्यकथयत् । अगृह्णादित्यादि । आकारतः प्रभृत्यग्राम्यतया आकारवेषभाषाशीलादीनामग्राम्यत्वाद्धेतोः तैस्तैरतिपेशलैरालापैः सावित्रीसरस्वत्योर्मनसी अगृह्णात् । अग्राम्याकारवेषभाषाशीलत्वाद् अतिमधुरैरप्यालापैः सावित्रीसरस्वत्यौ हृतचित्ते बभूवतुरित्यर्थः ।

---

१. कुन्दं=குருந்தம் பூ, २. வாகைப்பூ, ३. वेसरः=கோவேறு கழுதை,
४. विलुप्ता=கூறை கொள்ளப்பட்டாள்.

क्रमेण चातीते मध्यन्दिनसमये शोणमवतीर्णायां स्नातुं सावित्र्यां, समुत्सारितपरिजना साकूता इव मालती कुसुमप्रस्तरशायिनीमुपसृत्य सरस्वतीमाबभाषे—'देवि! विज्ञाप्यं नः किञ्चिदस्ति रहसि। अतो मुहूर्तमवधानदानेन प्रसादं क्रियमाणमिच्छामि' इति। सरस्वती तु दधीचसन्देशाशङ्किनी किं वक्ष्यतीति स्तननिहितवामकरनखकिरणदन्तुरितम् उद्भिद्यमानकुतूहलाङ्कुरनिकरमिव हृदयम् उत्तरीयदुकूलवल्कलैकदेशेन संछादयन्ती गलता अवतंसपल्लवेन, श्रोतुं श्रवणेनेव शोभमाना धावमानेन, अनवरतश्वाससन्दोहदोलायितां जीविताशामिव आसन्नतरुणतरुलतामवलम्बमाना, समुत्फुल्लस्य मुखशशिनो लावण्यस्य प्रवाहेण शृङ्गाररसेनेव प्लावयन्ती सकलं जीवलोकं, शयनकुसुमपरिमलमिलितैः मदनानलधूमश्यामलैः मधुकरकदम्बकैः मनोरथैरिव मूर्तैर्निर्गतयोत्क्षिप्यमाणा कुसुमशयनीयात् स्मरशरसंज्वरिणी मन्दं मन्दमुदगात्। 'उपांशु कथय' इति कपोलतलप्रतिबिम्बितां लज्जया संज्ञया कर्णमूलमिव मालतीं प्रवेशयन्ती मधुरया गिरा सधीरमुवाच—'सखि! मालति! किमर्थमेवमभिदधासि। काहमवधानदानस्य शरीरस्य प्राणानां वा। सर्वस्याप्रार्थितेऽपि हि प्रभवत्येवातिपेशलः चक्षुष्यो जनः। सा न काचिद् या न भवसि मे स्वसा सखी प्रणयिनी प्राण-

---

साकूता साभिप्राया। 'आकूतं स्यादभिप्रायः' इति हलायुधः। प्रस्तरः शयनम्। श्रोतुमित्यादि। श्रोतुं धावमानेन श्रवणेन शोभमानेनेत्यन्वयः। अनवरतेत्याद्युभयत्र समानम्। दोलायितां चालिताम्। प्लावयन्ती सञ्चारिणी। संज्वरिणी सन्तापवती। उपांशु अप्रकाशम्। संज्ञया सङ्केतेन। सर्वस्येति। अप्रार्थिते प्रार्थनाभावे। प्रभुः स्वामी। पेशलः दक्षः। चक्षुष्यः सुभगः। अन्यो जनः केषांचित् प्रार्थनयैव यस्यकस्यचित् प्रभुर्भवति। चक्षुष्यस्तु जनः प्रार्थनाभावेऽपि स्वभावत एव सर्वस्य प्रभुर्भवति। न काचिदित्यादि। स्वसा सखी प्रणयिनी प्राणसमा चेति या न भवसि तथा कासि त्वं न काचिद् भवसि,

समा च। नियुज्यतां यावतः कार्यस्य क्षमं क्षोदीयसो गरीयसो वा शरीरमिदम्। आश्रवं मे त्वयि हृदयम्। प्रीत्या प्रतिसरास्मि ते। व्यावृणु वरवर्णिनि! विवक्षितम्' इति। सा त्ववादीत्। 'देवि! जानास्येव माधुर्यं विषयाणां, लोलुपतां चेन्द्रियग्रामस्य, उन्मादितां च नवयौवनस्य, पारिप्लवतां च मनसः। प्रख्यातैव च मन्मथस्य दुर्निवारता। यतो न मामुपालम्भेनोपस्थातुमर्हसि। न बालिशता न चपलता न चारणता वा वाचालतायाः कारणम्। न किञ्चिन्न कारयत्येवासाधारणी स्वामिभक्तिः। सा त्वं देवि! यदैव दृष्टासि देवेन तत एवारभ्य तस्य कामो गुरुः, चन्द्रमा जीवितेशः, मलयमरुदुच्छ्वासहेतुः, आधयोऽन्तरङ्गस्थानेषु, सन्तापः परमसुहृत्, प्रजागर आप्तः, मनोरथाः सर्वगताः, निःश्वासा विग्रहाग्रेसराः, मृत्युः पार्श्ववर्ती,

---

त्वं सर्वैव भवसीत्यर्थः। नियुज्यतामित्यादि। क्षोदीयसः क्षुद्रतरस्य। क्षमं योग्यम्। क्षोदीयसो गरीयसो वा यावतः कार्यस्य इदं शरीरं क्षमं तावति कार्ये इदं नियुज्यताम्। शरीरेण यावच्छक्यं तावत् सर्वं करोमीति यावत्। प्रतिसरा नियोज्या। 'अस्त्री प्रतिसरो हस्तसूत्रे ना तु चमूकटौ। आरक्षे व्रणशुद्धौ च नियोज्ये त्वभिधेयवत् ॥' इति वैजयन्ती। व्यावृणु स्फुटय। लोलुपताम् उत्सुकताम्। इन्द्रियग्रामस्य इन्द्रियसमूहस्य। संहतावित्यनुवृत्तौ, वैजयन्ती—'ग्रामः परोऽस्त्राद् विषयाद् गुणाद् भूतेन्द्रियार्थकात्' इति। पारिप्लवतां चञ्चलताम्। उपालम्भेनोपस्थातुं दोषग्रहणेनोपस्थातुम्। बालिशता अज्ञता। चारणता कुशीलवता, विकटतेत्यर्थः। गुरुः आचार्यः। मुख्यार्थः—जीवितेशः प्राणपतिः, अतिबन्धुरित्यर्थः। अन्यत्र जीवितपतिरित्यर्थः। चन्द्राधीनं तज्जीवितमिति यावत्। उच्छ्वासहेतुः आश्वासहेतुः। अन्यत्र दीर्घोच्छ्वासहेतुः। आधयो मनःपीडाः। अन्तरङ्गस्थानेषु प्रत्यासन्नबन्धुरस्थानेषु। अन्यत्र अन्तर्भूतचित्तादिस्थानेषु। परमसुहृत् परमः सखा। अन्यत्र परम् अतिमात्रम् असुहृत् शत्रुः, प्राणहारी। आप्तो बन्धुः, प्राप्तश्च। सर्वगताः सर्वत्र निगूढसेवकाः। अन्यत्र सर्वेषु दुरापेष्वर्थेषु गताः। विग्रहाग्रेसराः विग्रहेषु युद्धेषु अग्रतः प्रहारिणः। अन्यत्र विग्रहस्य शरीरस्य पुरो निःसारिणः। पार्श्ववर्ती नर्मसुहृत्। अन्यत्र पार्श्व एव वर्तनशीलः।

रणरणकः सञ्चारकः, सङ्कल्पा बुद्ध्युपदेशवृद्धाः। किञ्च विज्ञापयामि अनुरूपो देव्या इति आत्मसम्भावना, शीलवानिति प्रक्रमविरुद्धं, धीर इति अवस्थाविपरीतं, सुभग इति त्वदायत्तं, स्थिरप्रकृतिरिति निपुणोपन्यासः, जानाति सेवितुमिति अस्वामिभावोचितम्, इच्छति च दासतामामरणात् कर्तुमिति धूर्तालापः, भुवनस्वामिनी भवेति उपप्रलोभनं, पुण्यभागिनी भज भर्तारं तादृशमिति स्वामिपक्षपातः, त्वं तस्य मृत्युरिति अप्रियम्, अगुणज्ञासीति अधिक्षेपः, स्वप्ने तस्य बहुशः कृतप्रसादासीति असाक्षिकं, प्राणपरिरक्षार्थमर्थयत इति कातरता, तत्र गम्यतामित्याज्ञा, निवारितोऽपि बलादागच्छतीति परिभवः, तदेवमगोचरो गिराम्। श्रुत्वा देवी प्रमाणम्' इत्यभिधाय तूष्णीमभूत्।

अथ सरस्वती प्रीतिविस्तारितेन चक्षुषा प्रत्यवादीत्—'अयि न शक्नोमि बहु भाषितुम्। एषास्मि ते वचसि स्थिता। मितभाषिणि! गृह्यन्ताम् अमी प्राणाः' इति। मालत्यपि 'देवि यदाज्ञापयसि अतिप्रसादः' इत्यभिधाय हर्षपरवशा प्रणम्य प्रजविना तुरगेणावततार शोणम्। अगाच्च दधीचमानेतुं च्यवनाश्रमम्। इतरा तु सखीस्नेहेन सावित्रीमपि विदितवृत्तान्तामकरोत्। उत्कण्ठाभारभृता ताम्यता चेतसा कल्पायमानं कथंकथमपि वासरशेषमनैषीत्। अस्तमुपगते भगवति गभस्तिमति, स्तिमित-

---

सञ्चारकः हस्तादिदाता। अन्यत्र अरत्या सञ्चारकारकः। सङ्कल्पा मानसव्यापाराः। बुद्ध्युपदेशवृद्धाः बुद्धिसाचिव्यकारिणो विद्वांसः। अन्यत्र नानाविधबुद्धिजनकतया प्रवृद्धाः। अनुरूपः सदृशः। शीलवान् सत्स्वभावः, सद्वृत्त इति वा। धीरः, 'वेदना यस्तु शक्नोति नियन्तुं बहुला अपि। उद्युक्तश्च स्वबुद्ध्यैव नरोऽसौ धीर इष्यते॥' इति **दिवाकरः**। सुभगः सौन्दर्यादिगुणातिशयेन सर्वजनस्पृहणीयः। 'चक्षुष्यः सुभगः' इति **हलायुधः**। त्वदायत्तं त्वदधीनम्। निपुणोपन्यासः निपुणानामुक्तिः। स्वामिभावः स्वामित्वम्। उपप्रलोभनं प्रतारणम्। अधिक्षेपः शापः। अगोचरः गोचराभावः। प्रमाणं प्रमात्री, निश्चायिकेत्यर्थः।

अयि सानुनये प्रश्ने। प्रजविना प्रकर्षेण जवशीलेन। उत्कण्ठाभारभृता

तरमवतरति तिमिरे, प्रहसितामिव सितां दिशं पौरन्दरीं दरीमिव केसरिणि मुञ्चति शशिनि, सरस्वती शुचिनि चीनांशुकसुकुमारतरे तरङ्गिणि दुकूलकोमले शयन इव शोणसैकते समुपविष्टा स्वप्नकृतप्रार्थनापादपतनलग्नां दधीचचरणनखचन्द्रिकामिव चन्दनललाटिकां दधाना, गण्डस्थलादर्शप्रतिबिम्बितेन 'चारुहासिनि, अयमसावाहूतो हृदयरुचितो जनः' इति श्रवणसमीपवर्तिना निवेद्यमानमदनसन्देशेवेन्दुना, विकीर्यमाणनखकिरणचक्रवालेन बालव्यजनीकृतचन्द्रकरेणेव करेण वीजयन्ती स्वेदिनं ललाटपट्टं, 'अत्र दधीचादृते न केनचित् प्रवेष्टव्यम्' इति तिरश्चीनां चित्तभुवा पातितां विलासवेत्रलतामिव बालमृणालिकामधिस्तनं कथमपि हृदयेन वहन्ती प्रतिपालयामास तम्। आसीच्चास्या मनसि—'अहमपि नाम सरस्वती यत्रामुना मनोजन्मना निरनुक्रोशेन परतन्त्रीकृता। तत्र का गणना इतरासु तपस्विनीषु अतितरलासु तरुणीषु' इति।

आजगाम च मधुमास इव सुरभिगन्धवहः, हंस इव कृतमृणालधृतिः,

---

उत्कण्ठागरिमभारिणा। शुचिनि शुद्धे, धवले च। तरङ्गिणि भङ्गवति। सन्देशः सन्देशवचनम्। बालव्यजनं चामरः। तिरश्चीनां तिर्यग्गताम्। प्रतिपालयामास प्रतीक्ष्य स्थितवती। अहमित्यादि। मनोजन्मना कामेन। निरनुक्रोशेन निर्दयेन। गणना संख्यानम्। *[तपस्विनीषु शोचितव्यासु, हिताहिताज्ञानात् शोचनयोग्यासु इत्यर्थः।] 'करुणाप्रतिपादने तपस्वी च' इति हलायुधः। 'तपस्वी शिशिरे शोच्ये' इति वैजयन्ती। एतदुक्तं भवति— समस्तविद्यानां सम्यग् ज्ञानेन हेयोपादेयविवेकवत्यां मय्यपि कामेनैतामवस्थां प्रापितायाम् अन्यासु स्वभावतरलचित्तासु अविवेकिनीषु कामिनीषु का गणनेति।

सुरभिगन्धवहः शोभनचन्दनादिगन्धधारी। अन्यत्र सुरभिः शोभनगन्धो गन्धवहो वायुर्यस्य। मृणालधृतिः मृणालधारणम्। अन्यत्र मृणाले धृतिः।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

शिखण्डीव घनप्रीत्युन्मुखः, मलयानिल इवाहितसरसचन्दनधवल-तनुलतोत्कम्पः, आकृष्यमाण इव कृतकिरणकचग्रहेण ग्रहपतिना, प्रेर्यमाण इव कन्दर्पोद्दीपनदक्षिणेन दक्षिणानिलेन, उह्यमान इवोत्कलिका-बहुलेन रतिरसेन, परिमलसम्पातिना मधुपपटलेन पटेनेव नीलेनाच्छादिताङ्गयष्टिः, अन्तःस्फुरता मत्तमदनकरिकर्णशङ्खायमानेन प्रतिमेन्दुना प्रथमसमागमविलासविलक्षस्मितेनेव धवलीक्रियमाणैककपोलोदरो मालती-द्वितीयो दधीचः। आगत्य च हृदयगतदयितानूपुररवमिश्रयेव हंसगद्गदया गिरा कृतसम्भाषणो, यथा मन्मथ आज्ञापयति, यथा यौवनमुपदिशति, यथा विदग्धताध्यापयति, यथानुरागः शिक्षयति, तथाभिरामां रामाम् अरमयत्। उपजातविस्रम्भा चाकथयदात्मानमस्य सरस्वती। तया च सार्धम् एकदिवसमिव संवत्सरमधिकम् अनयत्।

---

घनप्रीत्युन्मुखः दृढप्रीतियुक्तः। अन्यत्र घने मेघे प्रीत्या ऊर्ध्वमुखः। आहितेत्यादि। *[आहित उद्भूतः। सरसेन आर्द्रेण चन्दनेन चन्दनानुलेपनेन धवलायाः शुभ्रायाः तनुलताया उत्कम्पो वेपथुः यस्य। पुरुषसम्बन्धिन्यपि तनुः कार्श्याल्लतेति रूपिता। अन्यत्र आहितः विहितः] सरसानाम् अशुष्काणां चन्दनानां चन्दन-वृक्षाणां धवलायाः चारोः तनोः कृशाया लतायाः उत्कम्पः कम्पो येन। 'चारौ श्रेष्ठे वृषे श्वेते धवलो धवली गवि' इति वैजयन्ती। उत्कलिका औत्सुक्यं, तरङ्गश्च। 'आयल्लकमुत्कण्ठा स्यादुत्कलिका रणरणकभूमिः' इति हलायुधः। रतिरसेन। रसशब्देन जलं च ध्वन्यते। हंसगद्गदया हंसस्वनवद् गद्गदया। गद्गदः कण्ठमूलगत ईषत्स्फुटः शब्दः। 'कलहस्तु गलमूलस्थो गद्गदः स मनाक् स्फुटः' इति वैजयन्ती। अत्र तु स्वरगतमस्फुटत्वं लक्ष्यते। गद्गदत्वं च मदनपार-वश्यादुद्भूतम्।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

अथ दैवयोगात् सरस्वती बभार गर्भम्। असूत चानेहसा सा सर्वलक्षणाभिरामं तनयम्। तस्मै तु जातमात्रायैव 'सम्यक् सरहस्याः सर्वे वेदाः, सर्वाणि च शास्त्राणि, सकलाश्च कलाः, सर्वाश्च विद्या, मत्प्रसादात् स्वयमेवाविर्भविष्यन्तीति' वरमदात्। सद्भर्तृश्लाघया च दर्शयितुमिव हृदयेनादाय दधीचं पितामहादेशात् समं सावित्र्या पुनरपि ब्रह्मलोकम् आरुरोह। गतायां च तस्यां दधीचोऽपि हृदये ह्रादिन्येवाभिहतो भार्गववंशसमुद्भूतस्य भ्रातुर्ब्राह्मणस्य भार्याम् अक्षमालाभिधानां मुनिकन्यकाम् आत्मसूनोः संवर्धनाय नियुज्य विरहातुरः तपसे वनमगात्। यस्मिन्नेव वासरे सरस्वत्यसूत तनयं तस्मिन्नेव दिवसे अक्षमालापि सुतं प्रसूतवती। तौ तु सा निर्विशेषं सामान्यस्तन्याशिनौ शनैश्शनैः शिशू समवर्धयत्। एकस्तयोः सारस्वताख्य एवाभवत्। अपरोऽपि वत्सनामा। आसीच्च तयोः सोदर्ययोरिव सहजस्पृहणीया प्रीतिः।

अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्यासम्भारः तस्मिन् सवयसि भ्रातरि प्रिये प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास। चकार च कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम्। आत्मनापि आषाढी, कृष्णाजिनी, अक्षवलयी, वल्कली, मेखली, जटी च भूत्वा तपस्यायै जनयितुरेव जगामान्तिकम्।

---

अनेहसा कालेन। 'कालो दिष्टोऽप्यनेहापि' इत्यमरः। तस्मै वरम् अदादिति सम्बन्धः। सरहस्याः सवेदान्ताः। श्लाघया विकत्थनेन। एतत् सरस्वतीशापादिवृत्तान्तवर्णनं तत्प्रसादादाविर्भूतसमस्तविद्यासम्भारेण सारस्वतेन संक्रामितविद्यासम्पत्तेः वत्सस्य वंशे जातस्य भट्टबाणस्यापि सरस्वतीप्रसादसूचनार्थम्। ह्रादिन्या वज्रेण। सोदर्ययोः सहजातयोः। प्रीतिः स्नेहः।

सम्भारः समूहः। आत्मना स्वयम्। आषाढी दण्डवान्। अक्षवलयी पद्माक्षवलयवान्। मेखली मौञ्जीयुक्तः। 'मौञ्जी तु मेखला क्षोणी' इति वैजयन्ती। तपस्यायै तपसे। जनयितुः पितुः।

अथ वत्सात् प्रवर्धमानादिपुरुषचरणजनितात्मोन्नतिः, निर्गतप्रघोषः, परमेश्वरशिरोधृतः, सकलकलागमनगंभीरः, महामुनिमान्यः, विपक्षक्षोभक्षमः, क्षितितललब्धायतिः, अस्खलितप्रवृत्तो भागीरथीप्रवाह इव पावनः प्रावर्तताितिविमलो वंशः। यस्मादजायन्त वात्स्यायननामानो गृहमुनयः,

---

प्रवर्धमानेत्यादि। प्रवर्धमाना आदिपुरुषाणां पूर्वपुरुषाणां चरणैः वृत्तैः जनिता कृता आत्मोन्नतिः आत्मोच्छ्रायो यस्य। *[अत्र चरणशब्दो वृत्ते वर्तते। 'वृत्तैकभक्ते चरणे चरणा' इति वैजयन्ती। भागीरथीप्रवाहपक्षे प्रवर्धमानादिपुरुषस्य परमपुरुषस्य चरणात् पादात् जनितात्मत्वात् सम्भूता उन्नतिः यस्य।] निर्गतप्रघोषः, घुष्यत इति घोषः कीर्तिः दिगन्तरेषु निस्सृतः प्रकृष्टो घोषो यस्य। अन्यत्र निर्गतः प्रघोषः प्रकृष्टो ध्वनिः यस्य। परमेश्वरशिरोधृतः, परमेश्वरा राजानः, तैः शिरसा धृतो लालितः। अन्यत्र परमेश्वरेण देवेन शिरसा धृतः ऊढः। सकलकलागमगम्भीरः सकलानां समस्तानां कलानां विद्यानाम् आगमनेन अधिगत्या गम्भीर उदात्तः। अन्यत्र सकलकलागमश्च गम्भीरश्च। कलकलागमः कलकलशब्दसहितागमनम्। गम्भीरोऽगाधः। विपक्षक्षोभक्षमः प्रतिपक्षनिरासमर्थः। अन्यत्र वीनां पक्षिणां पक्षैः पतत्रैः, क्षोभस्य सञ्चलनस्य योग्यः। आयतिः प्रभावः, गतिश्च; दीर्घता वा। 'आयतिर्दीर्घतायां स्यात् प्रभावागामिकालयोः' इति वैजयन्ती। अस्खलितप्रवृत्तः सुललितप्रवृत्तः। अस्खलितं सन्मार्गादभ्रष्टं प्रवृत्तं प्रकृष्टवृत्तिः यस्य। अन्यत्र स्खलनरहितं गतः। पावनः शुद्धिकरः। विमलः निष्कलङ्कः, निर्मलश्च। वात्स्यायननामानो द्विजातय इति सम्बन्धः। वत्सशब्दाद् वत्सस्यापत्यं गोत्रमिति 'गर्गादिभ्यो यञ्' (पा० सू० ४. १. १०५.) इति यञि कृते 'यञिञोश्च' (पा. सू. ४. १. १०१.) इति फक्। ततो वात्स्यायन इति रूपम्। गृहमुनयः गृहे वर्तमाना अपि मुनि-

---

* कोष्ठगतान्तर्गतो भागः खगपाठयोर्नास्ति।

१. चरितैः-ख. ग. २. प्रवाहः, ३. स्खलितरहितं-क.

**आश्रितश्रुतयोऽपि अनालम्बितालीकबककाकवः, अकृतकुक्कुटव्रताः अवैडाल-**

---

व्रतधारिणः। आश्रितश्रुतयः दुर्जनाः। 'दोषान् वक्तुं परेषां यः प्रभूणामाश्रित-श्रुतिः। स आश्रितश्रुतिः प्रोक्तः तमाहुर्दुर्जनं बुधाः॥' अपिशब्दो विरोध-द्योतनाय प्रयुक्तः। अनालम्बितालीकबककाकवः अनालम्बितम् अस्वीकृतम्। अलीकम् असत्यम्। बको नैकृतिकत्वादिगुणोपेतः। 'अधोदृष्टिर्नैकृतिकः स्वार्थ-साधनतत्परः। शठो मिथ्या विनीतश्च बकव्रतधरो द्विजः॥' इति। अथवा— 'आमिषाणां स्वपुरतो नित्यम् आस्वयमागमात्। निश्शङ्कं बकवद् दुष्टो य आस्ते स बकः स्मृतः॥' काकुः भिन्नाभिप्रायवचनम्। चाटूक्तिरिति केचित्। वक्ष्यति च—'न सेवाकाकुकौशलम्' इति। बकस्य काकुः बककाकुः। आलम्बितम् (अलीकं) बककाकुश्च यैर्न भवति ते अनालम्बितालीकबककाकवः। आश्रित-श्रुतीनाम् अनालम्बितालीकबककाकुत्वं विरुद्धम्। आश्रितश्रुतयश्चेद् आलम्बिता-लीकबककाकव एव भवन्ति। एवमपिशब्दसामर्थ्याद् अकृतकुक्कुटव्रता इत्यादीनां सौहार्द्रवार्द्रहृदया इत्यादीनामपि द्विजातिविशेषणानां वाक्यानाम् आश्रितश्रुतिना विरोधो द्रष्टव्यः। उत्तरत्र तथा चशब्दोऽप्यत्र विरोधानुवृत्तौ लिङ्गम्। मुख्यार्थः— आश्रितश्रुतयः आश्रितवेदाः। अकृतकुक्कुटव्रताः, कृतं प्रधानं पापं गोपयित्वा निमित्तान्तरं लोकस्य व्यपदिश्य तदर्थं चर्यमाणं व्रतं कुक्कुटव्रतम्। यत् स्मृतिः—'यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते। पापं व्रतेन प्रच्छाद्य कौक्कुटं नाम तद्व्रतम्॥' अथवा—'बलात्कारेण या भुक्तिः साध्वीनां परयोषिताम्। तां कौक्कुटव्रतमिति कथयन्ति मनीषिणः॥' अवैडालवृत्तयः, धर्मध्वजादिगुणोऽवैडालवृत्तिः। *[यत् स्मृतिः— धर्मध्वजः सदा लुब्धश्छाद्मिको लोकडाम्भिकः। बैडालव्रतिको ज्ञेयो हिंस्रः स्यात् सर्ववञ्चकः॥' इति। अथवा—'यावत्प्राद्यानु-कूल्यं न स्थित्वा लब्धे तु भक्षणे। प्रदातारमनादृत्य गतिर्बैडालवर्तनम्॥'] कृतघ्नते-त्यर्थः। उक्तं च—'दीयते स्वच्छहृदयैः पिण्डो येनैव पाणिना। तमेव हि विलुम्पन्ति

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

वृत्तयः, विवर्जितजनपक्तयः, परिहृतकपटकौरुचिकीकूटाकूताः, अगृहीतगह्वराः, न्यक्कृतनिकृतयः, प्रसन्नप्रकृतयः, विहतविकृतयः, परपरिवादपराचीनचेतसः, वर्णत्रयव्यावृत्तिविशुद्धान्धसः, धीरधिषणाः, अवधूताध्येषणाः, असङ्कसुकस्वभावाः, प्रणतप्रणयिनः, शमितसमस्तशाखान्तरसंशीतयः उद्घाटितसमस्तगूढार्थग्रन्थयः, कवयः, वाग्मिनः, विमत्सराः, परसुभाषितव्यसनिनः, परिचयपेशलाः, विदग्धपरिहासवेदिनः, नृत्तगीतवादित्रे-

---

मार्जाराइव दुर्जनाः ॥'(इति)। विवर्जितजनपक्तयः न्यक्कृतगौरवाः। जनकृतगौरवापेक्षारहिता इत्यर्थः। 'पक्तिर्गौरवपाकयोः' इति **वैजयन्ती**। परिहृतकपटकौरुचिकीकूटाकूताः परिहृतं वर्जितम्। 'निरस्तमपविद्धं च प्राज्ञाः परिहृतं विदुः' इति **हलायुधः**। कपटं कैतवम्। कौरुचिकी कुत्सिताभिलाषः। कुशब्दः कुत्सितार्थः। कुत्सितेषु रुचिरस्यास्तीति कुरुचिकः, तस्य भावः कौरुचिक्यम्। 'षिद्गौरादिभ्यश्च' (पा० सू० ४. १. ४१.) इति ङीषि कृते, 'हलस्तद्धितस्य' (पा० सू० ६. ४. १५०.) इति यकारलोपे कौरुचिकीति रूपम्। कौरुचिकमित्यबुध्यमानाः। कूटाकूतं कैतवाभिप्रायम्। 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥' इत्यमरः। गह्वरं दम्भः। 'गह्वरं कन्दरे दम्भे' इति **वैजयन्ती**। न्यक्कृतनिकृतयः निरस्तशाठ्याः। प्रकृतिः स्वभावः। पराचीनं पराङ्मुखम्। वर्णत्रयव्यावृत्तिविशुद्धान्धसः स्वव्यतिरिक्तक्षत्रियादिवर्णत्रयव्यावृत्त्या विशुद्धं अन्धोऽन्नं येषाम्। 'अस्त्री भक्तमन्धोऽन्नम्' इत्यमरः। धीरधिषणा गम्भीरबुद्धयः। अध्येषणा 'अध्येषणा याच्ञा' इत्यमरः। असङ्कसुकस्वभावाः अस्थिरः सङ्कसुकः, 'सङ्कसुकोऽस्थिरे' इत्यमरः। तदन्योऽसङ्कसुकः। स्थिरस्वभावाः। शाखान्तरसंशीतयः वेदशाखाभेदसन्देहाः। उद्घाटितं भेदितम्। गूढार्थम् अस्फुटार्थम्। ग्रन्थयो बन्धनाः। कवयः काव्यकृतः। विमत्सराः विगतमात्सर्याः। परसुभाषितव्यसनिनः परकृतसूक्तिषु तात्पर्यवन्तः। विदग्धपरिहासः अग्राम्यनर्मोक्तिः। वादित्रं वीणा-

---

१. त्यक्तजनकृतगौरवाः;—क.

**रवंबाद्याः, ऐतिहासिकाः, वितृष्णाः, सानुक्रोशाः, सत्यशुचयः, सर्वातिथयः, सर्वसाधुसम्मताः, सर्वसत्त्वसाधारणाः, सौहार्दद्रवार्द्रहृदयाः, तथा च सर्वगुणोपेता राजसेनाभिभूताः, क्षमाभाजः आश्रितनन्दनाः, अनिस्त्रिंशाः**

---

मुखवंशकांस्यादिकं चतुर्विधं वाद्यम् । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यं तालादिकं घनम् ॥ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः । ऐतिहासिका इतिहासवेदिनः । तद्वेत्त्यर्थे 'आख्यानाख्यायिकेतिहासेभ्यश्च' (वा० ४. २. ६०.) इति ठक् । इतिहासाश्च भारतरामायणादयः । वितृष्णाः विगताभिनिवेशाः । सानुक्रोशाः सदयाः । 'अनुक्रोशः कृपा शूकम्' इति हलायुधः । सर्वातिथयः, 'ये ब्राह्मणाद्याश्चण्डालपर्यन्ता मानवा भुवि । ते सर्वेऽतिथयो येषां ते सर्वातिथयः स्मृताः ॥' इति । सत्त्वाः प्राणिनः । सर्वगुणोपेताः सर्वगुणैः सत्त्वरजस्तमोभिः युक्ताः । राजसेनाभिभूताः रजोगुणेन प्राप्ताः । 'भू प्राप्तौ' इति धातुः । 'लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च' इत्यमरः । सत्त्वादिसर्वगुणोपेतानां राजसेनाभिभूतत्वं विरुद्धम् । मुख्यार्थः—औदार्यादिसमस्तगुणोपेताः राजसेनाभिभूता रजोगुणयुक्तेन जनेन बाधिताः । क्षमाभाजः भूमिभाजः । आश्रितनन्दना आश्रितेन्द्रोद्यानाः । मुख्यार्थः— क्षमाभाजः क्षान्तियुक्ताः । आश्रितनन्दनाः आश्रितानां नन्दयितारः । अनिस्त्रिंशाः खड्गहीनाः । विद्याधरा देवयोनिविशेषाः । अनिस्त्रिंशता विद्याधराणां विरुद्धम् । विद्याधराश्चेत्[1] खड्गधारिण एव भवन्ति । खड्गादिसिद्धियुक्तत्वाद् विद्याधरत्वस्य । तथा चायमेव कविरुत्तरत्र वक्ष्यति—'कुन्तली किरीटी कुण्डली हारी केयूरी मेखली खड्गी कवची भूत्वा विद्याधरत्वमाप' इति । मुख्यार्थः—अनिस्त्रिंशा अक्रूराः । 'निस्त्रिंशः क्रूरखड्गयोः' इति वैजयन्ती ।

---

१. चेत् सदा खड्ग, २. खड्गादिविधि—ख.ग. ३. च स्वयमेव—क.

**विद्याधराः, अजडाः कलावन्तः, अदोषास्तारकाः, अपरोपतापिनो भास्वन्तः, अनूष्माणो हुतभुजः, अकुसृतयो भोगिनः, अस्तम्भाः पुण्यालयाः, अलस-**

---

विद्याधरा विद्वांसः। अजडा अशीतलाः। कलावन्तश्चन्द्राः। नात्र बहुवचनकरणादर्थविशेषोऽस्तीति मन्तव्यम्। कलावच्छब्दार्थध्वनिमात्रमेव विवक्षितम्। अनेकप्रकारत्वात् श्लेषालङ्कारा विभक्तिवचनाद्यन्तरेण[1] प्रकृतिमात्रेणापि भवन्ति। *[कदाचित् प्रकृतिः कुत्रापि भवति, कदाचिद् विभक्त्यन्तैः तुल्यवचनैः। कदाचिद् वचनतात्पर्यं च नास्ति। अतोऽत्रापि बहुवचनकरणे नास्ति तात्पर्यम्] उत्तरत्राप्येवंविधेषु वाक्येषु अयमेव प्रकारो द्रष्टव्यः। मुख्यार्थः—अजडा अनिर्बुद्धाः, अथवा अस्तब्धाः। (अना?आ)लोच्यैव कारिण इति। 'जडो जाल्मश्च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि' इति वैजयन्ती। कलावन्तः चतुष्षष्टिकलाविदः। अदोषा दोषरहिताः, रात्रिसम्बन्धरहिता[2] इत्यर्थः। 'निशा च दोषा' इति हलायुधः। तारका नक्षत्राणि। मुख्यार्थः— अदोषा अपापाः। तारका व्यसनादिभ्य उत्तारकाः। अपरोपतापिनः परेण उत्तमेन उपतापेन उष्णेन विहीनाः। भास्वन्त आदित्याः। मुख्यार्थः—अपरोपतापिनः अनन्यक्लेशाः[3], अकृतपरपीडा इत्यर्थः। भास्वन्तः तेजस्विनः। अनूष्माण उष्णहीनाः। हुतभुजः अग्नयः। मुख्यार्थः—अनूष्माणः, ऊष्मशब्देन तीव्रता लक्ष्यते। तीव्रतारहिता इत्यर्थः। हुतभुजो हुतशिष्टभोजिनः[4]। अकुसृतयः, कुशब्दः कुत्सितार्थः। कुत्सिता सृतिः गमनं येषां ते कुसृतयः। कुत्सितगतिरहिता अकुसृतयः, अकुटिलगतय इत्यर्थः। अथवा कुर्भूमिः सृतिः पन्थाः येषां ते कुसृतयः। 'पदवी सृतिः' इत्यमरः। तदन्ये त्वकुसृतयः। अथवा कौ भूमौ सृतिर्गमनं येषां ते कुसृतयः। तदन्ये त्वकुसृतयः। भोगिनः सर्पाः। मुख्यार्थः— अकुसृतयः शाठ्यरहिताः। 'कुसृतिर्निकृतिश्शाठ्यम्' इत्यमरः। भोगिनः सुखिनः। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। अस्तम्भाः स्थूणारहिताः। अत्र मूलस्तम्भो विवक्षितः। पुण्यालया देवालयाः। मुख्यार्थः— अस्तम्भा जडीभावरहिताः। 'स्तम्भौ स्थूणाजडीभावौ' इत्यमरः। पुण्यालयाः पुण्यानां स्थानभूताः। अलस-

---

१. वचनान्यन्तरेण—क. *कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति. २. रात्र्यन्धरहिता—ख. ग. ३. क्लेशकराः— ४. भोजना इत्यर्थः—क.

क्रतुक्रिया दक्षाः, अव्यालाः कामजितो द्विजातयः ।

तेषु चैवमुत्पद्यमानेषु, संसरति संसारे, यात्सु युगेषु च, अवतीर्णे कलौ, वहत्सु वत्सरेषु, व्रजत्सु वासरेषु, अतिक्रामति काले, प्रसवपरम्पराभिः अनवरतमापतति विकासिनि वात्स्यायनकुले, क्रमेण कुबेरनामा, वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे। तस्याभवन् अच्युतः ईशानः, हरः, पाशुपतश्चेति चत्वारो युगारम्भा इव ब्रह्मतेजोजन्यमानप्रजाविस्ताराः, नारायणबाहुदण्डा इव सच्चक्रनन्दकास्तनयाः । तत्र पाशुपतस्य एक एवाभवद् भूभार इवाचलकुलस्थितिहेतुः चतुरुदधिगम्भीरः अर्थपतिरिति नाम्ना सकलप्राग्रजन्मचक्रचूडामणिर्महात्मा सूनुः । सोऽजनयद् भृगुम्, हंसं, शुचिं, धर्मं, कविं, महीदत्तं, जातवेदसं चित्रभानुं, त्र्यक्षकं, विश्वरूपं, मुखदक्षं चेत्येकादशरुद्रानिव सोमामृतरस-

---

क्रतुक्रियाः अनाशितयागक्रियाः । दक्षाः दक्षप्रजापतयः । मुख्यार्थः—अलुप्तक्रतुक्रियाः अनुष्ठितयागक्रियाः । लुप्तम् अननुष्ठितम् । दक्षाः समर्थाः । अव्यालाः आभरणभूतसर्परहिताः । कामजितो महादेवाः । मुख्यार्थः—अव्याला अशठाः । 'व्यालो दुष्टगजे सर्पे श्वापदे च पुमांस्त्रिषु । शठे च' इति वैजयन्ती । कामजितः कामगुणजितः ।

संसारः जननमरणादिः । वहत्सु गच्छत्सु । प्रसवपरम्पराभिः पुत्रपौत्रादिसन्ततिभिः । वैनतेयः गरुडः । गुरुपक्षपाती गुरुस्नेहवान् । अन्यत्र गुरुणा बृहता पक्षेण पतितुं शीलम् अस्य । द्विजः ब्राह्मणः, पक्षी च । ब्रह्मतेजः ब्रह्मणः परमेष्ठिनः तेजो वीर्यम् । प्रजाविस्तारः सन्तत्यविच्छेदः । अन्यत्र प्राणिविस्तारः । सच्चक्रनन्दकाः विद्वत्समूहानन्दकारिणः । अन्यत्र सन्तौ शोभनौ चक्रनन्दकौ सुदर्शनखड्गौ येषाम् । अचलकुलस्थितिहेतुः अचलाया निश्चलायाः कुलस्य वंशस्य स्थितेर्हेतुः । अन्यत्र अचलानां पर्वतानां कुलस्थितिहेतुर्यस्येति बहुव्रीहिः । चतुरुदधिगम्भीरः चतुस्समुद्रवद् गम्भीरः । अन्यत्र चतुर्भिरुदधिभिः

शीकरच्छुरितमुखान् पवित्रान् पुत्रान्। अलभत च चित्रभानुः तेषां मध्ये राज्यदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम्। स बाल एव बलवतो विधेर्वशादुपसम्पन्नया व्ययुज्यत जनन्या। जातस्नेहस्त्वतितरां पितैवास्य मातृतामकरोत्। अवर्धत चायमधिकतरमाधीयमानधृतिर्धाम्नि निजे।

कृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चतुर्दशवर्षदेशीयस्य पितापि श्रुतिस्मृतिविहितं कृत्वा द्विजन्मोचितमखिलं पुण्यजातं कालेना-दशमीस्थ एवास्तमगमत्। संस्थिते च पितरि महता शोकवेगेना-भीलमनुप्राप्तो दिवानिशं दह्यमानहृदयः कथमपि कतिपयान् दिवसा-नात्मगृह एवानैषीत्। गते च विरलतां शोके शनैश्शनैः अविनय-निदानतया च स्वातन्त्र्यस्य, कुतूहलबहुलतया च बालभावस्य, धैर्य-प्रतिपक्षतया च यौवनारम्भस्य, शैशवोचितान्यनेकानि चापलान्याचरन् इत्वरोऽभवत् अभवंश्चास्य सवयसः सुहृदः सहायाश्च। तद्यथा—प्रतीहारौ

---

गम्भीरः। सोमामृतरसशीकरच्छुरितमुखान् सोम ओषधिविशेषः, तस्यामृतानां यज्ञशेषाणां रसानां शीकरेण छुरितं मुखम् आस्यं येषाम्। अथवा सोमाख्यस्या-मृतस्य रसानां शीकरेण छुरितमुखान्। अन्यत्र सोमस्य चूडागतचन्द्रस्यामृतरस-शीकरैः पीयूषरसशीकरैः छुरितं मुखमाननं येषाम्। 'अमृतं व्योम्नि देवान्ने यज्ञ-शेषे रसायने' इति वैजयन्ती। विधेः दैवस्य। वशात् प्रभावात्। 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति वैजयन्ती। उपसम्पन्नया मृतया। 'परासुरुपसम्पन्नः' इति हलायुधः। धृतिः सौख्यम्। धाम्नि गृहे।

समावृत्तस्य गुरोर्गार्हस्थ्याय लब्धानुज्ञस्य[1]। 'गुरोस्तु यः। लब्धानुज्ञः समावृत्तः' इत्यमरः। जातं समूहम्। अदशमीस्थः अवृद्धः। 'दशमीस्थौ क्षीणरागवृद्धौ' इत्यमरः। अस्तं मरणम्। संस्थिते मृते। आभीलं कृच्छ्रम्। 'स्यात् कष्टं कृच्छ्रमाभीलम्' इत्यमरः। निदानतया प्रधानकारणतया। इत्वरः गमनशीलः। 'इण् गतौ' इति धातोः 'इण्नशजिसर्तिभ्यः क्वरप्'

---

1. कृतानुज्ञस्य-क.

भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, कविरीशानः परं मित्रं, प्रणयिनौ भद्रसेननारायणौ, विद्वांसौ वारवाणवासवाणौ, वर्णकविर्वेणीभारतः, दिवाकरो भरतः, प्राकृतकृत्कुलपुत्रो वायुविकारः, वन्दिनावनङ्गबाण-सूचिबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गलिको मयूरकः, ताम्बूल-दायकश्चण्डालकः, भिषक्पुत्रो मन्दारकः, पुस्तकवाचकः सुदृष्टिः, कलाद-श्चामीकरः, गैरिकः सिन्धुषेणः, लेखको गोविन्दः, चित्रकृद् वीरवर्मा, पुस्तककृत् कुमारदत्तः, मार्दङ्गिको जीमूतकः, गायनौ सोमिलकग्रहा-दित्यौ, सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वो-

---

(पा०सू० ३. २. १६१.) इति ताच्छील्ये करप् । सवयसः स्निग्धाः । 'स्निग्धो वयस्यः सवयाः' इत्यमरः । प्रतीहारौ द्वारपालौ । भ्रातरौ परस्परमिति शेषः । पारशवौ शूद्रस्त्रियां ब्राह्मणाज्जातः पारशवः (ഉവാച്ചൻ). 'शूद्रस्त्रियां विप्रसुते शस्त्रे पारशवो मतः' इत्यमरः । प्रणयिनौ स्नेहिनौ । वर्णकविः—वर्णं देववाणिरिति द्वौ गीतिप्रकारौ । तत्र वर्णाख्यस्य गीतिप्रकारस्य प्रबन्धकः (ഭി[1]ഞായൽപ്പണ ക്കാരൻ) । कुलपुत्रः[2] स्ववंशजातः पुत्रः । वन्दिनौ स्तुतिपाठकौ । कात्यायनिका 'कात्यायन्यर्धवृद्धा या काषायवसनाधवा' इत्यमरः । जाङ्गलिकः विषवैद्यः । 'विषवैद्यो जाङ्गलिकः' इत्यमरः । कलादः स्वर्णकारः । 'नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः' इत्यमरः । गैरिकः[3] हेम्नि नियुक्तः । 'गैरिकः कनकाध्यक्षः' इत्यमरः । मार्दङ्गिकः मृदङ्गवादी । मृदङ्गवादनं शीलमस्य । 'शिल्पम्' (पा०सू० ४. ४. ५५) इति सूत्रेण ठक् । गायनौ गानकारिणौ । 'शिल्पिनि ष्वुन्' (पा० सू० ३. १. १४५.) इत्यधिकृत्य 'ण्युट् च' (पा०सू० ३. १. १४७.) इति ण्युट् । सैरन्ध्री, 'सैरन्ध्री परवेश्मस्था स्वतन्त्रा शिल्प-कारिका' इति वैजयन्ती । वांशिकौ वंशधमनं शिल्पम् अस्य, ठक् । गान्धर्वं

---

१. இயற்புணர்ப்பாண். २. कुलपुत्रः सद्वंशजातः, ३. गैरिकः भूरिणि (सुवर्णे

पाठ्यायो दर्दुरकः, संवाहिका केरलिका, लासकयुवा ताण्डविकः, आक्षिक आखण्डलिकः, कीनाशो भीमकः, शैलालियुवा शिखण्डकः, नर्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरसेनः, कथको जयसेनः, शैवश्चक्रघोषः, मन्त्रसाधकः करालकः, असुरविवरव्यसनी लोहिताक्षः, धातुवादी विहङ्गमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकः चकोराक्षः, मस्करी ताम्रचूडः इति। स एभिः अन्यैश्चानुचरैः अनुगम्यमानः बालतया निघ्नतामुपगतः देशान्तरालोकनकुतूहलेन च आक्षिप्यमाणहृदयः, सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणोचितेषु विभवेषु, सति च अविच्छिन्ने विद्याप्रसङ्गे, गृहान्निरगात् । अगाच्च निरवग्रहो ग्रहवानिव यौवनेन

---

गीतिशास्त्रम् । 'गान्धर्वं गीतिशास्त्रम्' इति वैजयन्ती । संवाहिका अङ्गमर्दिका । लासकः नर्तकः । आक्षिकः अक्षदेवी । 'तेन दीव्यति' (पा० सू० ४. ४. २.) इति ठक् । कीनाशः कृषिकारी । 'कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु' इति सिंहः । शैलाली [1]शैलूषः । शिलालिना प्रोक्तं नटसूत्रमधीत इत्यर्थे 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (पा० सू० ४. ३. ११०.) इति णिनिः । नर्तकी नृत्तकारिणी । पाराशरी बौद्धमुनिः पाराशर्यप्रोक्तं भिक्षुसूत्रमधीत इति णिनिः । क्षपणको [2]दिगम्बरः । कथकः कथावक्ता । शैवः शिवसिद्धान्ती । असुरविवरव्यसनी बिलप्रवेशनतत्परः । धातुवादी रसवादी । [3]दार्दुरिकः दर्दुरवादनशीलो नटः । ऐन्द्रजालिकः इन्द्रजालप्रयोजनः तत् प्रयोजनमस्येति 'प्रयोजनम्' (पा० सू० ५. १. १०८.) इति ठक् । मस्करी [illegible] 'मस्करिणौ वेणुपरिव्राजकयोः' (पा० सू० ६. १. १५४.) । निघ्नता परवशता । आक्षिप्यमाण आकृष्यमाणः । विभवेषु धनेषु *['हिरण्यं द्रविणं द्युम्नं ... विभवा अपि' इत्यमरः । अविच्छिन्ने सन्ततप्रवृत्ते । प्रसङ्गे प्राप्तौ, [illegible] निरवग्रहः निष्प्रतिबन्धः स्वतन्त्र इति च । 'स्वच्छन्दो निरवग्रहः [illegible]

---

१. शैलूषः=சக்கிக்கூத்தன், २. दिगम्बरः=அம்மணம்டிவிரல்லுவான், ३. दार्दुरिकः =குடைவிழா?குடைமுழா வாசிப்பான்-க. *कोष्ठकान्तर्गतो भागः समपाठोऽन्वितः

स्वैरिणा मनसा महतामुपहास्यताम् ।

अथ शनैः शनैः, अत्युदारव्यवहृतीनि बृहन्ति राजकुलानि सेवमानः, महार्हालापगम्भीरगुणवद्गोष्ठीश्चोपतिष्ठमानः, स्वभावधीरधीः धनानि विदग्धमण्डलानि च विगाहमानः, पुनरपि तामेव वैपश्चितीम् आत्मवंशोचितां प्रकृतिमभजत । महतश्च कालात् तमेव भूयोऽपि वात्स्यायनवंशाश्रमम् आत्मनो जन्मभूमिं ब्राह्मणाधिवासमगमत् । तत्र च चिरदर्शनादभिनवीकृतस्नेहसद्भावैः ससम्भ्रमप्रकटितज्ञातेयैः ज्ञातिभिराप्तैः उत्सवदिवस इव अभिनन्दितागमनो बालमित्रमण्डलमध्यगतो मोक्षसुखमिवान्वभवत् । इति ।

॥ इति श्रीहर्षचरिते कविवंशः प्रथम उछ्वासः ॥

---

ग्रहवान् पिशाचगृहीतः । स्वैरिणा स्वतन्त्रेण । 'स्वतन्त्रोऽपावृतः' इत्यमरः ।]

उदारव्यवहृतिः सगौरववाक्प्रयोगः । महार्हालापः सगौरवालापः । महद् अर्हतीति महार्हः । उपतिष्ठमानः सङ्गच्छन् । वैपश्चितीं विद्वत्सम्बन्धिनीम् । ज्ञातेयं बान्धवम् । 'कपिज्ञात्योर्ढक्' (पा०सू० ५. १. १२७.) । 'ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः' इत्यमरः । मित्रमण्डलं सुहृत्समूहः, सूर्यमण्डलमिति च । मोक्षणः सूर्यमण्डलमध्यवर्तिन इति भावः । इतिशब्दः समाप्तिसूचकः । 'इतिर्हेतुप्रकारादिसमाप्तिषु निगद्यते' इत्यमरः ।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने प्रथम उछ्वासः ।

---

१. 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इति मुद्रितपाठः.

# अथ द्वितीय उच्छ्वासः ।

अतिगम्भीरे भूपे कूप इव जनस्य दुरवतारस्य ।
दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ १ ॥
रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् ।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ २॥

---

अथ राज्ञः श्रीहर्षस्य भ्रातृस्थानीयं[1] कृष्णनामानं द्वारीकृत्य कवेस्तद्दर्शनं, तदारोपितगुणप्रीतेन[2] तेन च तस्य सम्भावनातिशयलाभश्च द्वितीयोच्छ्वासार्थः। तयोर्द्वयोरपि कार्ययोरुपायभूतस्यैव[3] कृष्णस्य गुणवर्णनम् अन्यापदेशेन द्वाभ्याम् आर्याभ्याम् उच्छ्वासारम्भेऽभिदधाति(?)। तत्राद्येऽर्थे प्रथमार्या। द्वितीयार्या उत्तरत्र। सर्वेष्वूच्छ्वासेषु तदुच्छ्वासार्थान् आदितो द्वाभ्यां पद्याभ्यां सुखग्रहणाय सूचयिष्यति। इदमपि प्रायेणाख्यायिकानाम् असाधारणं लक्षणमिच्छन्ति। तथा च दर्शितम्[4]—'काले भाव्यर्थशंसि च' इति।

अतिगम्भीरे महत्तरे, अगाधे च। दुरवतारस्य दुःखेनावतारः प्रवेशो यस्य। अन्यत्र दुःखेन अवतारोऽवतरणम्। दधति ददति। समीहितसिद्धिं वाञ्छितार्थसिद्धिम्। गुणवन्तः सौजन्यादिगुणयुक्ताः, रज्जुमन्तश्च। 'रज्जुस्त्रिषु घटीगुणे'[5] इत्यमरः। पार्थिवा राजानः। अन्यत्र पृथिवीविकाराः मृद्विकारा इत्यर्थः। घटकाः सम्बन्धकाः, क्षुद्रघटाश्च 'अल्पे' (पा० सू० ५. ३. ८५.) इति सूत्रेण अल्पार्थे कन्।

रागिणीत्यादि। रागिणि रागयुक्ते[6], रागदोषयुक्ते इति च। नलिने इत्युक्ते कस्मिंश्चित् पुरुष इति च ध्वन्यते। लक्ष्मीं शोभां, सम्पदमिति च। दिवसशब्देन कश्चिद् राजा च। व्यसनं, 'व्यसनं नाम यत् कण्डूं जातायामवमर्दनम्। या चेष्टा रसमाधत्ते जामितापरिहारतः॥' इति दिवाकरः।

---

१. भ्रातृस्थानीयस्य-ख. ग. २. तदारोपितगुण-क. ३. भूतस्यैव गुण-ख. ग. ४. दर्शितम् .... कवेरभिप्रायकृतैरङ्कैः कैश्चिदङ्कितैः। अति-क. ५. 'रज्जुस्त्रिषु वटी गुणः' इति मुद्रितपाठः. ६. रक्ततायुक्ते-क.

अथ तत्र अनवरताध्ययनध्वनिमुखराणि, भस्मपुण्ड्रपाण्डरललाटपट्टैः कपिशशिखाजालजटिलैः कृशानुभिरिव क्रतुलोभादागतैः बटुभिरध्यास्यमानानि, सेकसुकुमारसोमकेदारिकाहरितायमानप्रघणानि, कृष्णाजिनप्रकीर्णशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि, बालुकाविप्रकीर्यमाणनीवारबलीनि, शुचिशिष्यशतानीयमानहरितकुशपूलीपलाशसमिन्धनगोमयपिण्ड-

---

अथेत्यादि । तत्र ब्राह्मणाधिवासे । अनवरतेत्यादीनि समस्तविशेषणानि भवनतपोवनयोरुभयोरपि समानानि । शिखा काकपक्षः, अग्निज्वाला च । सेकेत्यादि । सेकः जलसेकः । सोमकेदारिका सोमवर्धनक्षेत्रम् । प्रघणो बहिरङ्गणः । 'अगारैकदेशे प्रघणः प्रघाणश्च' (पा० सू० ३. ३. ७९.) इति निपातः । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । ननु अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति सोमस्य क्रयणविधानात् क्रीतेनैव सोमेन यष्टव्यम् । इह तु कथं सोमवर्धनवर्णनम् । उच्यते—सोमेन नित्यहोमो विहितः । यदुक्तम्—'ब्रह्मवर्चसकामस्य' इति । न च तत्र क्रीतेनैवेति नियमः । क्रयणनियमस्तु ज्योतिष्टोम एव । अतो ब्रह्मवर्चसकामानां भट्टबाणबान्धवानां नित्यहोमार्थं सोमवर्धनमित्यदोषं हि । तेन भट्टबाणबान्धवानां ब्रह्मवर्चसश्रद्धातिशय उक्तः । केचित्तु 'सोमविक्रयिणो राजानं प्रदाय प्रणत' इति वचनात् सोमं वर्धयित्वा कस्यचिद्धस्ते प्रदाय क्रयणेऽप्यदोष इति सोमवर्धनं युक्तमिति परिहरन्ति । कृष्णाजिनं कृष्णमृगचर्म । प्रकीर्णं[1] विक्षिप्तम् । पुरोडाशीयं पुरोडाशार्थम् । 'तदर्थं विकृतेः प्रकृतौ' (पा० सू० ५. १. १२.) इत्यर्थे विकृतेः 'विभाषा हविरपूपादिभ्यः' (पा० सू० ५. १. ४.) इति छः । श्यामाकः धान्यविशेषः । [2]नीवारबलिः नीवारेण कृत उपहारः । पूली मुष्टिबन्धः । समिदिन्धनेति च पाठः । इन्धनगोमयम् इन्धनार्थं गोपुरीषम् । गोशब्दात् 'गोश्च पुरीषे' (पा० सू० ४. ३. १४५.) इति मयट् । 'गोविड् गोमयमस्त्रियाम्' इत्यमरः ।

---

१. प्रकीर्णं=தூவப்பட்டது, २. नीवारबलिः=செவிச்செந் நெல்...கு.

कूटसङ्कटानि, आमिक्षीयक्षीरक्षारिणीनाम् अग्निहोत्रधेनूनां खुरवलयैः विलिखिताजिरवितर्दिकानि, कामण्डलव्यमृत्पिण्डमर्दनव्यग्रहव्ययतिजनानि, वैतानवेदिशङ्कव्यानामौदुम्बरीणां शाखानां राशिभिः पवित्रितपर्यन्तानि, वैश्वदेवबलिपिण्डपाण्डरितप्रदेशानि, हविर्धूमधूसरिताङ्कणतटविटपिकिसलयानि, वत्सीयबालकलालितलसत्तरलतर्णकानि, क्रीडत्कृष्णसारच्छागशावप्रकटितपशुबन्धप्रबन्धानि, शुकशारिकाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि, साक्षात् त्रयीतपोवनानीव चिरदृष्टानां बान्धवानां प्रीयमाणो भ्रमन् भवनानि सुखमातिष्ठत्।

तत्रस्थस्य चास्य कुसुमसमययुगम् उपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः। प्रत्यग्रनिर्जितस्य

---

कूटं समूहः। आमिक्षीयम् आमिक्षार्थम्। 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः' इत्यमरः। अग्निहोत्रधेनूनां होमधेनूनाम्। वलयैः वलयाकारैर्विन्यासैः। वितर्दिका वेदिका। कामण्डलव्यं कमण्डल्वर्थम्। 'उगवादिभ्यो यत्' (पा० सू० ५. १. २.) इति यत्प्रत्ययः। व्यग्रः सम्भ्रान्तः। वैतानवेदिशङ्कव्यानां यज्ञवेदिनिखातशङ्कर्थानाम्। शङ्कुः कीलम्। अङ्कणम् अजिरम्। वत्सीयो वत्सहितः। तस्मै हितमित्यर्थे वत्सशब्दाच्छः। 'वत्सीयस्त्रिषु तद्धिते' इति वैजयन्ती। चलनम् उत्प्लुत्य गमनम्। तर्णको वत्सः। 'सद्योजातस्तु तर्णकः' इत्यमरः। क्रीडदित्यादि। क्रीडद्भिः कृष्णसारैः श्रेष्ठैः सलक्षणैः। छागशावैः अजपोतैः। प्रकटिताः पशुबन्धयज्ञस्य प्रबन्धा अविच्छेदप्रवृत्तयो येषु। कृष्णशार इति च पाठः। शारो नानावर्णः। पशुरस्मिन् बध्यत इति पशुबन्धः। शुकशारिका शुकाश्च शारिकाश्च। शारिका आलापकुशलः पक्षिविशेषः। 'वाचाला मुखरा शारिः' इति वैजयन्ती।

अस्येति। बाणकालयोः शेषविवक्षया षष्ठी। कुसुमसमययुगं वसन्ताख्ययुगम्। उपसंहरन् नाशयन्। फुल्लमल्लिकाधवलाट्टहासः फुल्ला विकसिता मल्लिका मल्लिकापुष्पाण्येव धवलाट्टहासा यस्य। अन्यत्र मल्लिकावद् धवलाट्टहासः। 'अट्टहासो महाहासः' इति वैजयन्ती। महाकालो महत्तरः कालः। महच्छब्दः

आस्तमुपगतवतोऽस्य वसन्तसामन्तस्य बालापत्येष्विव पयःपायिषु नवोद्यानेषु दर्शितस्नेहो मृदुरभूत्। अभिनवोदितश्च सर्वस्यां पृथिव्यां सर्वकुसुमबन्धनमोक्षणमकरोत् प्रतपन्नुष्णसमयः। स्वयम् ऋतुराजस्याऽगृह्यन्त अभिषेकार्द्राः चामरकलापा इव कामिनीचिकुरचयाः कुसुमायुधेन। हिमदग्धसकलकमलिनीकोपेनेव उत्तरे हिमालयाभिमुखीं यात्रामदाद् अंशुमाली।

ललाटन्तपे तपति तपने हरिचन्दनलिखितललाटिकापुण्ड्रकैः अलकचीरचीवरसंवीतैः, स्वेदोदबिन्दुमुक्ताक्षवलयवाहिभिः, दिनकराराधननियमा इव अगृह्यन्त ललनाललाटेन्दुभिः। चन्दनधूसराभिः

अत्युष्णतया दिवसस्यातिदुस्तरतामभिप्रेत्य प्रयुक्तः। महाकालशब्देन ईश्वरश्च विवक्षितः। प्रत्यग्रेत्यादि। अत्र उष्णसमयस्य कृतदिग्विजयेन प्राप्तैश्वर्येण राज्ञा साधर्म्यम् उच्यते। प्रत्यग्रम् अचिरम्। अस्तं नाशं, मरणं च। सामन्तः समीपविषयवासी राजा। पयो जलं, स्तन्यं क्षीरं च। (स्नेहः) आर्द्रता, स्निग्धवर्णता; अन्यत्र प्रेम। अभिनवोदितः अचिरोद्भूतः, अचिरप्राप्तैश्वर्य इति। बन्धनमोक्षणं वृन्तमोक्षणम्; कारागृहस्थानां संयमनमोक्षमिति च। प्रतपन् प्रकर्षेण तापं कुर्वन्; प्रकर्षेण ईश्वरीभवन्निति च। 'तप सन्तापे', 'तप ऐश्वर्ये' इति धातू। पूर्वो भौवादिकः, उत्तरो दैवादिकः। 'तप ऐश्वर्ये वा' इत्यत्र वाकारग्रहणेन ऐश्वर्येऽपि तपतीति भवतीति धातुप्रदीपकारेणोक्तत्वाच्छ्यन्प्रत्ययाभावः। अत्र दैवं च— 'सन्तापेऽर्थे तपे दाहे तापयेत् तपते तपेत्। ऐश्वर्ये वा दिवादित्वात् तप्यते तपतीति च॥' (इति) उष्णसमयशब्देन कश्चिद् राजेति च ध्वन्यते। ऋतुराजस्य ऋतुनाम्नो राज्ञः। चिकुरचयाः केशपाशाः। हिमेत्यादि। अदात् सम्पादितवान्। उत्तरे हिमालयाभिमुखीं यात्रां कुर्वन् ग्रीष्मर्तौ हिमालयप्रवेशं निर्वर्तितवानित्यर्थः।

ललाटन्तपे उष्णातिशयाल्ललाटस्य तापके। 'असूर्यललाटयोर्दृशितपोः' (पा० सू० ३. २. ३६.) इति खश्। चीरचीवरं व्रतिनां वस्त्रम्। ललाटेन्दुभिः इन्दोर्दिनकराराधनकथनं तेन तस्य परिभवसम्भावनाभिप्रायेण। चन्दनधूसराभिः

१. उत्तरा उत्तरायणात्प्रभृति हिमा–क.

असूर्यम्पश्याभिः कुमुदिनीभिरिव दिवसमसुप्यत सुन्दरीभिः। निद्रालसाश्च रत्नालोकमपि नासहन्त सुदृशां दृशः, किमुत जरठातपम्। अशिशिरसमयेन चक्रवाकमिथुनाभिनन्दिताः सरित इव नितरां तनिमानमानीयन्त सोडुपाः शर्वर्यः। अभिनवपटुपाटलामोदसुरभिपरिमलं न केवलं जलं, जनस्य पवनमपि पातुमभूदभिलाषो दिवसकरसन्तापात्।

क्रमेण च खरखगमयूखखण्डितशैशवे शुष्यत्सरसि, सीदत्स्रोतसि, मन्दस्यन्दनिर्झरझिल्लिकाझङ्कारिणि, कान्तारकपोतकूजितानुबन्धबधिरितविश्वे, श्वसत्पतत्रिणि, करीषङ्कषमरुति, विरलवीरुधि, रुधिरकुतूहलिकेसरि-

---

चन्दनानुलेपनधूसरशरीराभिः। अन्यत्र चन्दनपङ्कवद् धूसरशरीराभिः। असूर्यंपश्याभिः सूर्यं द्रष्टुमसहमानाभिरित्यर्थः। अन्यत्र सूर्यसन्निधावविकासितपुष्पाभिरित्यर्थः। पूर्ववत् खश्। दिवसं वासरम्। असुप्यत शयितं, मुकुलितं च। जरठातपं तीक्ष्णतापम्। अशिशिरेत्यादि। तरङ्गिण्यः शर्वर्यश्च तनिमानमानीयन्तेत्यर्थः। चक्रवाकमिथुनाभिनन्दिताः ऋत्वन्तराद्रात्रीणां तनुत्वाद्धियुक्तैः चक्रवाकमिथुनैरभिनन्दिता इत्यर्थः। अत्रेदमनुसन्धेयम्— चक्रवाकमिथुनानि विरहसमयेषु प्रायेण नद्यादिजलानामुभयप्रान्तेषु वर्तन्ते। तेषु पूर्णेषु विप्रकृष्टान्तरालवर्तीनि तानि इदानीं तेषां क्षीयमाणत्वाद् अल्पान्तरालवासं लभमाना रजनीजलानां वृद्धेरपि क्षयमभिनन्दन्तीति। तनिमानम् अल्पतां; कृशतां च। सोडुपाः सचन्द्राः। उडूनि पातीत्युडुपः; नक्षत्रराज इत्यर्थः। अन्यत्र जलतरणसाधनम्। 'उडुपो भेलचन्द्रयोः' इत्यजयः। भेलशब्दस्य उडुपवाचकत्वे वैजयन्ती 'उडुपं तु प्लवो भेलः' इति। अभिनवेत्यादि उभयत्र समानम्।

खगः सूर्यः। शैशवं बाल्यम्; आरम्भसमय इत्यर्थः। झिल्लिका कटुकशब्दः, क्षुद्रपक्षिविशेषः। कपोतः पक्षिविशेषः। अनुबन्धः सन्ततवृत्तिः। विश्वं लोकम्। 'विश्वं जगद्' इति वैजयन्ती। करीषङ्कषः शुष्कगोमयकाषी। 'सर्वकूलाभ्रकरीषेषु कषः' (पा० सू० ३. २. ४२.) इति खश्। 'गोमय-

किशोरलिह्यमानकठोरधातकीस्तबके, ताम्यत्स्तम्बेरमयूथवमथुतिम्यन्महामहीधरनितम्बे, दूयमानद्विरददीनदानाश्यानश्यामिकालीनमूकमधुलिहि, लोहितायमानमन्दारसिन्दूरितसीम्नि, सलिलस्यन्दसन्दोहसन्देहमुह्यद्वनमहिषविषाणकोटिलिखितस्फुटत्स्फुटितस्फटिकदृषदि, घर्मर्मरितगर्मुति, तप्तपांसुपटलकुकूलविकिरणकातरविकिरे, विवरशरणश्वाविधि, तटार्जुनकुररकूजाज्वरविवर्तनोत्तानशफरीशारोदरपङ्कशेषपल्वलाम्भसि, दवदहनजनितजगन्नीराजने, रजनीराजयक्ष्मणि, कठोरीभवति निदाघसमये, प्रतिदिशमुड्डीयमाना इवोपरेषु, प्रपाकटकुटीपटलप्रकटलुण्टाकाः, पक्कपि-

---

किशोरः शिशुः। कठोरः पक्कः। धातकी वृक्षविशेषः। *[स्तम्बेरमः गजः। वमथुः शीकरः। तिम्यद् आर्द्रीभवत्। 'तिम ष्टिम ष्टीम आर्द्रीभावे' इति धातुः। दीनं क्षीणम्। दानं मदः। आश्यानं शुष्कम्। मन्दारः पारिभद्रपुष्पम्। स्यन्दः प्रस्रवणम्। विषाणकोटिः शृङ्गाग्रम्। लिखितं भिन्नम्। स्फुटद् विशीर्यमाणम्। मर्मरितं मर्मरशब्दयुक्तम्। गर्मुद् धान्यविशेषः। कुकूलः तुषाग्निः।] 'कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले' इत्यमरः। विकिरणं क्षेपणम्। कातरः परवशः। विकिरः पक्षी। विवरशरणः बिलैकनिकेतनम्। 'शरणं गृहरक्षित्रोः' इत्यमरः। श्वाविट् मृगविशेषः। तटेत्यादि। अर्जुनः ककुभः, (മരുത്). कुररः पक्षिविशेषः। कूजाज्वरविवर्तनं कूजानिमित्तं व्यसनोद्भूतं विवर्तनं विपर्यस्तता। शफरी शफराख्यमत्स्यस्त्रीजातिः। तटार्जुने कुररशब्दश्रवणेन मृताभिरुन्मुखं प्लवमानाभिः शफरीभिः शारमित्यर्थः। दवः वनाग्निः। नीराजनं माङ्गल्यकर्मविशेषः। राजयक्ष्मणि क्षयरोगे। कठोरीभवति परिणमति। उड्डीयमाना ऊर्ध्वं पतन्तः। ऊषरेषु ऊषवत्सु देशेषु। 'ऊषसुषिमुष्कमधो रः' (पा०सू० ५. २. १०७.) इति मत्वर्थीयो रप्रत्ययः। प्रपेत्यादि। प्रपायाः पानीयशालायाः। कटकुट्याः कटकृतकुटीरस्य च सम्बन्धिनः। पटलस्य छदिषः। प्रकटलुण्टाका अतीवापहर्तारः।

---

१. धातकी=மரியாத்திப்பூ குறாத்தி, २. पारिभद्रपुष्पं=முள்முருக்கம்பூ,
३. श्वाविट्=பன்றி, ४. कुररः=அமுகுதல், ५. नीराजनं=ஆலத்தி—क.
*कोष्ठकान्तर्गतो भागः ख्गपाठयोर्नास्ति.

कच्छुगुच्छाच्छोटनचापलैः, अकाण्डकण्डूला इव कषयन्तः शर्करिलाः शर्करस्थलीः, स्थूलदृषच्चूर्णमुचः, मुचुकुन्दकन्दलदलनदन्तुराः, सन्ततपतन्मुखरचीरीनिकरशीकरसिच्यमानतनवः दारुणतरतरणितापतरले तरन्त इव तरङ्गिणि मृगतृष्णिकातरङ्गिणीनाम् अलीकवारिणि शुष्यच्छमीमर्मरमारवमार्गलङ्घनलाघवजङ्घाला रैणवावर्तमण्डलीरेचकरासकरससरभसा दग्धस्थलीमषीमलिनमलिनाः, शिक्षितक्षपणकवृत्तस्येव वनमयूरपिच्छ-

---

लुण्टाक इति । 'लुटि स्तेये' इति धातोः 'जल्पभिक्ष —'(पा०सू०३.१.१५५.) इत्यादिना षाकनि कृते रूपम् । [1]कपिकच्छुः कण्डूतिदायिनी लता । गुच्छः स्तबकः । आच्छोटनं भञ्जनम् 'छुट छेदने' इति धातुः । अकाण्डकण्डूलाः आकस्मिककण्डूयुक्ताः । [2]कण्डूः कण्डूयाः । कषयन्तः मर्दयन्तः । शर्करिलाः शर्करायुक्ताः । शर्करस्थलीः कठिनस्थलीः । [3]मुचुकुन्दः किंशुकविशेषः । कन्दलः(வல்லி) दलनं भेदनम् । पतद् भ्रमत् । [4]चीरी झिल्लिका (சீவிடு) । तरणिः आदित्यः । तरन्तः प्लवमानाः । तरङ्गिणि चलनवति । मृगतृष्णिकातरङ्गिणीनां मृगतृष्णिकाख्यनदीनाम् । मृगतृष्णिका (கானல்) । शुष्यदित्यादि । शमीमर्मरं शमीभिः वह्निवृक्षैः मर्मरं शब्दयुक्तम् । अथवा शमीवृक्षाणां बीजकोशीनाम् । 'बीजकोशी शमी शिम्बा' इति हलायुधः । मर्मरशब्दो धर्मिणि वर्तते । तथा वैजयन्ती च— 'सुखं दुःखं मलं छिद्रं कीलासं सिध्ममर्मरौ । रभसः पलितं श्वित्रमेतेषु त्रिषु धर्मिणि ॥' इति । मारवः मरुदेशसम्बन्धी । जङ्घालाः जववन्तः, अतिजवयुक्ता इत्यर्थः । 'जङ्घालोऽतिजवः' इत्यमरः । मरुदेशस्य वीरुत्प्रायत्वात् शाखाभिरप्रतिहतगामिन इत्यर्थः । रैणवेत्यादि । रेणुसम्बन्धि आवर्तनमण्डली आवर्ताकारं परितो भ्रमणम् । रेचकरासकौ नृत्तविशेषौ । रेणुनामावर्तनमण्डलाख्ययो रेचकरासकयोः सरभसा इत्यर्थः । मषीमिलनमलिनाः अङ्गारमिश्र-

---

१. कपिकच्छुः=कण्डूप्रतिकरी लता=பூனைக்காலி(நாய்க்கருணை, சிறுகாஞ்சொறி) க. कण्डूतिकरी लता—ख. २. कण्डूः=தினவு. ३. मुचुकुन्दः=முள்முருக்கு, ४. चीरी=சீவிடு ? சில்லீடு—क.

निचयान् उच्चिन्वन्तः, सप्रयाणगुञ्जा इव शिञ्जानजरत्करञ्जमञ्जरी-बीजजालकैः, सप्ररोहा इव आतपत्रुटद्वनमहिषनासानिकुञ्जनिष्ठ्यूत-स्थूलनिःश्वासैः, सापत्यका इव उड्डीयमानजवनवातहरिणपरिपाटीपेटकैः, सभ्रुकुटय इव दह्यमानखलधानबुसकूटकुटिलचलधूमकोटिभिः, सावीचय इव महोल्मुकोल्काभिः, लोमशा इव शीर्यमाणशाल्मलीफलतूलतन्तुभिः, दर्द्रुणा इव शुष्कपत्त्राङ्कुरानकुष्ठिभिः, सिराला इव शुष्यत्तृणवेणीविकिरणैः, उच्छ्रश्रव इव पूयमानयवशूकशकलशतशङ्कुभिः, दंष्ट्राला इव चलित-शल्लीसूचिशतैः, जिह्वाला इव वनवैश्वानरशिखाभिः, उत्सर्पत्सर्पकञ्चुक-चूडाला इव ब्रह्मस्तम्बरसाभ्यवहरणाय, कवलग्रहमिवोष्णैः कमलमधुभिः

---

धूसराः। मर्षि (அ०), मलसम्बन्धा इति च। उच्चिन्वन्तः एकत्र पुञ्जीकुर्वन्तः, उद्धमन्तश्च। गुञ्जाः वाद्यभाण्डाः। 'गुञ्जा स्याद् वाद्यभाण्डः' इत्यजयः। करञ्जः नक्तमालः ([illegible])। बीजं फलम्। प्ररोहः शाखाजटा[2] शिफा, अङ्कुरो वा। नासानिकुञ्जं नासारन्ध्रम्। निष्ठ्यूतं निरस्तम्। वातहरिणः मृगविशेषः। परिपाटीपेटकैः पङ्क्तिसमूहैः। खलधानम् 'खलधानं खलं स्मृतम्' इति हलायुधः। बुसं निस्तण्डुलं धान्यम्। 'कडङ्गरो बुसं क्लीबे' इत्यमरः। कूटं पुञ्जं (குவியல்)। कोटिभिः उत्कर्षैः। सावीचयः अवीचिरश्मिमयो नरकः। शाल्मली वृक्षविशेषः। फलतूलं फलसम्बन्धि तूलम्। दर्द्रुणा दर्द्रुरोगिणः। पामादित्वान्मत्वर्थीयो नः। 'दर्द्रुणो दर्द्रुरोगी स्यात्' इत्यमरः। सिरालाः सिरायुक्ताः। 'प्राणिस्थादातो लजन्यतरस्याम्' (पा० सू० ५.२.९६.) इति लच्। वेणी राजिः। पूयमानं शोध्यमानम्। शूकं धान्याग्रम्। शङ्कुभिः कीलैः। दंष्ट्रालाः दंष्ट्रायुक्ताः। शल्लीसूची शल्ल्याख्यसूची। शल्ली शल्यमृगाणां रोम। श्वावित् शल्लसंज्ञकः। 'श्वावित्तु शल्यस्तल्लोम्नि शल्ली शल्लं शलम्' इत्यमरः। ब्रह्मस्तम्बरसः ब्रह्मस्तम्बगतं जलम्। 'ब्रह्मादिस्तम्बपर्यन्तवस्तुयुक्तं जगत्त्रयम्। ब्रह्मस्तम्ब इति प्राज्ञैः सर्वदा व्यपदिश्यते॥' अभ्यवहरणाय भक्षणाय। बहुकवलग्रहम्—

---

१. करञ्जः=புங்கு, २. जटा=விழுது, ३. कलधानं=களம், ४. बुसं=பதர், ५. शाल्मली=இலவு, ६ तूलं=பஞ்சு, ७. दर्द्रु=தழுதணை, ८. शूकं=வால், (நெல் முதலியவற்றின் தோகை) ९. शल्यमृगाणां रोम=எய்ப்பன்றி முள்ளு-क.

अभ्यस्यन्तः, सकलसलिलोच्छोषणधर्मघोषणापटहैरिव[1] शुष्कवेणुवनस्फोटपटुरवैः त्रिभुवनविभीषिकाम् उद्भावयन्तः, प्रयुतचलच्चाषपक्षश्रेणिशारितसृतयः[2], त्विषिमन्मयूखलतालातप्लोषकल्माषितवपुष इव स्फुरितगुञ्जाफलस्फुलिङ्गाङ्गारकोरकिताङ्गाः, गिरिगुहागम्भीरभाङ्कारभीषणभ्रान्तयः, त्रिभुवनभस्मीकरणाभिचारचरुपचनचतुराः, रुधिराहुतिभिरिव पारिभद्रद्रुमस्तबकवृष्टिभिः तर्पयन्तः तारवान् विभावसून् वने, अशिशिरसिकतासारतारकितरंहसः, तप्तशैलविलीयमानशिलाजतुरसलवलिप्तदशदिशः, दावदहनदह्यमानचटकाण्डखण्डखचितजरत्तरुकोटरकीटपटलपुटपाकगन्धकटवः, प्रावर्तन्त उन्मत्ता इव मातरिश्वानः ।

---

‘सत्यामशक्तौ जिह्वाया विषयग्रहणं प्रति । तस्या रसज्ञताहेतोर्गण्डूषः कवलग्रहः ॥’ स्फोटः स्फुटनम् । ‘स्फुटिर् विशरणे’ इति धातुः । विभीषिकां भयम् । विपूर्वाद् बिभेतेर्धातोः ‘धात्वर्थनिर्देशे ण्वुल् वक्तव्यः’ (वा० ६. ३. १०८.) इति ण्वुलि कृते ‘भियो हेतुभये षुक्’ (पा०सू० ७.३.४०) इति षुगागमे ‘प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः’ (पा०सू० ७. ३. ४४.) इतीकारादेशे च कृते विभीषिकेति रूपम् । शारितसृतयः नानावर्णगतयः । त्विषिमान् सूर्यः । अलातम् उल्मुकम्[3] । प्लोषः दाहः । कल्माषः नानावर्णः । गुञ्जा[4] कृष्णला । भस्मीकरणाभिचारचरुपचनचतुराः भस्मीकरणार्थस्य अभिचारचरोः पचने चतुराः । अभिचारचरुः हिंसाकर्मसु पच्यमानश्चरुः । चरुशब्देनात्र दावानलादिर्विवक्षितः । पारिभद्रः किंशुकः । तर्पयन्तः अर्चयन्तः । तारवान् तरुसम्बन्धिनः । विभावसून् अग्नीन् । विलीयमानं तापेन द्रवीभूयैकत्र विष्यन्दमानम् । [5]शिलाजतुः—‘ग्रीष्मे सूर्यांशुतप्तेभ्यो गिरिभ्यो वस्तु यद् द्रुतम् । रसरूपं जतुनिभं तच्छिलाजतुसंज्ञिकम् ॥’ लिप्तं दिग्धम् । [6]चटकः कलविङ्कः । [7]अण्डं पेशीकोशः । खचितं सम्बद्धम् । कीटः क्रिमिविशेषः । कटवः कटुगन्धाः ।

---

१. ह॰ ॥ घोषणापटहैः, घोषणा=சாற்று, २. नानावर्णीकृतगतयः, ३. उल्मुकं=கடைக் கொள்ளி, ४. गुञ्जा=குன்றி, ५. शिलाजतुः=கல்மிடாம்பு? கல்மதம். ६. चटकः=ஊர்க்குருவி, ७. अण्डं कोशः=முட்டை ஓடு.

सर्वतश्च भूरिभस्त्रासहस्रसन्धुक्षणधुक्षिता इव जरदजगरगम्भीरगल-गुहावाहिभिः वायुभिः, क्वचित् स्वच्छन्दतृणचारिणो हरिणाः, क्वचित् तरुतलविवरवर्तिनो बभ्रवः, क्वचित् जटावल्कलावलम्बिनः कपिलाः, क्वचित् शकुनिकुलकुलायपातिनः श्येनाः, क्वचिद् विलीयमानलाक्षारस-लोहितच्छवयोऽधराः, क्वचिद् आसादितशकुनिपक्षकृतपटुगतयो विशिखाः, क्वचिद् दग्धनिश्शेषजन्महेतवो निर्वाणाः, क्वचित्

---

भूरि प्रभूतम्। भस्त्रा[1] चर्मकृतप्रसेवः। सन्धुक्षणधुक्षिताः वर्धनेन प्रभूती-कृताः। 'धुक्ष सन्दीपने' इति धातुः। अजगरः सर्पः। गलः कण्ठः। वाहिनः गामिनः। स्वच्छन्दतृणचारिणः यथेष्टं तृणेषु गमनशीलाः। अन्यत्र स्वच्छन्दं तृणानां भक्षकाः। 'चर गतिभक्षणयोः' इति धातुः। हरिणाः पाण्डरवर्णाः। 'हरिणः पाण्डरः पाण्डुः' इत्यमरः, मृगा इति च। तरुतलविवरवर्तिनः तरुमुखरन्ध्र-वर्तिनः। बभ्रवः पिङ्गलवर्णाः, नकुला इति च। 'विपुले नकुले विष्णौ बभ्रुः स्यात् पिङ्गलेऽपि च' इत्यमरः। जटावल्कलावलम्बिनः वृक्षाणां शिफात्वगवलम्बिनः। अन्यत्र बद्धकेशवस्त्रभूतत्वग्ग्राहिणः। कपिलाः कपिलवर्णाः। कपिलमुनिसन्न्यासिन[2] इति च। शकुनिकुलकुलायपातिनः पक्षिकुलनीडसंसक्ताः। अन्यत्र पक्षिकुलनीडेषु पतनशीलाः। श्येनाः श्वेताः, गृध्रा इति च। 'श्येनो विहङ्गमः श्वेतः' इत्यजयः। लाक्षारसलोहितच्छवयः लाक्षारसदाहेन लोहितवर्णाः, अन्यत्र लाक्षारसेन लोहित-कान्तयः। अधराः अनूर्ध्वाः, हीना इति च। 'अधरोऽनूर्ध्वहीनोष्ठेषु' इति वैजयन्ती। आसादितशकुनिपक्षकृतपटुगतयः; आसादितः स्वयं विशीर्णः; आसादितशकुनिपक्षतया कृतचण्डगमनाः। अन्यत्र आसमन्तात् सादितैः विनि-वेशितैः शकुनीनां पक्षैः शीघ्रगमनार्थं पक्षत्वेन कृतैः पतत्रैः कृतद्रुतगमनाः, विशिखाः विगतज्वालाः, शरा इति च। दग्धनिश्शेषजन्महेतवः दग्धाशेषतृण-काष्ठगुल्मादुद्भवस्थानाः। अन्यत्र दग्धनिश्शेषपुण्यपापादिजननकारणाः। निर्वाणाः शान्ताः, मोक्षप्राप्ता इति च। निरित्युपसर्गपूर्वात् 'वा गतिगन्धनयोः' इति धातोः

---

१. भस्त्रा=துருத்தி, २. मुनिसिद्धान्तिनः-क.

कुसुमवासिताम्बररुचयो रागिणः, क्वचित् सधूमोद्गारा मन्दरुचयः, क्वचित् सकलजगद्ग्रासघस्मराः सभस्मकाः, क्वचिद् वेणुशिखरलग्नमूर्तयोऽत्यन्तवृद्धाः, क्वचिद् अचलोपयुक्तशिलाजतवः क्षयिणः, क्वचित् सर्वरसभुजः पीवानः,

---

निष्ठायां 'निर्वाणोऽवाते' (पा०सू० ८.२.५०.) इति निपातनात् णत्वे निर्वाण इति रूपम्। 'निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले' इत्यमरसिंहः। कुसुमवासिताम्बररुचयः दहनसमयोद्भूतवायुवेगाच्चलितैः कुसुमैर्वासितस्याम्बरस्य गन्धयुक्तीकृतस्य आकाशस्य रुचिर्येषाम्। अन्यत्र गन्धयुक्तीकृतवस्त्रकृतस्पृहाः। रागिणः रक्तवर्णाः, महाभोगिन इति च। सधूमोद्गाराः धूमोद्गतिसहिताः। अन्यत्र धूमशब्देन उदरगताजीर्णद्रव्यस्यौष्ण्यं लक्ष्यते। उद्गारः वमथुः। 'उद्गालो वमथूद्गारौ' इति वैजयन्ती अजीर्णगन्धिवमथुसहिता इत्यर्थः। मन्दरुचयः अल्पतेजसः; सर्ववस्तुषु अरुचियुक्ता इति च। सकलजगद्ग्रासघस्मराः सर्वजगदाख्यकबलभक्षकाः। अन्यत्र सकलजगत्सु विद्यमानानां ग्रासानाम् अन्नपिण्डानां भक्षकाः। घस्मर इति। 'घस्लृ अदने' इति धातोः 'सृघस्यदः क्मरच्'(पा०सू०३.२.१६०.)इति क्मरच्[3]। 'भक्षको घस्मरोऽद्मरः' इत्यमरः। सभस्मकाः भस्मसहिताः, भस्माख्यव्याधियुक्ताः[4]। 'येन भस्मीभवन्त्याशु भक्षितान्यखिलानि च। स वस्तूनि क्षुधारूपो व्याधिर्भस्मक उच्यते ॥' वेणुशिखरलग्नमूर्तयः[5] वेणुवृक्षाणामग्रभागसक्तरूपाः, अन्यत्र वेणुमयदण्डावष्टब्धशरीराः। अत्यन्तवृद्धाः अत्यन्तप्रवृद्धाः, अतिस्थविरा इति च। अचलोपयुक्तशिलाजतवः अचलेषु उपयुक्तानि कृतकार्याणि दग्धानि शिलाजतूनि यैः। अन्यत्र अचलेषु उपयुक्तानि औषधत्वेन कृतकार्याणि भक्षितानि शिलाजतूनि यैः। एतदुक्तं भवति—शिलाजतुनामकमौषधं सर्वेषामपि शरीरसिद्धिकरम्; अत एव क्षयरोगिभिरपि क्षयरोगपरिहारत्वेन सेव्यते। क्षयिणः क्षयशीलाः, क्षयरोगिण इति च। सर्वरसभुजः सर्वरसशोषकाः[6] इत्यर्थः। अन्यत्र मधुरादिरसषट्कोपेतं भोक्तारः। पीवानः स्थूलाः। यदा प्रभूतदाहलाभात् पीवानो भवन्ति तदा जलानामपि शोषका भवन्तीत्यर्थः; पीवरशरीरा इत्यर्थः।

---

१. निष्ठाप्रत्यये क्ते कृते, २. उद्गारः=ஏக்காளம், ३. क्मरचि कृते रूपम्.
४. भस्मकव्याधिः=உண்டாக்கிறெண்பசி, யானைத்தீ நோய், ५. सक्तमूर्तयः,
६. सर्वजलशोषकाः-क.

**क्वचिद् दग्धगुग्गुलवो रौद्राः, क्वचित् ज्वलितनेत्रदहनदग्धसकुसुमशरमदनाः कृतस्थाणुस्थितयः, चटुलशिखानर्तनारम्भारभटीनटाः, शुष्ककासारप्रसृतिभिः स्फुटन्नीरसनीवारबीजलाजवर्षिभिः ज्वालाञ्जलिभिः अर्चयन्त इव घर्मघृणिम्, अघृणा इव हठह्रियमाणकठोरस्थलकमठवसाविस्रगन्धगृध्नवः, स्वमपि धूमम् अम्भोदविभूतिभियेव भक्षयन्तः, सातिलाहुतय इव**

---

दग्धगुग्गुलवः दग्धगुग्गुलुवृक्षाः ; अन्यत्र गुग्गुलुशब्देन तस्य निर्यासो लक्ष्यते । धूपार्थं दग्धगुग्गुलुनिर्यासा इत्यर्थः । रौद्राः क्रूराः, महेश्वरा इति च । महेश्वराणां देवार्चनसमयेषु धूपार्थं गुग्गुलुदहनम् आगमविहितम्, ईश्वरार्चनाङ्गत्वादेव संज्ञा । अत्र वैजयन्ती च—'गुग्गुलौ कौलनिर्यासो देवधूपो महेश्वरः' इति । ज्वलितेत्यादि । ज्वलितनेत्रदहनेन तरुमूलगतेनाग्निना दग्धाः सकुसुमाः सपुष्पाः शराः क्षुद्रवेणवः मदनाः मातुलवृक्षाश्च यैः । अन्यत्र ज्वलितनेत्रदहनेन नयनाग्निना दग्धः सकुसुमशरः कुसुममयबाणसहितो मदनः कामो येन । नेत्रशब्दः तरुमूले नयने च वर्तते । 'नेत्रं नाड्यां तरोर्मूले वस्त्रे दृशि मथो गुणे' इति वैजयन्ती । कृतस्थाणुस्थितयः कृतदारुवर्तनाः, कृतेश्वरस्वभावा इति च । ईश्वरस्वभावश्च ज्वलितदहनदग्धसकुसुमशरमदनत्वम् । चटुलेत्यादि । आरभटी नृत्यादिषु भीषणा वृत्तिः । तथा वैजयन्ती—'भारती सात्त्वती चैव कैशिक्यारभटी तथा । चतस्रो वृत्तयः' इति । अत्र भीषणनृत्तं सूच्यते । चटुलानां शिखानां ज्वालानां नर्तनारम्भेण आरभटीनटाः भीषणनृत्तप्रयोक्तारो नटाः । शुष्ककासारप्रसृतिभिः शुष्केषु कासारेषु सरस्सु प्रसृतिः व्याप्तिः येषाम् । नीरसः शुष्कः । अञ्जलिः पाणिद्वयसङ्गतकरम् । घर्मघृणिः सूर्यः । घर्मा उष्णाः *[घृणयः किरणा अस्य सन्तीति । अघृणा जुगुप्सारहिताः । 'जुगुप्साकरुणे घृणे' इत्यमरः । स्थलकमठः स्थलगतकच्छपः । वसा मांसविशेषः । विस्रगन्धः आमगन्धः । गृध्नवः अभिलाषुकाः । स्वमपीत्यादि । अम्भोदविभूतिभिया] वर्षजलमोक्षणेनात्मनः

---

१. मदनाः=மருக்காரை, * कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति. २. स्थलकमठः=வறட்டாமை, ३. वसा=நிணம், ४. विस्रगन्धः=புலநாற்றம்—क.

स्फुरद्बहलबालकीटपटलाः कक्षेषु, श्वित्रिण इव प्लोषचटचटद्वल्कलशबल-शम्बूकशुक्तयः शुष्केषु सरस्सु, स्वेदिन इव विलीयमानमधुगोळगळित-मधूच्छिष्टवृष्टयः काननेषु, खलतय इव पर्यन्तशीर्यमाणशिखासंहतयः महोषरेषु, गृहीतशिखाकवला इव ज्वलितसूर्यकान्तमणिशिलाशकलेषु शिलोच्चयेषु प्रत्यदृश्यन्त दारुणा दावाग्नयः ।

तथाभूते च तस्मिन्नत्युग्रे ग्रीष्मसमये कदाचिद् अस्य स्वगृहावस्थितस्य भुक्तवतः अपराह्णसमये सभ्राता पारशवः चन्द्रसेननामा प्रविश्य अकथयत्—'एष खलु देवदेवस्य चतुस्समुद्राधिपतेः सकल-राजकचूडामणिश्रेणिशाणकोणकषणनिर्मलीकृतचरणनखमणेः सर्वचक्र-वर्तिनां धौरेयकस्य महाराजाधिराजपरमेश्वरस्य श्रीहर्षदेवस्य भ्रात्रा कृष्णनाम्ना भवतामन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारमध्यास्ते' इति । सोऽब्रवीत्—'आयुष्मन्! अविलम्बितमेनं प्रवेशय' इति ।

---

शमकानामम्भोदानां विभूतिसम्भवमियेत्यर्थः । धूमोऽम्भोदस्य प्रकृतिरिति भावः । 'धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः' इति मेघसन्देशे च । कक्षेषु वीरुत्सु । श्वित्रिणः श्वेतकुष्ठवन्तः । प्लोषः दाहः । वल्कलं शम्बूकशुक्तीनां त्वक् (?)। शम्बूकशुक्तयः[1] शम्बूकाश्च शुक्तयश्च । शम्बूकाः क्षुद्र-शङ्खाः । शुक्तयः[2] दीर्घकौशिकाः । मधुगोळं मधुपटलम् । मधूच्छिष्टः सिक्थम्[3] । खलतयः[4] दाह्यभूतानां तृणानामप्यभावादित्यर्थः । शिखा ज्वाला, केशाश्च । सूर्यमणिः सूर्यकान्तः । शिलोच्चयेषु पर्वतेषु ।

अस्य भट्टबाणस्य । सभ्राता भ्रातृसहितः । शाणम्[5] उल्लेखनसाधनम् । धौरेयकस्य धुरन्धरस्य । भ्रात्रा कृष्णनाम्नेति । कृष्णस्य इति हर्षस्य भ्रातृस्थानीयः कश्चिद् बन्धुरुच्यते । न तु मुख्यभ्राता । कृष्णनाम्नो मुख्यभ्रातुरुत्तरत्र क्वचि-दप्यदृष्टत्वात् । अविलम्बितं शीघ्रम् ।

---

१. शम्बूकः=நத்தை, २. शुक्तिः=கிளிஞ்சல், ३. मधूच्छिष्टः=सिक्थकं மெழுகு, ४. खलतिः=தவண்டி, ५. शाणं=சாணை—क.

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात् समाक्षिपति जीवितमप्यकाण्डे
कष्टो मनोभव इवेश्वरदुर्विदग्धः ॥

तथाप्यन्ये ते नरपतयः, अन्य एवायं व्यकृतनृगनलनहुषययातिधुन्धुमारा-म्बरीषदशरथदिलीपनाभागभरतभगीरथोऽमृतमयः स्वामी । नास्याहङ्कार-कालकूटविषदष्टा दृष्टयः, न गर्वगलग्रहगद्गदा गिरः, नातिस्मयोष्मापस्मार-

---

स्वेच्छ इति । कष्टो दुराराधः । ईश्वरदुर्विदग्धः राजदुर्ललितः । स्वेच्छोपजातविषयोऽपि स्वकानुगुणमुपजातजनपदोऽपि । केनचिदपि यत्किञ्चिद् देहि प्रयच्छेति वक्तुं न याति वचनस्य विषयो न भवति । वक्तुमशक्य इत्यर्थः । किञ्च मार्गणशतैः अत्यभिनिविष्टतया अर्थान्वेषणशतैः सर्वेषां जनानां दुःखं च ददाति । मोहात् अबोधात् । *[अकाण्डे अकाले जीवितमनुजीविनां वृत्तिमपि । समाक्षिपति अपहरति । मनोभव इव । सोऽपि विषयिणां स्वेच्छोपजातशब्दादि-विषयः । देही शरीरवानिति वक्तुं न याति । मार्गणशतैः अनेकशरैः प्राणिनां दुःखं च ददाति । मोहात् प्राणिनां विषयलाभसञ्जाताद् उच्छ्रायात् । अथवा मोहादिति ल्यब्लोपे पञ्चमी । मोहमुद्भाव्य] अकाण्डे जीवितमपि प्राणानपि अपहरति, कष्टश्च व्यसनकरश्च भवति । असमानकर्तृकत्वेऽपि अभियुक्तप्रयोग-दर्शनात् तुमुन्प्रत्ययः । तथा किरातार्जुनीये— 'अस्मिन् रतिश्रमनुदश्च सरोजवाताः स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ।' इति । अमृतमयः प्रीतिमयः, प्रियतमः । अहङ्कारः मिथ्यासामर्थ्याभिमानः । अत्र दिवाकरः— 'अहं तु शक्तः कार्येऽस्मिन् नामी शक्ताश्च जन्तवः । इत्थमस्पृष्टकार्यार्थ-गुणदोषा त्वहङ्कृतिः ॥' इति । दृष्टयः दर्शनानि । गर्वः आत्मनि बहुमानः । गर्वः, 'प्रकृत्यैव स्वविषयाद् .... .... .... .... । श्लाघाभिमाननैर्लज्ज्यभाविनी गर्व उच्यते ॥' (इति ।) गलग्रहः कण्ठे रोगविशेषः ; हिक्केति केचित् । स्मयोष्मा ऊष्मशब्देनातिशयो लक्ष्यते । इतरानुद्दिश्य मानसोपहासः स्मयः । 'स्मितहेतावपि

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

विस्मृतस्थैर्याणि स्थानकानि, नोद्दामदर्पश्वाहुजन्मनोऽमाविक्रया विकाराः, नाभिमानमहासन्निपातनिर्भराङ्गभङ्गानि गतानि, न मदार्दितवक्रीकृतोष्ठपृष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि। तथा चास्य विमलेषु साधुषु रत्नबुद्धिः, न मणिशिलाशकलेषु। मुक्ताफलधवळेषु गुणेषु प्रसाधनधीः, नाभरणभारेषु। दानवत्सु करोषु साधनश्रद्धा, न करिकीटेषु। सर्वाशाग्रेसरे यशसि महाप्रीतिः, न जीवितजरत्तृणेषु। गृहीतकरासु दिक्षु प्रसाधनाभियोगः, न निजकलत्रचर्मपुत्रिकासु। गुणवति धनुषि सहायचिन्ता, न पिण्डोपजीविनि सेवकजने शुनि। अपि चास्य मित्रोपकरणमात्मा, भृत्योपकरणं प्रभुत्वं, पण्डितोपकरणं वैदग्ध्यं, बान्धवोपकरणं लक्ष्मीः, कृपाणोपकरणम् ऐश्वर्यं, द्विजोपकरणं सर्वस्वं, सुकृतस्मरणोपकरणं हृदयं, धर्मोपकरणम् आयुः, साहसोपकरणं शरीरम्,

---

प्राप्ते यो न हासयति स्फुटम्। कांश्चिदेव रसानन्यान् स भावः स्मयसंज्ञितः॥' इति। स्थानकानि स्थितयः। दर्पः प्रीत्यादिपरवशतया स्वैरकारिता। 'प्रीतिनिर्वृतिनिघ्नानाम् अरागविषयेऽपि यः। प्रवृत्तिं कुरुते भावः पुंसां दर्पः स उच्यते॥'(इति।) विकारा विकृतयः। विविधचेष्टा इत्यर्थः। अभिमानः स्वपौरुषजनितसुखप्रत्ययः। 'अभिमानमपि प्राहुः स्वपौरुषगुणाश्रयाम्। प्रीतिं तां सुखमात्राणां महतीनां समुद्भवाम्॥' इति। अङ्गभङ्गः अङ्गमोटनविशेषः। मदः सर्वेऽपि मदनुवर्तिनः, अहमेव स्वतन्त्र इति प्रवृत्तिः प्रकृत्या। 'स एव स्वानुकूल्येन दर्शयन्नखिलं जगत्। यत्किञ्चित्कारितां चास्य कुर्वन् मद उदाहृतः॥' अर्दितम् आस्यकृता वक्रता, वातविशेष इति वैद्याः। विमलेषु विगतदोषेषु, त्रासादिरत्नदोषहीनेषु च। मुक्ताफलधवळेषु मौक्तिकवच्छुद्धेषु, मौक्तिकैर्धवलेषु च। दानम् अर्थप्रदानं, मदश्च। साधनश्रद्धा उपकरणादरः। आशा दिक्, वाञ्छा च। करः बलिः, पाणिश्च। प्रसाधनं प्रकर्षेण साधनम्, अलङ्करणं च। चर्मपुत्रिका[1] चर्मकृता प्रतिमा। गुणः मौर्वी, पौरुषादिश्च। आत्मा शरीरम्। साहसं बलात्करणम्।

---

1. चर्मपुत्रिका—தோல்பாவை—क.

असिलतोपकरणं पृथिवी, विनोदोपकरणं राजकं प्रतापोपकरणं प्रतिपक्षः। नास्याल्पपुण्यैः अवाप्यते सर्वातिशायिनी सुखरसप्रसूतिः पादपल्लवच्छाया' इति। श्रुत्वा च तमेव चन्द्रसेनं समादिशत्—'कृतकशिपुं विश्रान्तमेनं सुखिनं कारय' इति।

अथ गते च तस्मिन्, पर्यस्ते वासरे सङ्घटमानरक्तपङ्कज-सम्पुटपीयमान इव क्षयिणि क्षामतां व्रजति बालवायसास्यारुणेऽपराह्णातपे, शिथिलितनिजवाजिजवे जपापीडपाटले अस्ताचलशिखरस्खलिते खञ्जतीव कमलिनीकण्टकक्षतपादपल्लवे पतङ्गे, पुरःपरापतितप्रेङ्खदन्धकारलेश-लम्बालके शशिविरहशोकश्याम इव श्यामायमाने श्यामामुखे कृतसन्ध्यो-पासनः शयनीयमगात्। अचिन्तयच्चैकाकी—'किं करोमि? अन्यथा सम्भावितोऽस्मि राज्ञा। निर्निमित्तबन्धुना च सन्दिष्टमेवं कृष्णेन। निकृष्टा च राजसेवा। विषमं भृत्यत्वम्। अतिगम्भीरं महद्राजकुलम्। न हि मे तत्र पूर्वजन्मप्रवर्तिता प्रीतिः, न कुलक्रमागता गतिः, नोपकार-स्मरणानुरोधः, न बालसेवास्नेहः, न तन्त्रगौरवं, न पूर्वदर्शनदाक्षिण्यं, न प्रज्ञासंविभागोपप्रलोभनं, न विद्यातिशयकुतूहलं, नाकारसौन्दर्यादरः, न सेवाकाकुकौशलं, न विद्वद्गोष्ठीबन्धनवैदग्ध्यं, न वित्तव्ययवशीकरणं,

---

राजकं रजसमूहः। कृतकशिपुं कृतभोजनाच्छादनम्। 'कशिपुर्भोजनाच्छादौ' इति हलायुधः।

पर्यस्ते परिवृत्ते। सङ्घटमानं मुकुलीभवत्। सम्पुटः उदरः। वायसः काकः। जपापीडा जपापुष्पबन्धः। खञ्जति 'खजि गतिवैकल्ये' इति धातुः। पादपल्लवः किरणविस्तारः, चरणकिसलय इति च। 'पल्लवस्त्वस्त्री प्रकोष्ठेऽप्यति-विस्तृतौ' इति वैजयन्ती। लम्बः लम्बमानः। श्यामामुखे रात्र्यारम्भे, श्यामायाः स्त्रिया मुखमिति च। पूर्वजः पूर्वः पुरुषः। तन्त्रं परिकरम्। दाक्षिण्यं पाटवम्, निश्शङ्कतेत्यर्थः। प्रज्ञासंविभागः अप्रतिभातेष्वर्थेषु बुद्धिसाचिव्यकरणम्।

न राजवल्लभपरिचयः। अवश्यं गन्तव्यं च। सर्वथा भगवान् भवानीपतिः त्रिभुवनगतिर्गतस्य मे शरणं सर्वं साम्प्रतम् आचरिष्यति' इत्यवधार्य गमनाय मतिमकरोत्।

अथान्यस्मिन्नहनि उत्थाय प्रातरेव स्नातः धृतधवलधौतदुकूलवासाः, गृहीताक्षमालः, प्रास्थानिकानि कानिचित् सूक्तानि मन्त्रपदानि बहुशः समावर्त्य, देवदेवस्य भगवतो भवानीपतेर्विरूपाक्षस्य क्षीरस्नपनपुरःसरां सुरभिकुसुमधूपगन्धध्वजबलिविलेपनेन प्रदीपबहुलां विधाय परमया भक्त्या पूजां, प्रथमहुततरलतरतिलत्वग्विचटनचटुलमुखरशिखाशेखरं प्राज्याज्याहुतिप्रवर्धितप्रदक्षिणार्चिषं भगवन्तमाशुशुक्षणिं हुत्वा, दत्वा द्युम्नं द्विजेभ्यो यथाविद्यमानं, प्रदक्षिणीकृत्य प्राङ्मुखीं नैचिकीं गां, शुक्लाङ्गरागः, शुक्लमाल्यः, शुक्लवासाः, गोरोचनालिखितचित्रदूर्वाग्राम्रपल्लवग्रथितगिरिकर्णिकाकुसुमकर्णपूरः, शिखासक्तसिद्धार्थकः, पितुः कनीयस्या स्वस्रा स्वमात्रेव स्नेहार्द्रहृदयया श्वेतवाससा साक्षादिव भगवत्या महाश्वेतया मालावत्याख्यया कृतसकलगमनमङ्गलः, दत्ताशीः, बान्धववृद्धाभिरानन्दितः, परिजनजरतीभिर्वन्दितचरणैरनुज्ञातः, गुरुभिः अभिवादितैराघ्रातः शिरसि, कुलवृद्धैः वर्धितगमनोत्साहः, शकुनैः

---

काकुः चाटूक्तिः। वित्तव्ययः अर्थदानम्। शरणं रक्षकः। साम्प्रतं युक्तम्।

प्रास्थानिकानि प्रस्थानयोग्यानि। मन्त्रपदानि मन्त्रवाक्यानि। समावर्त्य पुनःपुनरुच्चार्य। धूपः गन्धवासितधूमः। 'धूमस्तरिर्मेघवाही धूपोऽसौ गन्धवासितः' इति वैजयन्ती। गन्धः कस्तूरिकाकुङ्कुमादिः। बलिः तूर्यम्। 'देवतार्चनतूर्ये तु धूमलोऽस्त्री बलिर्न षण्' इति वैजयन्ती। विलेपनं चन्दनादि। विचटनं स्फुटनं। प्राज्यं प्रभूतम्। आशुशुक्षणिः अग्निः। द्युम्नं धनम्। नैचिकीं गामुत्तमाम्। 'उत्तमा गोषु नैचिकी' इत्यमरसिंहः। माल्यं पुष्पम्। गिरिकर्णिका अपराजिता। सिद्धार्थः श्वेतसर्षपः। महाश्वेतया सरस्वत्या। शकुनैः

मौहूर्तिकेन कृतनक्षत्रदोहळः, शोभने मुहूर्ते हरितगोमयोपलिप्ताजि स्थण्डिलस्थापितम् असितेतरकुसुममालापरिष्वक्तकण्ठं पिष्टपञ्चाङ्गुल पाण्डुरम् मुखनिहितनवचूतपल्लवं पूर्णकलशमीक्षमाणः, प्रणम्य कुल देवताभ्यः, कुसुमफलपाणिभिरप्रतिरथं जपद्भिर्द्विजजनैः अनुगम्यमान प्रथमचलितदक्षिणचरणः प्रीतिकूटान्निरगात् ।

प्रथमेऽहनि घर्मकालकष्टं निरुदकं निष्पन्नपादपविषमं पथिकजनशत नमस्क्रियमाणप्रवेशपादपोत्कीर्णकात्यायनीप्रतियातनं, शुष्कमपि पल्लवित मिव तृषितश्वापदकुललपनलम्बितलोलजिह्वालतासहस्रैः, पुळकितमिः शुष्कगळगोलाङ्गूलकुललिह्यमानमधुगोळचलितसरघसङ्घातैः, रोमाञ्चमिः दग्धस्थलीरूढस्थूलाभीरुकन्दलशतैः, शनैःशनैः चण्डिकाकाननमतिक्रम्य मल्लकूटनामानं ग्राममगात् ।

---

शुभसूचकैर्निमित्तैः । मौहूर्तिकः मुहूर्तवेदी । तद्वेदेत्यर्थे 'क्रतूक्थादिसूत्रान्ताट्ठक्' (पा० सू० ४. २. ६०.) इति ठक् । नक्षत्रदोहळं नक्षत्रेषु कर्तव्यं बलिभक्ष्यादि स्थण्डिलं संस्कृतभूमिः । पिष्टं पञ्चाङ्गुलम् । 'मङ्गलार्थे तु पिष्टेन सहस्तेनार्पणं कृतम् । सपञ्चाङ्गुलिमुद्रं यत् तत् पञ्चाङ्गुलमुच्यते ॥' इति । कुसुमफलपाणिभि कुसुमानि फलानि च पाणौ येषाम् । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ (वा० २. २. ३६) इति पाणिशब्दस्य परनिपातः । कुसुमफलयोररिष्टनाशत्वात प्रहरण(र्थत्व)म् । अप्रतिरथम् ऋक्संहितायाम् 'आशुः शिशान' (१०. म० १०३. सू०) इति सूक्तम् ।

कष्टं कृच्छ्रम् , क्लेशकरमित्यर्थः । प्रवेशपादपः वनमुखप्रदेशवृक्षः । उत्कीर्णम उल्लिखितम् । (कात्यायनीप्रतियातना) कात्यायनीप्रतिमा, वनदुर्गाप्रतिकृतिः तृषितः पिपासितः । श्वापदाः — 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः' इति हलायुधः । लपनम् आस्यम् । गोलाङ्गूलः कृष्णमुखमर्कटः । मधुगोळं मधु पटलम् । सरघा मधुमक्षिका । अभीरुः शतावरी । 'शतमूलिका त्वभीरुः' इति हलायुधः । कन्दलः वल्ली । चण्डिकाकाननं दुर्गावनमिति प्रसिद्धं वनम्

---

१. 'मङ्गलार्थं तु हस्तेन सपिष्टेनार्पणं कृतम् । सपञ्चाङ्गुलिमन्त्रं यत्' २. निष्ठासप्तम्यौ भवत इति वक्तव्यम्, ३. रनिष्टनाशकत्वं ४. उल्लिखितं=வருக்கப்பட்டது.—क

तत्र च हृदयनिर्विशेषेण भ्रात्रा सुहृदा च जगत्पतिनाम्ना सम्पादितसपर्यः सुखमतिष्ठत् । अपरेद्युरुत्तीर्य भगवतीं भागीरथीं यष्टिकाग्रनाम्नि ग्रामके निशामनैषीत् । अन्यस्मिन्नपि दिवसे स्कन्धावारम् उपमणितटम् अन्वजिरवति कृतसन्निवेशम् आससाद । अतिष्ठच्च नातिदूरे राजभवनस्य । निर्वर्तितस्नानाशनव्यतिकरो विश्रान्तश्च मेखलकेन सह याममात्रावशेषे दिवसे भुक्तवति भूभुजि प्रख्यातानां क्षितिभुजां बहून् शिबिरसन्निवेशान् वीक्षमाणः, शनैःशनैः पट्टबन्धनार्थमुपस्थितैश्च डिण्डिमारोहणार्थमाहूतैश्च अभिनवबद्धैश्च विक्षेपोपार्जितैश्च कौशलिकागतैश्च प्रथमदर्शनकुतूहलोपनीतैश्च नागवीथीपालप्रेषितैश्च दूतसम्प्रेषणप्रवेशितैश्च पल्लीपरिवृढढौकितैश्च स्वेच्छायुद्धक्रीडाकौतुकाकारितैश्च दीयमानैश्च आच्छिद्यमानैश्च यामध्वजावस्थितैश्च सप्तद्वीपविजिगीषया गिरिभिरिव सागरसेतुबन्धनार्थमेकीकृतैः,

---

स्कन्धावारम् — अत्र स्कन्धावारशब्देन सेनासन्निवेशो विवक्षितः । न तु मुख्यनगरम् । मुख्यनगरस्य स्थाण्वीश्वराख्यस्य सरस्वतीतीरे सन्निवेश इति वक्ष्यते यतः । किञ्च, 'अन्वजिरवति कृतसन्निवेशः', 'बहून् शिबिरसन्निवेशान् वीक्षमाणः' इत्येतदुभयं सेनासन्निवेशस्य विवक्षितत्वे लिङ्गम् । एतेन भट्टबाणो दिग्विजयसमये सेनासन्निवेशे हर्षं दृष्टवानित्युक्तमित्यनुसन्धेयम् । उपमणितटं मणितटनाम्नः पर्वतस्य समीपे । अन्वजिरवति अजिरवतीनामधेयाया नद्या आसन्नम् । 'अनुर्यत्समया' (पा० सू० २. १. १५.) इत्यव्ययीभावः । सन्निवेशः स्थितिः । व्यतिकरः वृत्तान्तः । शिबिरसन्निवेशान् सेनासन्निवेशान् । [2]डिण्डिमारोहणं वाद्यविशेषप्रदानम् । बद्धैः गृहीतैः । विक्षेपः [3]सेनाविक्षेपः । कौशलिकागतैः उपहारद्वारागतैः । 'कौशलिकं प्राभृतम्' *इत्यमरः । नागवीथीपालः गजाकराधिपः । पल्ली क्षुद्रग्रामः । 'क्षुद्रग्रामोऽपि पल्ली स्यात्' इति वैजयन्ती । परिवृढः प्रभुः । ढौकितैः प्रापितैः । आकारितैः आहूतैः । आच्छिद्यमानैः आदीयमानैः । [4]याम[1]ध्वजेत्यादि उभयत्र समानम् ।

---

१. त्युक्तमनु–ख.ग. २. डिण्डिमारोहणं=பறை ஏற்றம். ३. सेनाविक्षेपः=தெண்டெலீடு, ४. यामः=ஜாமம்–क. *मुद्रितामरकोशे नायं भागो दृश्यते .

ध्वजपट्टपटहशङ्खचामराङ्गरागरमणीयैः भृत्याभिषेकदिवसैरिव कल्पितैः वारणेन्द्रैः श्यामायमानपुरोभागम्, अविरतचलितखुरपुटप्रहतमृदङ्गैश्च नर्तयद्भिरिव राजलक्ष्मीम्, उपहसद्भिरिव सृक्पुटप्रकटफेनाट्टहासेन जडजवजङ्घा हरिणजातिम् आकारयद्भिरिव सङ्घट्टहेतोः हर्षहेषितेनोच्चैरुच्चैःश्रवसम्, उत्पतद्भिरिव दिवसकररथतुरगरुषा पक्षायमानमण्डनचामरकलापैः गगनतलं तुरङ्गैः तरङ्गायमाणम्, अन्यत्र प्रेषितैश्च प्रेष्यमाणैश्च प्रेषितप्रतिनिवृत्तैश्च बहुयोजनगमनागमनगणनसङ्ख्याक्षरावलिभिरिव वराटकमालावलिभिः घटितमुखमण्डनकैः, तारकितैरिव सन्ध्यातपच्छेदैः अरुणचामरिकारचितकर्णपूरैः, सरक्तोत्पलैरिव रक्तशालिशालेयैः, अनवरतझणझणायमानचारुचामीकरघुरुघुरुमालिकैः, जरत्करञ्जवनैरिव रणितशुष्कबीजकोशीशतैः, श्रवणोपान्तप्रेङ्खत्पञ्चरागवर्णोर्णाचित्रसूत्रचूडाजटालैः, कपिकपोलकपिलैः क्रमेलककुलैः कपिलायमानम्, अन्यत्र शरज्जलधरैरिव सद्यःस्नुतपयःपटलधवलतनुभिः, कल्पपादपैरिव मुक्ताफलजालजायमानालोक-

---

भृत्याभिषेकः — भृत्यानां पट्टबन्धो विवक्षितः। कल्पितैः सज्जितैः। प्रहतमृदङ्गैः प्रहतभूमिकैः। मृत् मृत्तिका अङ्गम् अवयवोऽस्येति मृदङ्गः। प्रहतमृदङ्गैरित्युक्ते प्रहतमुरजैरिति[1] ध्वन्यते। सृक्कम् ओष्ठपर्यन्तम्[2]। 'सृक्कः स्यादोष्ठपर्यन्तम्[3]' इति हलायुधः। प्रकटः प्रकाशः। आकारयद्भिः आह्वयमानैः। सङ्घट्टः विवादः, द्रुतचलनं वा। वराटकावलिभिः कपर्दमालाभिः[4]। 'कपर्दस्तु वराटकः' इति वैजयन्ती। रक्तशालिशालेयैः रक्तशालीनामुद्भवक्षेत्रैः। 'व्रीहिशाल्योर्ढक्' (पा० सू० ५. १. २.) इति ढक्। घुरुघुरुमाला किङ्किणीमाला। बीजकोशी शिम्बा। 'बीजकोशी शमी शिम्बा' इति हलायुधः। पञ्चरागाः शुक्लकृष्णपीतहरितरक्ताः। ऊर्णासूत्रं पट्टसूत्रम्। चूडा शिखा। क्रमेलक उष्ट्रः। स्नुतपयःपटलधवलतनुभिः स्नुतक्षीरसमूहवद् धवलशरीरैः। अन्यत्र स्नुतजल-

---

१. मुरवैरिति, २. सृक्कम् आस्यपर्यन्तम्, ३. स्यादास्यपर्यन्तं,
४. कपर्दमाला - பல்காறை மாலை—क.

लसच्छायामण्डलैः, नारायणनाभिपुण्डरीकैरिव आश्लिष्टगारुडपक्षैः क्षीरोदोद्देशैरिव द्योतमानविकटविद्रुमदण्डैः, शेषफणाफलकैरिव उपरि फुरत्स्फीतमाणिक्यखण्डैः, श्वेतगङ्गापुलिनैरिव राजहंसोपसेवितैः, अभिभवद्भिरिव निदाघसमयं, परिभवद्भिरिव विवस्वतः प्रतापम्, आपिबद्भिरिव आतपं, चन्द्रमयमिव जीवलोकं जनयद्भिः, कुमुदमयमिवाकाशं कुर्वद्भिः, ज्योत्स्नामयमिव वासरं रचयद्भिः, फेनमयमिव दिवं दर्शयद्भिः, अकालकौमुदीसहस्राणीव विसृजद्भिः, अपहसद्भिरिव शातक्रतवीं श्रियं, श्वेतायमानैरातपत्रमण्डलैः श्वेतद्वीपायमानं, क्षणदृष्टनष्टाष्टदिङ्मुखं च मुष्णद्भिरिव भुवनम् आक्षेपोत्क्षेपडोलायितं दिनं गतागतानीव कारयद्भिः, उत्सादयद्भिरिव कुनृपतिसम्पर्ककलङ्ककलिलां कालेयीं स्थितिं, विकचविशदकाशवनपाण्डरदशादिशं शरत्समयमिव उत्पादयद्भिः, बिसतन्तुमयमिवान्तरिक्षमाविर्भावयद्भिः शशिकरशुचीनां चामराणां चलतां सहस्रैर्डोलायमानम्, अपि च हंसयूथायमानं करिकर्णशङ्खैः, कल्पलतायमानं कदलिकाभिः, माणिक्यवृक्षवनायमानं

---

समूहबद्धबलतनुभिः। आलोकः प्रभा। छाया आतपविपर्ययः। आश्लिष्टगारुडपक्षैः आश्लिष्टगारुडाः सम्बद्धमरकताः पक्षाः पार्श्वा येषाम्। अन्यत्र आश्लिष्टः सम्बद्धो गारुडो गरुडसम्बन्धी पक्षः पतत्रं येषाम्। 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती। विकटविद्रुमदण्डैः विकटाः पृथवो विद्रुमदण्डा विशिष्टद्रुमकृताः छत्रदण्डा येषाम्। अथवा विद्रुमशब्द एव द्रुमवाचकः। 'विद्रुमः स्यात् किसलये प्रवालमणिभूरुहोः' इत्यजयः। अन्यत्र विकटाः सुन्दराः विद्रुमदण्डाः प्रवालदण्डा येषाम्। स्फीतं बृहत्। राजहंसाः राजश्रेष्ठाः; अधूसरपक्षा हंसविशेषाश्च। 'हंसो निर्लोभे भूपाले भास्करे विहगान्तरे। योगिभेदे विशुद्धे च श्रेष्ठे राजादिपूर्वके॥' इत्यजयः। प्रतापम् उष्णम्। जनयद्भिः कुर्वद्भिः। आक्षेपोत्क्षेप आकर्षणविकर्षणम्। कलिलां गहनां। कालेयीं कलियुगसम्बन्धिनीम्। स्थितिः मर्यादा। विशदं शुक्लम्। कदलिकाभिः करिकेतुभिः।

---

१. काण्डा-क. २. कालेयं कलिसम्बन्धि-ख. ग.

मायूरातपत्रैः, मन्दाकिनीप्रवाहायमानं तरलांशुकैः, क्षीरोदायमानं क्षौमैः, कदलीवनायमानं मरकतमयूखैः, जन्यमानान्यदिवसमिव पद्मरागबालातपैः, उत्पाद्यमानापराम्बरमिव इन्द्रनीलप्रभापटलैः, आरभ्यमाणापूर्वनिशमिव महानीलमयूखान्धकारैः, स्यन्दमानानेककालिन्दीस्रोतसमिव गारुडमणिप्रभाप्रतानैः, अङ्गारितमिव पुष्यरागरश्मिभिः, कैश्चिदधोमुखैः चरणनखमणिपतितवदनप्रतिबिम्बनिभेन प्रवेशमलभमानैः लज्जया स्वाङ्गानीव प्रविशद्भिः, कैश्चिदङ्गुलीविलिखितायाः क्षितेर्विकीर्यमाणकरनखकिरणकदम्बकव्याजेन सेवाचामराणीव अर्पयद्भिः, कैश्चिदुरःस्थलडोलायमानेन्द्रनीलतरलप्रभापटलैः स्वामिप्रकोपप्रशमनाय कण्ठबद्धकृपाणैरिव कैश्चिदुच्छ्वाससौरभभ्रान्तभ्रमरान्धकारितमुखैः अपहृतलक्ष्मीशोकधृतलम्बश्मश्रुभिरिव कैश्चिच्छेखरोड्डीयमानमधुपमण्डलैः प्रणामविडम्बनाभयपलायमानमौलिभिरिव निस्तर्जितैरपि सम्मानितैरिव अनन्यशरणैरन्तरान्तरा निष्पततां प्रविशतां चान्तरप्रतीहाराणाम् अनुमार्गप्रधावितानेकपार्थिवसहस्राणामनुयायिनः पुरुषान् अश्रान्तैः पुनःपुनः पृच्छद्भिः 'भद्र! अद्य भविष्यति भुक्तास्थानं, दास्यति वा

---

मायूरातपत्रैः मयूरसम्बन्धिपिञ्छादिकृतैरातपत्रैः। अंशुकैः सूक्ष्मवस्त्रैः। क्षौमैः क्षुमोद्भवैः। क्षुमेति क्षौमवस्त्राणामुत्पत्तिभूतः कश्चिदोषधिविशेषः। 'अतसी स्यादुमा क्षुमा' इत्यमरः। कदली रम्भा। बालातपैः बालातपसदृशैः किरणैः। महानीलम् इन्द्रनीलम्। गारुडं मरकतम्। अङ्गारितम् अङ्गारयुतम्। अङ्गारः प्रशान्तार्चिरग्निः। पुष्यरागः रत्नविशेषः। अर्पयद्भिः निदर्शयद्भिः। इन्द्रनीलतरलम् इन्द्रनीलमयं हारमध्यरत्नम्। 'हारमध्यस्थितं रत्नं तरलं नायकं विदुः' इति हलायुधः। अपहृतलक्ष्मीशोकधृतलम्बश्मश्रुभिः शोकेषु श्मश्रुधारणं तद्देशाचारसमयः। विडम्बना परिभवः। अन्तरान्तरा मध्ये मध्ये। अन्तरः अन्तरवर्ती। अनन्तरेति च पाठः। अनन्तर अभिन्नः, अत्यासन्न इत्यर्थः। अश्रान्तैः अविरतैः। भुक्तास्थानं भोजनानन्तरम् आस्थानबन्धः।

---

१. अङ्गारः=கனல்-क.

दर्शनं परमेश्वरः, निष्पतिष्यति वा बाह्याङ्कणकक्ष्याम्' इति दर्श- नाशया दिवसं नयद्भिः भुजनिर्जितैः शत्रुमहासामन्तैः समन्तादासेव्यमानम्, अन्यैश्च प्रतापानुरागप्रणतैः नानादेशागतैर्महामहीपालैः प्रतिपालयद्भिः नरपतिदर्शनकालमध्यास्यमानम्, एकान्तोपविष्टैश्च जिनैः आर्हतैः पाशुपतैः पाराशरिभिः वर्णिभिश्च सर्वदेशजन्मभिश्च सर्वजनपदादागतैश्च सर्वाम्भोधि- वेलावनवासिभिश्च म्लेच्छजातिभिश्च सर्वद्वीपान्तरागतैश्च दूतमण्डलैः उपास्यमानं, सर्वप्रजानिर्माणभूमिमिव सर्वप्रजापतीनां, लोकत्रयसारोच्चय- रचितमिव चतुर्थं लोकं, महाभारतकथाशतैरपि अकथनीयसमृद्धिसम्भारं कृतयुगसहस्रैरिव कल्पितसन्निवेशं, स्वर्गार्बुदैरिव विहितरामणीयकं, राजलक्ष्मीकोटिभिरिव कृतपरिग्रहं, राजद्वारमगात् ।

अभवच्चास्य जातविस्मयस्य मनसि — 'कथमिवेदमियत्प्रमाणं प्राणिजातं जनयतां प्रजासृजां नासीत् परिश्रमः, महाभूतानां वा परिक्षयः, परमाणूनां वा विच्छेदः, कालस्य वा अन्तः, आयुषो वाप्युपरमः, आकृतीनां वा परिसमाप्तिः' इति । मेखलकस्तु दूरादेव द्वारपाललोकेन प्रत्यभिज्ञायमानः 'तिष्ठतु तावत् क्षणमात्रम् अत्रैव पुण्यभाग्' इति तम- भिधायाप्रतिहतः प्राविशदभ्यन्तरम् ।

अथ मुहूर्तादिव प्रांशुना, कर्णिकारगौरेण, वीध्रचीनकञ्चुकच्छन्नवपुषा

---

कक्ष्या गृहकोष्ठः । एकान्तम् एकदेशः, निर्जनस्थानं वा । 'निर्जने स्थान एकान्तं विविक्तं विजनं तथा' इति वैजयन्ती । जिनैः बौद्धैः । आर्हतैः क्षपणकैः । पाशुपतैः पशुपतिसिद्धान्तिभिः । पाराशरिभिः बौद्धमुनिभिः । वर्णिभिः ब्रह्म- चारिभिः । म्लेच्छजातिभिः निहीनजातिविशेषैः । निर्माणं सृष्टिः । उच्चयः समूहः, उद्धारणं वा । अर्बुदैः कोटिभिः ।

प्रजासृजां प्रजापतीनाम् । अप्रतिहतः अनिवारितः ।

कर्णिकारगौरेण कर्णिकारपुष्पवत् पीतवर्णेन । कर्णिकारः द्रुमोत्पलः । वीध्रं विमलम् । 'वीध्रं तु विमलात्मकम्' इत्यमरः । चीनं पट्टविशेषः ।

---

१· कर्णिकारः=குக்குமப்பூ—क·

समुन्मिषन्माणिक्यपदकचस्तबन्धबन्धुरबन्धावलुप्तावलग्नेन, हिमशैलशिला-विशालवक्षसा, हरवृषककुदकूटविकटांसतटेन, चलचपलहृषीकहरिणकुल-संयमनपाशमिव हारमुरसि बिभ्रता 'कथयतं यदि सोमवंशसम्भवः सूर्यवंश-सम्भवो वा भूपतिरभूदेवंविधः' इति प्रष्टुमागताभ्यां सोमसूर्याभ्यामिव श्रवणगताभ्यां स्फटिकमाणिक्यकुण्डलाभ्यां भासमानेन, वहद्वदनलावण्य-विसरवेणिकाक्षिप्यमाणैः अधिकारगौरवाद् दीयमानमार्गेणेव दिनकृतः किरणैः प्रसादनलब्धया विकचपुण्डरीकमुण्डमालयेव दीर्घया दृष्ट्या दूरादेवानन्दयता, नैष्ठुर्याधिष्ठानेऽपि प्रतिष्ठितेन पदे प्रश्रयमिव नम्रेण मौलिना दर्शयता, पाण्डुरमुष्णीषमुद्वहता, वामेन स्थूलमुक्ताफलच्छुरण-दन्तुरत्सरुं करकिसलयेन कलयता कृपाणम्, इतरेणापनीततरलतां ताटितीमिव लतां शातकुम्भीं वेत्रयष्टिमुन्मृष्टां धारयता पुरुषेणानुगम्यमानो मेखलको निर्गत्यावोचत्— 'एष खलु महाप्रतीहाराणामनन्तरः चक्षुष्यो देवस्य पारियात्रनामा दौवारिकः। अनुगृह्णात्वेनम् अनुरूपया प्रतिपत्त्या कल्याणाभिनिवेशी'ति। दौवारिकस्तु तमुपसृत्य कृतप्रणामो मधुरया गिरा सविनयमभाषत—'आगच्छत, प्रविशत देवदर्शनाय। कृतप्रसादो वो देवः' इति। बाणस्तु 'धन्योऽस्मि, यदेवमनुग्राह्यं मां देवो मन्यते' इत्युक्त्वा तेनैवोपदिश्यमानमार्गः प्राविशदभ्यन्तरम्।

---

समुन्मिषत् स्फुरत्। पदकं[1] मुखबन्धनम्। चस्तबन्धः आभरणविशेषः। अवलुप्ता-वलग्नेन छादनेनाप्रकाशितमध्येनेत्यर्थः। 'अवलग्नं विलग्नम्' इति हलायुधः। ककुदं शिखरप्रदेशवदुन्नतम्। हृषीकम् इन्द्रियम्। संयमनपाशः बन्धनरज्जुः। कथयतं लोटि मध्यमपुरुषद्विवचनम्। एवंविधः हर्षसदृश इत्यर्थः। पदे अधिकारे। उष्णीषं शिरोवेष्टनम्। दन्तुरत्सरुः उन्नतमुष्टिप्रदेशः। कलयता धारयता। शातकुम्भीं सौवर्णीम्। उन्मृष्टां शोधिताम्। अनन्तरः अभिन्नः। चक्षुष्यः सुभगः, प्रसादपात्रम् इत्यर्थः। प्रतिपत्त्या सम्मानेन। दौवारिकः द्वारपालः।

---

१. पदकं—பதக்கம்-க.

अथ वनायुजैः काम्बोजैः आरट्टजैः सिन्धुदेशीयैः पारसीकैश्च श्यामैश्च तित्तिरिकल्माषैश्च श्वेतैश्च पिञ्जरैश्च हरिद्भिश्च पञ्चभद्रैश्च मल्लिकाक्षैश्च कृत्तिकापिञ्जरैश्च आयतनिर्मांसमुखैः अनुत्कटकर्णकोशैः सुवृत्तश्लक्ष्ण-सुघटितघण्टिकाबन्धैः व्यूहानुपूर्वीवक्रायतोदग्रग्रीवैः उपचितश्वयथुस्कन्ध-देशैः निर्भुग्नोरःस्थलैः अस्थूलप्रगुणप्रसृतैः लोहपीठकठिनखुरमण्डलैः अतिजवत्रुटनभयादनिर्मितान्त्राणीवोदराणि धारयद्भिः, उद्यद्रोहिणी-विभज्यमानपृथुजघनैः, जगतीडोलायमानवालपल्लवैः, कथमप्युभयतो निखातदृढभूमिपाशसंयमनानियन्त्रितैरायतैरपि पश्चात्पाशबन्धपरवश-

---

वनायुकाम्बोजारट्टसिन्धुपारसीकाः देशविशेषाः। काम्बोजैः काम्बोजजातैः। पारसीकैः पारसीकदेशजातैः। शोणैः कोकनदवर्णैः। अश्वप्रकरणे 'शोणः कोकनद-च्छायः' इति वैजयन्ती। तित्तिरिकल्माषैः [1]तित्तिरिपक्षवत् नानावर्णैः। पिञ्जरैः पीतरक्तवर्णैः। हरिद्भिः हरितवर्णैः। पञ्चभद्रैः हृदयपृष्ठमुखपार्श्वेषु श्वेतबिन्दुसहितैः। 'पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः' इति वैजयन्ती। मल्लिकाक्षैः सितलोचनैः। 'मल्लिकाक्षाः सितैर्नेत्रैः' इति हलायुधः। कृत्तिकापिञ्जरैः बिन्दुसमूहपिञ्जर-शरीरैः। 'कृत्तिकापिञ्जरः स स्याद्यः पृषत्पुञ्जपिञ्जरः' इति वैजयन्ती। अनुत्कटकर्णकोशैः अनुद्धतकर्णकुड्मलैः। सुवृत्तः निस्तलः। घण्टिकाबन्धः घण्टिका अस्मिन् बध्यते इति, कण्ठमूलप्रदेशः। व्यूहानुपूर्वीवक्रः व्यूहानुपूर्वीभ्या-मुपलक्षितो वक्रः। व्यूहः (வகுப்பு)। पूर्वानुरूपं, अनुपूर्वं तस्य भावः [2]आनुपूर्वी। श्वयथुः स्थूलता। निर्भुग्नम् अनुन्नतम्। प्रगुणप्रसृतैः ऋजुजङ्घैः। उभयत्रापि अमरसिंहः — 'ऋजावजिह्मप्रगुणौ' 'जङ्घाप्रसृतौ' इति च। त्रुटनं छेदनम्। आन्त्रं पुरीतत्। [3]रोहिणी रोमराजिविशेषः। अश्वानामवस्थाविशेष इति केचित्। वालपल्लवैः पुच्छस्तबकैः। 'वालौ पुच्छाश्वपुच्छौ च' इति वैजयन्ती। समासा-सामर्थ्येऽपि कथमपि नियन्त्रितैरित्येव सम्बन्धः। भूमिपाशः [4]भूमिनिपातरज्जुः।

---

१. तित्तिरि=கௌதாரி, २. आनुपूर्वी=ஒழுக்கம், ३. रोहिणी- त्रिकादनन्तरं चापि जघनादुपरि स्थितम्। तथैव रोहिणीसन्धित्रिकादुभयतो विदुः॥ इति शालिहोत्रः।, ४. भूमिनिखातरज्जुः-क.

प्रसारितैकाङ्घ्रिभिः आयततरैरिव उपलक्ष्यमाणैः, बहुगुणसूत्रग्रथित-ग्रीवागण्डकैः, आमीलितलोचनैः, दूर्वारसश्यामलफेनलवशबलान् दशन-गृहीतमुक्तान् फरफरितत्वचः कण्डूजुषः प्रदेशान् प्रचलयद्भिः, सालस-चलितवालधिभिः एकशफाविश्रान्तिस्रस्तशिथिलितजङ्घार्धैः, निद्रया प्रध्या-यद्भिरिव सयवसगळस्खलितहुङ्कारं मन्दं मन्दं शब्दायमानैश्च, ताडितखुर-धारिणीरणितमुखरखरखुरशिखरविलिखितक्ष्मातलैः घासमभिलषद्भिश्च, प्रकीर्यमाणविविधघासग्रासरसमत्सरसमुद्भूतक्षोभैश्च, कुपितचण्डचण्डाल-हुङ्कारकातरतरळतरतारकैश्च, कुङ्कुमप्रमार्ष्टिपिञ्जराङ्गतया सततसन्निहित-नीराजनानलैरिव उपलक्ष्यमाणैः उपरिविततवितानैः पुरःपूजिताभिमत-दैवतैः भूपालवल्लभैस्तुरङ्गमैराचितां मन्दुरां विलोकयन्, कुतूहलाक्षिप्तहृदयः किञ्चिदन्तरमतिक्रान्तः हस्तवामेनात्युच्चतया निरवकाशमिवाकाशं कुर्वाणं महता कदलीवनेन परिवृतपर्यन्तं, सर्वतो मधुकरमयीभिर्मदस्रुतिभिः नदीभि-रिवापतन्तीभिरापूर्यमाणम्, आमुखविसर्पिणा बकुळानामिव विकसता-मामोदेन लिम्पन्तमिव घ्राणेन्द्रियं दूराद्व्यक्तमिव धिष्ण्याकारमपश्यत् ।

---

नियन्त्रितैः बद्धैः । परवशः विधेयः । बहुगुणः बहुवेष्टनः । ग्रीवागण्डकैः ग्रीवाभरणैः । 'ग्रीवाभूष तु गण्डकः' इति वैजयन्ती । दशनगृहीतं दष्टम् । फरफरितं तरङ्गितम् । वालधिः पुच्छः । शफः खुरः । खुरधारिणी खुरधार-फलका । घासः यवसः । प्रकीर्यमाणं पुरतः क्षिप्यमाणम् । चण्डः कोपनः । प्रमार्ष्टिः हस्तेनार्पणम् । 'मार्ष्टिश्चर्चा च चार्चिक्यम्' इति वैजयन्ती । वितत-[1]वितानैः विस्तारितवस्त्रकृतप्रपाविशेषैः । मन्दुराम् अश्वशालाम् । हस्तवामेन वामपार्श्वप्रदेशेन । कदलीवनेन करिकेतुसमूहेन । नदीभिरापतन्तीभिरिति पाठः । बकुळानामामोदेन घ्राणेन्द्रियमित्यन्वयः । धिष्ण्याकारं गृहाकृतिम् । 'धिष्ण्यौ शुक्रानलौ धिष्ण्यमृक्षस्थाने गृहे बले' इति वैजयन्ती । केचिद् धिष्ण्यागारमिति पाठमादृत्य धिष्ण्यागारं गजगृहमिति व्याचक्षते; तदयुक्तम् । धिष्ण्यशब्दस्य

---

१. वितानं=மேல்கட்டி—க.

अपृच्छच्च 'अत्र देवः किं करोति' इति। असावकथयत्— 'एष खलु देवस्यौपवाह्यो बाह्यं हृदयं, जात्यन्तरित आत्मा, बहिश्चराः प्राणाः, विक्रमक्रीडासु सुहृद् दर्पशात इति यथार्थनामा वारणपतिः। तस्यावस्थानमण्डपो महान् दृश्यत' इति। स तमवादीत्— 'भद्र! श्रूयते दर्पशातः। यद्येवमदोषो वा तावत् पश्यामि वारणेन्द्रमेनम्। तदर्हसि मां प्रापयितुमत्र। अतिपरवानस्मि कुतूहलेन' इति। सोऽभ्यभाषत— 'भवत्वेवम्, आगच्छतु भवान्। को दोषः। पश्यतु वारणेन्द्र'मिति।

गत्वा च तं प्रदेशं दूरादेव गम्भीरकण्ठगर्जितावर्जितैः वियति चातककदम्बकैः भुवि च भवननीलकण्ठकुलैः कलकेकाकलमुखरमुखैः क्रियमाणाकालजलदकोलाहलं, विकचकदम्बगन्धसंवादिमदसुरासौरभभरितभुवनं कायवन्तमिव कालमेघकालं, अविरलमधुपिङ्गलपद्मबिन्दु-

सर्वेष्वपि निघण्टुषु गजवाचकत्वे प्रमाणानुपलब्धेः। *[किञ्च राज्ञोऽवस्थानमण्डपान्तरसम्भवनाजन्यः 'अत्र देवः किं करोति' इति करिष्यमाणः प्रश्नश्चायुक्तः। अस्य कदलीवनमदामोदादिलिङ्गैः दर्शनमात्र एव एष गजावस्थानमण्डप इत्यवश्यं निश्चयो जायते। यतः सन्देहे खलु एवंरूपः प्रश्नश्च सम्भवति।] एष इत्यादि। देवस्य दर्पशात इति वारणपतिरस्ति, एष तस्यावस्थानमण्डप इत्यन्वयः। औपवाह्यः राजवाहनयोग्यः। 'औपवाह्यो राजवाह्यः' इति वैजयन्ती। दर्पशात इति, दर्पं शातयति छिनत्ति 'शद्लृ शातने' इति धातोः कर्मण्यणि 'शदेरगतौ तः' (पा० सू० ७. ३. ४२.) इति तकारे च कृते रूपम्। अदोषः दोषाभावः। अत्र गजविषये।

गर्जितावर्जितैः बृंहितशब्दापकृष्टैः। गर्जितस्य मेघशब्दतुल्यत्वादिति भावः। 'गर्जितो मत्तमातङ्गे क्ली तु नागेऽम्बुदध्वनौ' इति वैजयन्ती। नीलकण्ठः मयूरः। केका मयूरशब्दः। कदम्बगन्धसंवादी कदम्बपुष्पतुल्यगन्धम्। 'सदृक्सदृशसंवादिसजातीयानुवादिनः' इति उपमानाधिकारे दण्डिनोक्तम्। अविरलेत्यादि। अविरलैः अनल्पैः। मधुपिङ्गलैः मधुवत् पिङ्गलैः। पद्मबिन्दुभिः मुखगतपद्माख्यबिन्दुभिः। 'पद्मोऽस्त्र्यब्जेऽष्टकायां क्ली सङ्ख्यायां गजबिन्दुषु'

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

जालाङ्कितां सरसीमिवाभ्यवगाढां दशां चतुर्थीमुत्सृजन्तम्, अनवरतं सशङ्खैः आमन्द्रकर्णतालदुन्दुभिध्वनिभिः पञ्चमीदशाप्रवेशमङ्गलारम्भमिव सूचयन्तम्, अविरतचलितचित्रत्रिपदीललितलास्यलयैः डोलायमानदीर्घदेहाभोगतया मेदिनीविदलनभयेन भारमिव लघयन्तं, दिग्भित्तितटेषु कायमिव कण्डूयमानम्, आहवाय दिग्वारणानिवाह्वयमानं, ब्रह्मस्तम्बमिव स्थूलेन निशितदन्तेन करपत्रेणेव पाटयन्तम्, अमान्तं भुवनाभ्यन्तरे बहिरिव निर्गन्तुमीहमानं, सर्वतः सरसकिसलयतालासिभिर्लेशिकैः चिरपरिचयोपागतैर्वनैरिव परिवृतम्, उपरि विक्षिप्तसशैवलबिसविसरशबलसलिलैः सरोभिरिवाधोरणैः आधीयमाननिदाघसमयसमुचितोपचारानन्दम्, अपि च प्रतिगजमदपवनादानदूरोत्क्षिप्तेन अनेकसमरविजय-

---

इति वैजयन्ती। अभ्यवगाढां परिणताम्, अवगाहिताम् च। चतुर्थीं दशां कलभावस्थाम्। गजानां बालत्वादयो नैकावस्थाः सन्ति। तासु च काश्चिद् गजानां तत्तदवस्थासु संज्ञाभेदं दर्शयता वैजयन्तीकारेणोक्ताः। तद्यथा—'पञ्चवर्षो गजो बालो दशाब्दः पोतकः स्मृतः।* त्रिंशद्वर्षस्तु कलभो विक्को विंशतिवर्षकः॥' इति। सशङ्खैः शङ्खाभरणध्वनिसहितैः। अन्यत्र शङ्खध्वनिसहितैः। कर्णतालः कर्णप्रहारः। 'तल प्रहारे' इति धातुः। त्रिपदी, 'त्रिपदी पादबन्धनम्' इति वैजयन्ती। लास्यलयैः शरीरचलनाख्यलयैः। डोलायमानदीर्घदेहाभोगतया इत्येतद् उत्तरत्र भारलघूकरणादिपञ्चस्वर्थेषु हेतुर्भवति। देहाभोगा देहपरिपूर्णता। विदलनं भेदः। आह्वयमानं स्पर्धया आह्वानं कुर्वन्तं; 'स्पर्धायामाङः' (पा०सू० १. ३. ३१.) इत्यात्मनेपदम्। ब्रह्मस्तम्बं त्रिभुवनम्। स्तम्बमित्युक्ते किमपि काष्ठकाण्डमिति च ध्वन्यते। करपत्रेण क्रकचेन। 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः। पाटयन्तं भेदयन्तम्। अमान्तम् अपर्याप्तावकाशीभवन्तम्। ईहमानं चेष्टमानम्, इच्छन्तमिति वा। लासिभिः चलनकारिभिः शोभिभिश्च। [1]लेशिकैः गजानां पुरोधावकैः। विक्षिप्तम् ऊर्ध्वविकीर्णम्; इतस्ततो विशीर्णं च। [2]शैवलः जलजीवी। उपचारः उष्णपरिहाररूपः। अपिचशब्दः

---

१. लेशिकः=பரிக்காரர், २. शैवल:=கொண்டைப்பாசி—क.

* पोतस्तु दशवर्षकः इतिमुद्रित पाठः

गणनालेखाभिरिव वलीवलयराजिभिः तनीयसीभिः तरङ्गितोदरेणातिस्थवीयसा हस्तार्गलादण्डेनार्गलयन्तमिव सकलसकुलशैलसमुद्रद्वीपकाननं ककुभां चक्रवालम्, एकं करान्तरार्पितेनोत्पलाशेन कदलीदण्डेन अन्तर्गतशीकरसिच्यमानमूलम् मुक्तपल्लवमिव, अपरं लीलावलम्बिना मृणालजालेन समररसोच्चरोमाञ्चकञ्चुकितमिव दन्तकाण्डं वहन्तं, विसर्पन्त्या च दन्तकाण्डयुगळकान्त्या सरःक्रीडास्वादितानि कुमुदवनानीव बहुधा वमन्तं, निजयशोराशिमिव दिङ्मुखेष्वर्पयन्तं, कुकरिकीटपाटनदुर्विदग्धान् सिंहानिवोपहसन्तं, कल्पद्रुमदुकूलमुखपटमिवात्मनः कल्पयन्तम्, अकाण्डकरदण्डोद्धरणलीलासु च लक्ष्यमाणेन रक्तांशुकसुकुमारेण तालुना कवळितानि रक्तोत्पलवनानीव वमन्तम्, अभिनवकिसलयराशीनिवोद्गिरन्तं, कमलकवळनपीतमधुरसमिव स्वभावपिङ्गलेन गळयन्तं चक्षुषा, चूतचम्पकलवलीलवङ्गवन्ति एलालतामिश्राणि ससहकाराणि कर्पूरपूरितानि पारिजातवनानीवोपभुक्तानि पुनःपुनः कटाभ्यां बहळमदामोदव्याजेन विसृजन्तम्, अहर्निशं विभ्रमकृतस्वहस्तस्थितिभिः अर्धखण्डितपुण्ड्रेक्षुकाण्डकण्डूयनलिखितैः अळिकुलवाचालितैर्दानपट्टराजिभिः विलभमानमिव सर्व-

---

ग्रन्थरीतिभेदद्योतनार्थः। वली रेखा। स्थवीयसा स्थूलतरेण। अर्गलयन्तं अर्गलयुक्तं कुर्वन्तम्। अर्गलशब्दात् 'प्रातिपदिकाद्धात्वर्थे णिजबहुलमिष्ठवच्च' (गणसूत्रम्) इति णिच्। ततो लडादिः। चक्रवालं मण्डलम्। करान्तरं करोदरम्। उत्पलाशेन उद्गतपत्रवता। मुक्तपल्लवम् उद्गतपल्लवम्। विसर्पन्त्या इत्येतदुत्तरत्र कुमुदवनवमनादिषु हेतुर्भवति। अकाण्डं कालनियमनहीनम्, सततमित्यर्थः। लीलासु क्रियासु। गलयन्तं स्रावयन्तम्। लवली लताभेदः। एला लताविशेषः। चूतसहकारयोर्भेदोऽस्ति। यदुक्तममरसिंहेन—'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इति। विभ्रमकृतहस्तस्थितिभिः लीलया कृतहस्तविन्यासैः। पुण्ड्रेक्षुः इक्षुभेदः। कण्डूयनलिखितैः कण्डूयनकरणघृष्टैः। वाचालितैः मुखरितैः। दानपट्टराजिभिः राजिशब्दस्यास्त्रीत्वे प्रमाणं मृग्यम्। विलभमानं दानं कुर्वाणम्। अत्र

---

१. लवली=குலவளி, २. एला=ஏலம், ३. पुण्ड्रेक्षु=கழிக்கரும்பு, कण्डूयनं=சொறிதல், ४. अन्यत्र-क.

काननानि, कपिपतीनाम् अविरलोदबिन्दुस्यन्दिना हिमशिलाशकलमयेन विभ्रमनक्षत्रमालागुणेन शिशिरीक्रियमाणं, सकलवारणेन्द्राधिपत्यपट्टबन्धबन्धुरमिवोच्चैस्तरं शिरो दधानं, मुहुर्मुहुः स्थगितापावृतदिङ्मुखाभ्यां कर्णतालतालवृन्ताभ्यां वीजयन्तमिव भर्तृभक्त्या दन्तपर्यङ्कस्थितां राजलक्ष्मीम्, आयतवंशक्रमसमागतेन गजाधिपत्यचिह्नेन चामरेणेव चलता वालधिना विराजमानं, स्वच्छशिशिरशीकरभरच्छलेन दिग्विजयपीताः सरित इव पुनर्विमुञ्चन्तं, क्षणमवधानदाननिष्पन्दीकृतसकलावयवानाम् अन्यद्विरदडिण्डिमाकर्णनाङ्गभङ्गवलनानामन्ते दीर्घशूत्कारैः परिभवदुःखमिवावेदयन्तम्, अलब्धयुद्धमिवात्मानमनुशोचन्तम्, आधोरणाधिरूढिपरिभवेन लज्जमानमिवाङ्गुलिलिखितमहीतलम्, मदं मुञ्चन्तम्, अवज्ञया गृहीतमुक्तकवलकुपितारोहारटनानुरोधेन मदतन्द्रीनिमीलितनेत्रत्रिभागं कथंकथमपि मन्दमन्दम् अनादरादाददानं कवलान्, अर्धजग्धतमालपल्लवस्रुतश्यामलरसेन प्रभूततया मदप्रवाहमिव मुखेनाप्युत्सृजन्तं, दलन्तमिव दर्पेण,

---

विभ्रमकृतस्वहस्तस्थितिभिः अनादरकृतस्वहस्तार्पणैः केनचिल्लेखनसाधनलिखितैः केनचिद्वाचिकैः दानपट्टराजिभिः दानप्रमाणभूताभिः वस्त्रपट्टराजिभिः किञ्चिद् वस्तु केषाञ्चिद् विलभमानमिति च गम्यते। [1]हिमशिला तुषारशिला। [2]नक्षत्रमाला गजाभरणविशेषः। 'स्थासको नक्षत्रमाला' इति वैजयन्ती। शिशिरीक्रियमाणं शिशिर इति सम्बन्धः। उच्चैस्तरं, शिरसो द्रव्यत्वात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (पा०सू० ६.४.११.) इत्यामुप्रत्ययो न कृतः। स्थगितं संवृतम्। कर्णताल-तालवृन्ताभ्यां कर्णतालाख्यतालवृन्ताभ्याम्। दन्तपर्यङ्कं दन्ताख्यासनम्। वंशः पृष्ठास्थि; अन्ववायश्च। 'वंशः पृष्ठास्थि गेहोर्ध्वकाण्डे वेणौ गुणे कुले' इति वैजयन्ती। गजेत्याद्युभयत्र समानम्। वालधिना पुच्छेन। अवधानदानं अवधानकरणम्। वलनं चलनम्। मदं मदजलं, गर्वं च। मुञ्चन्तं सृजन्तं, त्यजन्तं च। आरोहः आधोरणः। आरटनं शब्दः। मदतन्द्री मदालस्यम्। दलन्तं स्फुटन्तम्।

---

१. हिमशिला=பனிக்கல்லு, २. नक्षत्रमाला=இடைமாலை.

श्वसन्तमिव शौर्येण, मूर्च्छन्तमिव मदेन, मुह्यन्तमिव तारुण्येन, द्रवन्तमिव दानेन, वल्गन्तमिव बलेन, माद्यन्तमिव मानेन, उद्यन्तमिव उत्साहेन, ताम्यन्तमिव तेजसा, लिम्पन्तमिव लावण्येन, सिञ्चन्तमिव सौभाग्येन, स्निग्धं नखेषु, परुषं रोषविषयेषु, गुरुं मुखे, सच्छिष्यं विनये, मृदुं शिरसि, दृढं परिचये, ह्रस्वं स्कन्धे, दीर्घमायुषि, दरिद्रमुदरे, सततप्रवृत्तं *दानेषु, बलभद्रं मदलीलासु, कुलकलत्रमायत्ततासु, जिनं क्षमासु, वह्निवर्षं क्रोधमोक्षेषु, गरुडं नागोद्धृतिषु, नारदं कलहकुतूहलेषु, शुष्काशनिमवस्कन्देषु, मकरं वाहिनीक्षोभेषु, आशीविषं दशनकर्मसु, वरुणं हस्तपाशावकृष्टिषु, यमवागुरां पदातिसंवेष्टनेषु, कालं परिणतिषु, राहुं तीक्ष्णकरग्रहणेषु,

---

मूर्च्छन्तं मुह्यन्तम् । द्रवन्तं विलीयमानम् । वल्गन्तं नृत्यन्तम् । तेजसा बलेन, उष्णेन च । स्निग्धं मसृणम्, स्नेहयुक्तं च । परुषं क्रूरम्, अस्नेहं च । गुरुं गौरवयुक्तम्, उपाध्यायं च । विनये शिक्षणे, प्रश्रये च । मृदुं मार्दवयुक्तं, कोमलं च । दृढं दार्ढ्ययुक्तं, कठिनं च । ह्रस्वम् अल्पम्, एकमात्रं च । दीर्घं आयतं, द्विमात्रं च । प्रवृत्तम् उपक्रान्तम् । दानेन मदेन, अर्थत्यागेन च । मदलीलासु मदजलमोक्षणक्रियासु, मत्ततायां च । कुलकळत्रं सद्वंशजा भार्या । आयत्ततासु विधेयतासु । जिनं बुद्धमुनिम् । क्रोधमोक्षेषु क्रोधकरणेष्वित्यर्थः । नागोद्धृतिषु नागानां प्रतिगजानां दन्तेन भित्त्वोद्धरणेषु; अन्यत्र नागानां सर्पाणाम् उद्धृतिषु हरणेषु । कलहं युद्धं, विवादं च । 'नारदो नित्यं कुतूहली' इति प्रसिद्धिः । 'नारदः कलहप्रियः' इति वैजयन्ती । शुष्काशनिम् अभिरूपाशनिम् । अवस्कन्देषु गतिविशेषेषु, जलादीनां शोषणेषु च । 'स्कन्दिर्गतिशोषणयोः' इति धातुः । वाहिनी सेना, नदी च । क्षोभेषु सञ्चलनेषु । दशनकर्मसु दन्तेन घातादिशिक्षासु, दंष्ट्राव्यापारेषु च । हस्तपाशः हस्त एव पाशः, हस्तगतः पाशश्च । वागुरा मृगबन्धनोपकरणम् (ഒകൈവല) । संवेष्टनेषु ग्रहणेषु, परिक्षेपेषु च । परिणतिः वप्रादिषु दन्तेन प्रहारः । अन्यत्र अवस्थान्तरयोगेन वस्तुनोऽन्यथाभावः । तीक्ष्णकरग्रहणेषु तीक्ष्णेषु चण्डेषु हस्तेन ग्रहणेषु । अन्यत्र तीक्ष्णकरः सूर्यः । तस्य ग्रहणेषु

---

*दानेन इति व्याख्यानुसारी पाठः । १. वागुरा=കയ്‌ക്കൂടവല-क.

लोहिताङ्गं वक्रचारेषु, अलातचक्रम् मण्डलभ्रान्तिविज्ञानेषु, मनोरथसम्पादितं चिन्तामणिपर्वतं विक्रमस्य, दन्तमुक्ताशिलास्तम्भं निवासप्रासादम् अभिमानस्य, घण्टाचामरमण्डनमनोहरम् इच्छासञ्चरणविमानं मनस्वितायाः, मदधारादुर्दिनान्धकारं गन्धोदकधारागृहं क्रोधस्य, सकाञ्चनप्रतिमं महाकीर्तनमहङ्कारस्य, सगण्डशैलप्रस्रवणं क्रीडापर्वतकम् अवलेपस्य, सदन्ततोरणं वज्रमन्दिरं दर्पस्य, उच्चकुम्भकूटाट्टालविकटं सञ्चारि दुर्गं राज्यस्य, कृतानेकबाणविवरसहस्रं लोहप्राकारं पृथिव्याः, शिलीमुखशतझङ्कारितं पारिजातपादपं भूनन्दनस्य, तथा च सङ्गीतगृहं कर्णतालताण्डवानाम्, आपानमण्डपम् मधुपमण्डलानाम्, अन्तःपुरं शृङ्गाराभरणानाम्, मदनोत्सवम् मदलीलालास्यानाम्, अक्षुण्णप्रदोषं नक्षत्रमाला-

---

उपरागेषु। लोहिताङ्गं अङ्गारकग्रहम् (१०८/१०)। वक्रचारेषु कुटिलचारेषु[1]। अन्यत्र निवृत्तातीतराशिप्राप्तिषु। अलातचक्रम् उल्मुकमण्डलम्। मण्डलभ्रान्तिविज्ञानेषु परिमण्डलाकारेण भ्रमणाख्याशिल्पेषु; उभयत्र समानम्। चिन्तामणिः चिन्तामात्र एवाभीष्टफलप्रदं रत्नम्। दन्तमुक्ताशिलास्तम्भं दन्ताख्यमुक्ताशिलारचितस्तम्भयुक्तम्। घण्टेत्युभयत्र समानम्। इच्छासञ्चरणविमानं इच्छा(नु)रूपसञ्चारयोग्यं[2] विमानम्। मनस्वितायाः, 'क्लेशैरुपहतस्यापि मानसं सुखिनो यथा। स्वकार्येषु स्थिरं यस्य मनस्वी स पुमान् मतः॥' इति दिवाकरः। दुर्दिनान्धकारं मेघतिमिरान्धकारयुक्तम्। प्रतिमा सिंहमुखाकारो दन्तेषु बद्धः प्रतिकृतिविशेषः। 'किमपि विलग्नसिंहमुखप्रतिमे'ति कादम्बर्याम्। अन्यत्र देवतादिप्रतिकृतिः। महाकीर्तनं देवालयादिकं जयसूचकं वस्तु। सगण्डशैलप्रस्रवणं गण्डाख्यशैलप्रस्रवणसहितम्। अन्यत्र गण्डशैलेन स्थूलपाषाणेन प्रस्रवणेन निर्झरेण च सहितम्। 'गलिताः स्थूलपाषाणा गण्डशैला इति स्मृताः' इति हलायुधः। अट्टालविकटः अट्टालाख्येन दुर्गेणोन्नतः। अट्टालो दुर्गप्राकारादिः। बाणविवरं बाणैः कृतं व्रणरन्ध्रम्। अन्यत्र बाणक्षेपणार्थं कृतं रन्ध्रम्। शिलीमुखः भृङ्गः। भूनन्दनस्य भूम्याख्येन्द्रोद्यानस्य। सङ्गीतं प्रेक्षार्थं गीतवाद्यम्। आपानं पानगोष्ठी। शृङ्गारः गजमण्डनम्। अक्षुण्णम् अनुत्पन्नम्, अदृष्टपूर्वमित्यर्थः। नक्षत्रमाला

---

१. कुटिलगतिषु-क. २. सञ्चार-ख. ग.

मण्डनानाम्, अकाण्डप्रावृट्कालं मदमहानदीप्रवाहाणाम्, अलीकशरत्समयं सप्तच्छदवनपरिमळानाम्, अपूर्वहिमागमं शीकरनीहाराणां, मिथ्याजलधरसमयं गम्भीरगर्जिताडम्बराणां दर्पशातम् अपश्यत्। आसीच्चास्य चेतसि—'नूनमस्य निर्माणे गिरयो ग्राहिताः परमाणुताम्। कुतोऽन्यथा गौरवमिदम्। आश्चर्यमेतत्। विन्ध्यस्य दन्तावादिवराहस्य करः' इति विस्मयमानमेनं दौवारिकोऽब्रवीत्। 'पश्य—

मिथ्यैवालिखतां मनोरथशतैर्निश्शेषनष्टां श्रियं
चिन्तासाधनकल्पनाकुलधियां भूयो वने विद्विषाम्।
आयातः कथमप्ययं स्मृतिपथं शून्यीभवच्चेतसां
नागेन्द्रः सहते न मानसगतानाशागजेन्द्रानपि॥

तदेहि। पुनरप्येनं द्रक्ष्यसि। पश्य तावद्देवम्' इत्यभिधीयमानश्च तेन मदजलकज्जलकालकपोलपट्टपतितां मत्तामिव भ्रमरीं मदपरिमलमुकुलितां कथमपि तस्माद् दृष्टिमाक्षिप्य तेनैव दौवारिकेण उपदिश्यमानवर्त्मा समतिक्रम्य भूपालसहस्रसङ्कुलानि कक्ष्यान्तराणि त्रीणि चतुर्थे कक्ष्यान्तरे भुक्तास्थानमण्डपस्य पुरस्तादजिरे स्थितं, दूरादूर्ध्वस्थितेन प्रांशुना कर्णिकारगौरेण व्यायामव्यायतवपुषा शस्त्रिणा मौलेन शरीरपालकलोकेन

---

गजाभरणविशेषः, नक्षत्रराजिश्च। हिमागमं हिमम्। गर्जिताडम्बराणां बृंहितसंभ्रमाणाम्। ग्राहिता नीताः। विन्ध्यस्य दन्तावादिवराहस्य करः इति। अयं तु रूपोच्छ्रायातिशयाद् दन्तयुक्तो विन्ध्यशैलः करयुक्त आदिवराहश्चोत्प्रेक्षितः। अयं च अत्युक्तिप्रकारः। अत एव इवशब्दस्याप्रयोगः। आलिखतां बुद्ध्या पर्यालोचयताम् इत्यर्थः। चिन्तासाधनकल्पना चिन्तामयगजतुरगादिपरिकल्पना। कथमपि न सहते इति सम्बन्धः। शून्यीभवच्चेतसाम् यदा स्मृतिपथमायातः तदा चेतसः शून्यत्वम्। मानसगतान् मानसवर्तमानान्, मानससरोगतान् इति च। आशागजेन्द्रान् मनोरथगजान्, दिग्गजानिति च। कज्जलं चक्षुस्संस्कारद्रव्यम् (ംമമ്മ॰)। पतितां निमग्नाम्, निलीनां च। भुक्तास्थानमण्डपस्य भोजनानन्तरासनयोग्यमण्डपस्य। व्यायतवपुषा अमांसलशरीरेण। मौलः

---

१. करवान्—क.

**पङ्क्तिस्थितेन कार्तस्वरस्तम्भमण्डलेनेव परिवृतम्, आसन्नोपविष्टविशिष्टेष्टलोकं, हरिचन्दनप्रक्षालिते तुषारशीकरशीतले दन्तपाण्डरपादे शशिमय इव मुक्ताशैलधवले शिलापट्टशयने समुपविष्टं, शयनीयपर्यन्तविन्यस्ते न्यस्तसकलविग्रहभारं भुजे, दिङ्मुखविसर्पिणि स्वदेहप्रभावितानेन विततमणिमयूखे घर्मसमयसुभगे सरसीव मृदुमृणालजालजटिलजले सराजकं रममाणं, तेजःपरमाणुभिरेव केवलैः निर्मितम्, अनिच्छन्तमपि बलादारोपयितुमिव सिंहासनं सर्वावयवेषु सर्वलक्षणैर्गृहीतं, गृहीतब्रह्मचर्यमप्याश्लिष्टं राजलक्ष्म्या, प्रतिपन्नासिधाराधारणमपि अविसंवादिनं राजर्षिं,**

---

मूलप्रकृतिः (உ௦௧கொ௱[1])। पङ्क्तिस्थितेन पङ्क्त्याकारस्थितेन । कार्तस्वरः सुवर्णम् । तुषारशीकरशीतले तुषारस्वगुणयुक्तैः शीतलैः जलकणैः शीतले । तुषारशब्दस्य शैत्यगुणयुक्तेऽपि वृत्तिरस्ति । तथा च दर्शितम् अमरसिंहेन— 'शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥' इति । अन्यत्र तुषारस्य हिमस्य शीकरेण कणेन शीतले । 'तुषारस्तुहिनं हिमम्' इत्यमरः । दन्तपाण्डरपादे दन्तकृतपाण्डरचरणे । अन्यत्र दण्डवत् पाण्डरकिरणे । शिलापट्टं शिलापट्टकम् । विततमणिमयूखे, अत्र मणिशब्देन मौक्तिकं विवक्षितम् । दृष्टान्तस्य सरसः 'मृदुमृणालजालजटिलं' इति विशेषणस्य वक्ष्यमाणत्वात् । रममाणं क्रीडन्तम् । केवलैः अन्यरहितैरित्यर्थः । सर्वलक्षणैः सामुद्रीयोक्तैः । गृहीतब्रह्मचर्यं स्वीकृतप्रथमाश्रमधर्मम् । मुख्यार्थतया हर्षो ब्रह्मचारीति कविमतमिति केचित् । गौडवधसङ्कल्पेन ब्रह्मचर्यग्रहणमिति केचित् । राजलक्ष्म्या राजश्रिया, कयाचित् स्त्रियेति च । प्रतिपन्नासिधाराधारणं प्रतिपन्नासिधाराख्यव्रतधारणम् । 'पुरुषस्यैकशय्यायामेकान्ते यत् स्त्रिया सह । निर्विकारमवस्थानमसिधाराव्रतं तु तत् ॥' अयमर्थो रघुवंशेऽपि प्रसङ्गेन दर्शितः— 'पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता । इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥' इति । अविसंवादिनम् अविसंवादवन्तम् 'संवादस्त्वानुकूल्यं स्याद् विसंवादो विलोमता । अत्रायमर्थोऽभिप्रेतः कविना क्रियते स्फुटम् । व्रतानुष्ठानसमये कान्तया शयनस्थया । सकामयाभिलषितः

---

१. मूलबलं=உள்ளிகொத்து—क.

विषमराजमार्गनिहितपदस्खलनभियेव सुलग्नं धर्मे, सर्वभूपालपरित्यक्तेन भीतेनेव लब्धवाचा सर्वात्मना सेव्यमानं सत्येन, आसन्नवारविलासिनीप्रतियातनाभिः चरणनखपातिनीभिरिव दिग्वधूभिः प्रणम्यमानं, दीर्घैः दिगन्तपातिभिः दृष्टिपातैः लोकपालानां कृताकृतमिव प्रत्यवेक्षमाणम्, मणिपादपीठपृष्ठप्रतिष्ठितकरेण उपरिगमनाभ्यनुज्ञामिव मार्गमाणं दिवसकरेण, भूषणप्रभासमुत्सारणबद्धपर्यन्तमण्डलेन प्रदक्षिणीक्रियमाणमिव दिवसेन, अप्रणमद्भिररिभिरिव दूयमानं शौर्योष्मणा, फेनायमानमिव चन्दनधवलं लावण्यजलधिमुद्वहन्तम्, ऐकराज्यौर्जित्येन निजप्रतिबिम्बान्यपि अन्यनृपचक्रचूडामणिधृतानि असहमानमिव दर्पदुःखासिकया चामरानिलनिभेन बहुधेव श्वसन्तीं राजलक्ष्मीं दधानं, सकलमिव चतुस्समुद्रलावण्यमादाय

---

तस्यामविकृतेन्द्रियः। नाचरत्यानुकूल्यं यः सम्भोगकरणादिना। स विसंवादिकोऽन्यो यः सोऽविसंवादिसंज्ञितः॥' प्रतिपन्नासिधाराधारणस्य स्त्रियामविसंवादित्वं विरुद्धम्। मुख्यार्थः — प्रतिपन्नासिधाराधारणं प्रतिपन्नम् असिधारायाः खड्गधारायाः धारणं येन। खड्गसम्बन्धिन्या धाराया धार्यत्वेनासम्भवात् प्रतिपन्नखड्गधारणमित्ययमेवार्थोऽत्र कवेरभिमतः। अथवा प्रतिपन्नमसेर्धाराधारणं सन्ततधारणं येन। अविसंवादिनं अविसंवादवन्तम्। 'प्रतिश्रुतानामर्थानामनुष्ठानं तथैव यत्। तत् संवादोऽननुष्ठानं विसंवाद इतीरितम्॥' इति। विषमः दुर्निवहः, निम्नोन्नत इति च। राजमार्गः राजनीतिः, वर्त्म च ध्वन्यते। पदमधिकारः चरणविक्षेपश्च। सुलग्नं सक्तम्, कृतावष्टम्भं च। सर्वात्मना एकदेशेनाप्यनूनम्। प्रतियातनाभिः प्रतिमाभिः। प्रत्यवेक्षमाणम् अनुसन्दधतम्। करेण किरणेन, हस्तेनेति च। मार्गमाणः याचमानः। समुत्सारणं दूरतो निरसनम्। शौर्योष्मणा शौर्यतीव्रतया, [1]उष्णतया च। फेनायमानं फेनमुद्वमन्तम्। फेनशब्दात् [2]फेनमुद्वमतीत्यर्थे 'फेनाच्चेति वक्तव्यम्' (वा० ३. १. १६.) इति क्यष्। ऐकराज्यम् एकराज्यत्वम्, प्रधानराजत्वमित्यर्थः। और्जित्येन उद्रिक्ततया। दुःखासिकया दुःखासनेन, असिन्नेव नियन्त्रितत्वादि भावः। लावण्यं सौन्दर्यं,

---

1. ऊष्मशब्देन उष्णं च ध्वन्यते—क. 2. फेनक्षमभित्यर्थे—ग. ग

उत्थितया श्रिया समुपाश्लिष्टम् , आभरणकिरणजालजायमानानि इन्द्रधनुस्सहस्राणि इन्द्रप्राभृतप्रहितानि विलभमानमिव राज्ञां सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तं, काव्यकथासु अपीतमप्यमृतमुद्वमन्तं, विस्रम्भभाषितेषु अनाकृष्टमपि हृदयं दर्शयन्तं, प्रासादेषु निश्चलामपि श्रियं स्थानस्थानेषु स्थापयन्तं, वीरगोष्ठीषु पुलकितेन कपोलस्थलेनानुरागसन्देशमिव उपांशु रणश्रियः शृण्वन्तं, अतिक्रान्तकलहालापेषु स्नेहवृष्टिमिव दृष्टिम् इष्टे कृपाणे पातयन्तं, परिहासस्मितेषु गुरुप्रतापभीतस्य राजकस्य स्वच्छमाशयमिव दशनांशुभिः कथयन्तं, सकललोकहृदयस्थितमपि न्याये तिष्ठन्तम् , अगोचरे गुणानाम् अभूमौ भाग्यानाम् अविषये वरप्रदानानाम् अशक्यम् आशिषाम् अमार्गे मनोरथानाम् अतिदूरे दैवस्य अदिशि उपमानानाम् असाध्ये धर्मस्य अदृष्टपूर्वे लक्ष्म्याः महत्त्वे स्थितम् , अरुणपादपल्लवेन सुगतमन्थरोरुणा वज्रायुधनिष्ठुरप्रकोष्ठेन वृषस्कन्धेन भास्वद्बिम्बाधरेण प्रसन्नावलोकितेन चन्द्रमुखेन कृष्णकेशेन वपुषा सर्व-

---

लवणरसभावं च । श्रिया शोभया, लक्ष्म्या च । प्राभृतानि उपहारान् । परित्यक्तं व्रतस्थतयेति भावः । मधु वर्षन्तं मधुसदृशं वाक्यं वदन्तमित्यर्थः । अनाकृष्टं बहिरनाक्षिप्तम् , आशयं हृदयम् अभिप्रायं वा । न्याये समीचीनमार्गे । भाग्यानां शुभकर्मणाम् । अदिशि अमार्गे इत्यर्थः । अरुणपादपल्लवेन रक्तपादपल्लवेन ; अरुणः सूर्यसारथिः, स एव पादपल्लवो यस्येति च । अयमेव उत्तरेषामपि वाक्यानां प्रकारः । सुगतमन्थरोरुणा शोभनगतयुक्तमन्थरोरुणा । अन्यत्र सुगतः बुद्धमुनिः । वज्रायुधनिष्ठुरप्रकोष्ठेन अन्यत्र वज्रायुधः इन्द्रः । वृषस्कन्धेन वृषभस्कन्धेन, अन्यत्र वृषो धर्मः । भास्वद्बिम्बाधरेण द्युतिमद्बिम्बफलाधरेण । बिम्बम् (കോവപ്പഴം) । अन्यत्र भास्वद्बिम्बम् आदित्यमण्डलम् । प्रसन्नावलोकितेन प्रसादयुक्तावलोकनवता । अन्यत्र अवलोकितः कश्चिद् बन्धविशेषः । अवलोकितशब्दस्य ध्वनिमात्रमेव विवक्षितं न त्वर्थसङ्गतिः । श्लेषालङ्कारेषु हि क्वचिद् ध्वनिमात्रमेव विवक्षितमपि दृष्टम् , अतो रीतिभङ्गः सोढव्यः । चन्द्रमुखेन चन्द्रतुल्यमुखेन । कृष्णकेशेन नीलकेशेन, अन्यत्र कृष्णो विष्णुः ।

देवतावतारमिवैकत्र दर्शयन्तम्, अपि च मांसलमयूखमालामलिनितमहीमण्डले महति महार्हे माणिक्यमालामण्डितमेखले महानीलमये पादपीठे कलिकालशिरसीव सलीलं विन्यस्तवामपादम्, आक्रान्तकाळियफणाचक्रवाळं बालमिव पुण्डरीकाक्षं, क्षौमपाण्डुरेण चरणनखमणिदीधितिप्रतानेन प्रसरता महीं महादेवीपट्टबन्धेनेव महिमानमारोपयन्तम्, अप्रणतलोकपालकोपेनेव अतिलोहितौ सकलनृपतिमौलिमालासु अतिपीतं पद्मरागरक्तातपमिव वमन्तौ सर्वतेजस्विमण्डलास्तमयसन्ध्यारागमिव धारयन्तौ अशेषराजककुसुमशेखरमधुरससरस्स्रोतांसीव स्रवन्तौ समस्तसामन्तसीमन्तोत्तंसस्रक्सौरभभ्रान्तैः भ्रमरमण्डलैः अमित्रोत्तमाङ्गैरिव मुहूर्तमप्यविरहितौ संवाहनतत्परायाः श्रियो विकचरक्तपङ्कजवनवासभवनानीव कल्पयन्तौ जळजशङ्खमकरमीनसनाथतळतया कथितचतुरम्भोधिभोगचिह्नाविव चरणौ दधानं, दिङ्नागदन्तमुसलाभ्यामिव विकटमकरमुखबन्धबन्धुराभ्याम् उद्वेललावण्यपयोनिधिप्रवाहाभ्यामिव फेनकाहितशोभाभ्यां कल्पचन्दनद्रुमाभ्यामिव भोगिमण्डलशिरोरत्नरश्मिरज्यमानमूलाभ्यां हृदयारोपितभूभारधारणमाणिक्य-

---

मांसलं पीवरम् । मेखला पार्श्वप्रदेशः । अतिपीतम् अतीव पीतं पीतवर्णम्, अतीव कृतपानम् इति च । तेजस्विमण्डलं प्रतापिनां समूहः, आदित्यादीनां तेजस्विनां बिम्बं च । उत्तंसः शेखरः । संवाहनं मर्दनम् । जलजं पद्मम् । मकरः मत्स्यविशेषः । कथितेत्यादि— अम्भोनिधावपि जलजादीनि सन्तीति भावः । मकरमुखबन्धः जानुसन्धिबन्धः । अन्यत्र दन्तेषु स्वर्णादिविरचितो मकरमुखाकारो गोळकविशेषः । फेनकं वीराणामालेपनविशेषः; शरीराणां शोभाधानार्थं मर्दनविलेपनादयः । उत्कीर्णबिन्दुचित्रं वस्त्रमिति केचित् । अन्यत्र [1]फेनको डिण्डीरः (നുര) । भोगिमण्डलं राजसमूहः । अन्यत्र कल्पद्रुमपक्षे भोगिनः शेषवासुक्यादिसर्पाः; चन्दनद्रुमपक्षे केवलसर्पाः । मूलं मूलप्रदेशः । अन्यत्र

---

१. फेनकः=[illegible]—क.

स्तम्भाभ्यामिव ऊरुदण्डाभ्यां विराजमानम्, अमृतफेनपटलपाण्डुना मेखलारत्नमयूखखचितेन नितम्बबिम्बव्यासङ्गिना विमलपयोधौतेन नेत्रसूत्रनिवेशशोभिना वरवाससा वासुकिनिर्मोकेणेव मन्दरं द्योतमानम्, अघनेन सतारागणेनोपरिकृतेन द्वितीयाम्बरेण भुवनाभोगमिव भासमानम्, इभपतिदशनमुसलसहस्रोल्लेखनकठिनमसृणितेन अपर्याप्ताम्बरप्रथिम्ना विविधवाहिनीसंक्षोभकलकलसम्मर्दसहिष्णुना कैलासमिव महास्फटिकतटेनोरुणा उरःकवाटेन विराजमानं, श्रीसरस्वत्योः उरोवदनोपभोगविभागसूत्रेणेव पातितेन शेषेणेव भुजस्तम्भन्यस्तभूभारलब्धविश्रान्तिसुखप्रसुप्तेन हारदण्डेन परिवेष्टितकन्धरं, जीवितावधिगृहीतसर्वस्वमहादानदीक्षाचीवरेणेव हारमुक्ताफलकिरणनिकरेण प्रावृतवक्षस्थलम्, अजितजिगीषया बालैः भुजैरिवापरैः प्ररोहद्भिः बाहूपधानशायिन्याः श्रियः कर्णोत्पलमधुरस-

---

वृक्षाणां शिफाप्रदेशः । 'मूलमाद्ये शिफाभयोः' इत्यमरः । पटलपाण्डुना पटलवत्पाण्डुना । वासुकिनिर्मोकपक्षे पटलेन पाण्डुना । मेखला कटिसूत्रम्; पर्वतमध्यप्रदेशश्च । नितम्बः कटिपश्चाद्भागः, पर्वततटविशेषश्च । पयः जलं, क्षीरं च । नेत्रसूत्रनिवेशशोभिना पट्टसूत्रसंश्लेषशोभिना; अन्यत्र नेत्रसूत्रं मन्थनरज्जुः 'नेत्रं नाड्यां तरोर्मूले वस्त्रे दृशि मथोगुणे' इति वैजयन्ती । अत्र वस्त्रशब्देन नेत्रपट्टमुच्यते । मथोगुण इत्यस्य मन्थनरज्जावित्ययमर्थो विवक्षितः । निविश्यतेऽस्मिन्निति निवेशः स्थानमुक्तम् नेत्रसूत्रस्य निवेशशोभिना नेत्रसूत्रस्थानगतेनेत्यर्थः । अघनेन लघुना, मेघहीनेनेति च । सतारागणेन ताराशब्देन ताराकारत्वाद् वस्त्रप्रान्तेषूत्कीर्णा बिन्दवो विवक्षिताः; अन्यत्र नक्षत्रगणाः । उपरिकृतेन उत्तरीयत्वेनोपरि न्यस्तेन; ऊर्ध्वभागगतेन च । अम्बरेण वस्त्रेण, आकाशेनेति च । इभपतिः शत्रूणां गजो विवक्षितः । स्फटिकतटपक्षे वन्यगजः । उल्लेखः भेदः । अपर्याप्ताम्बरप्रथिम्ना उभयत्र समानम् । वाहिनीसंक्षोभकलकलसम्मर्दसहिष्णुना शत्रुसेनासंक्षोभकोलाहलसम्मर्दक्षमेण, अकातरेण इत्यर्थः । अन्यत्र वाहिनी नदी । पातितेन स्थापितेन । अजितेत्यादि— अजितोऽनेकभुज इति भावः; अजितो विष्णुः । 'विष्णावप्यजिताव्यक्तौ' इत्यमरः ।

धारासन्तानैरिव गळद्भिः भुजजन्मनः प्रतापस्य निर्गममार्गैरिवातिक्रामद्भिः अरुणैः केयूररत्नकिरणदण्डैरुभयतः प्रसारितमणिमयपक्षवितानमिव माणिक्यमहीधरं सकललोकालोकमार्गार्गळेन चतुरुदधिपरिक्षेपखात-शातकुम्भशिलाप्राकारेण सर्वराजकसिंहबन्धवज्रपञ्जरेण भुवनलक्ष्मीप्रवेश-मङ्गलमहामाणिक्यतोरणेन अतिदीर्घेण दोर्दण्डयुगलेन दिशां दिक्-पालानां च युगपदायतिमपहरन्तं, सौदर्यलक्ष्मीचुम्बनलोभेन कौस्तुभमणे-रिव मुखावयवतां गतस्याधरस्य गलता रागेण पारिजातपल्लवरसेनेव सिञ्चन्तं दिङ्मुखानि, अन्तरान्तरा सुहृत्परिहासस्मितैः प्रकीर्यमाण-विमलदशनकिरणशिखाप्रतानैः प्रकृतिमुग्धाया राजश्रियः प्रज्ञालोकमिव दर्शयन्तम्, मुखजनितेन्दुसन्देहादागतानि कुमुदवनानीव प्रेरयन्तं स्फुट-धवलदशनपङ्क्तिभिः कृतकुमुदवनशङ्काप्रविष्टां शरज्ज्योत्स्नामिव दर्शयन्तं, मदिरामृतपारिजातगन्धगर्भेण भरितसकलककुभा मुखामोदेनामृतमथन-दिवसमिव सृजन्तं, विकचमुखकमलकर्णिकाकोशेन अनवरतपीयमान-श्वाससौरभलोभेनेव अधोमुखेन नासावंशेन शोभमानं, चक्षुषः क्षीर-स्निग्धधवलस्य धवलिम्ना दिङ्मुखानि अपूर्ववदनचन्द्रोदयोद्वेलक्षीरोद-प्लावितानीव कुर्वाणं, विमलकपोलफलकप्रतिबिम्बितां चामरग्राहिणीं विग्राहिणीमिव मुखनिवासिनीं सरस्वतीं दधानम्, अरुणेन चूडा-मणिशोचिषा सरस्वतीर्ष्याकुपितलक्ष्मीप्रसादनलग्नचरणालक्तकरसेनेव

---

अतिक्रामद्भिः अतिदूरं गच्छद्भिः। पक्षवितानं पतत्रविस्तारम्। 'क्रतुविस्तारयो-रस्त्री वितानं त्रिषु तुच्छके' इत्यमरः। लोकालोकमार्गार्गळेन लोकालोकमध्य-गतानां मार्गाणां रक्षापरिघेण। परिक्षेपखातं परिवेष्टनाख्यपरिखा। पञ्जरम् मृगादीनामवस्थानार्थं स्थूलकाष्ठघटितो यन्त्रविशेषः। आयतिं दिक्पक्षे दीर्घताम्; दिक्पालपक्षे प्रभावम्। सौदर्येत्यादि— अस्य मुखे लक्ष्मीः सर्वदा वसतीति भावः। सुहृत्परिहासस्मितैरित्येतदुत्तरेषु त्रिषु वाक्येषु प्रज्ञालोकदर्शनादिषु प्रत्येकं हेतुः भवति। कर्णिकाकोशः पद्मबीजकोशी (താമരമൊട്ടു്?)।

लोहितायमानललाटतटम्, आपाटलांशुतन्तुतन्त्रीसन्तानवलयिनीं कुण्डलमणिकुटिलकोटिबालवीणाम् अनवरतचलितचरणानां वादयतामुपवीणयतामिव स्वरव्याकरणविवेकविशारदं श्रवणावतंसमधुकरकुलानां कलक्वणितमाकर्णयन्तम्, उत्फुल्लमालतीमयेन राजलक्ष्मीकचग्रहलीलालग्नेन नखज्योत्स्नावलयेनेव मुखशशिपरिवेषमण्डलेन मुण्डमालामण्डनेन परिकलितकेशान्तं, शिखण्डकाभरणभुवा मुक्ताफलालोकेन मरकतमणिकिरणकलापेन चान्योन्यसंवलनसमुदितवृजिनेन प्रजवितेन प्रयागप्रवाहवेणिकावारिणेवागत्य स्वयमभिषिच्यमानं, श्रमजलविलीनबहलकृष्णागरुतिलककलङ्ककल्पितेन कालिम्ना प्रार्थनाचाटुचतुरचरणपतनकृतश्यामिकाकिणेनेव नीलायमानललाटलेखाभिः क्षुभितमानसोद्गतैः उत्कलिकाकलापैरिव हारैरुल्लसद्भिः अवष्टभ्यमानाभिः विलासवल्गनचटुलैः भ्रूलताकम्पैरीर्ष्यया श्रियमिव तर्जयन्तीभिः आयामिभिः श्वसितैः अविरलमिलितपरिमलैः मलयमारुतमयैः पाशैरिवाकर्षन्तीभिः विकटबकुलावलीवराटक-

---

अंशुतन्तुतन्त्री तन्त्वाकारोऽशुः अंशुतन्तुः, स एव तन्त्री (७००८)। कुण्डलमणिकुटिलकोटिबालवीणां कुण्डलरत्नानां कुटिलकोटिरेव बालवीणा। बालवीणेति वीणाविशेष उच्यते। उपवीणयतां वीणयोपगायतां, स्तुवतामित्यर्थः। वीणाशब्दात् 'सत्याप —' (पा० सू० ६. १. २१.) इत्यादिसूत्रेण उपगायतीत्यर्थे णिच्। स्वरव्याकरणविवेकविशारदं षड्जादीनां स्वराणां व्याकरणेन स्फुटीकरणेन जाताद्, विवेकाद् विवेकज्ञानात्, विशारदं स्खलनरहितप्रयोगम्। 'शब्दशास्त्रे व्याकरणं व्याहृङ्कारे स्फुटीकृतौ' इति वैजयन्ती। परिकलितं सम्बद्धम्। संवलनसमुदितवृजिनेन सङ्गत्या एकीभूय गतेन। प्रयागः गङ्गायमुनयोः सङ्गमप्रदेशः। प्रवाहवेणिका वेगयुक्तजलस्रोतः। विलीनं द्रुतम्। कालिम्ना काष्ण्येंन। किणं रूढं व्रणस्थानं (७७०८)। मानसं मनः, मानससरश्च। उत्कलिका औत्सुक्यं, तरङ्गश्च। उल्लसद्भिः दीप्यमानैः। उन्मुखं चलद्भिश्च। अवष्टभ्यमानाभिः आक्रम्यमाणाभिः। वल्गनं चलनम्। विकटेत्यादि— बकुलावली-

वेष्टितमुखैः बृहद्भिः स्तनकलशैः स्वदारसन्तोषरसमिव ग्रानवशेषमुद्धरन्तीभिः कुचोत्कम्पिकाविकारप्रेङ्खितानां तरलमणीनां रश्मिभिः आकृष्यहृदयमिव हठात् प्रवेशयन्तीभिः प्रभाशुचामाभरणमणीनाम् मयूखैः प्रसारितैः बाहुभिरिव आलिङ्गन्तीभिः जृम्भानुबन्धबन्धुरवदनारविन्दावरणीकृतैरुत्तानैः करकिसलयैः सरभसप्रधावितानि मानसानीव रुन्धन्तीभिः मदान्धमधुकरकुलकीर्यमाणकर्णकुसुमरजःकणकूणितकोणानि कुसुमशतशरशरप्रहारमूर्च्छामुकुलितानीव लोचनानि सचतुरं सञ्चारयन्तीभिः अन्योन्यमत्सरादिव आविर्भवद्भङ्गुरभ्रुकुटीविभ्रमाक्षिप्तैः कटाक्षैः कर्णोत्पलैरिव ताडयन्तीभिः अनिमिषदर्शनसुखरसराशिमन्थरितपक्ष्मणा चक्षुषा पीतमिव कोमलकपोलपालिप्रतिबिम्बितं राजानं वहन्तीभिः अभिलाषलीलानिर्निमित्तस्मितैः चन्द्रोदयानिव मदनसाहायकदानाय सम्पादयन्तीभिः अङ्गभङ्गवलनान्योन्यघट्टितोत्तानकरवेणिकाभिः स्फुटनमुखराङ्गुलिकाण्डकुण्डलीक्रियमाणनखदीधिति-

---

वराटकवेष्टितमुखैः बकुलमालाख्याभी रज्जुभिर्वेष्टितमुखैः । 'शुल्बं वराटकः स्त्री तु रज्जुस्त्रिषु वटी गुणः' इति सिंहः । 'वट्यते वेष्ट्यते वराटक' इति क्षीरस्वामी व्याख्यत् । स्वदारसन्तोषरसं स्वदारसन्तोषाख्यमनुभवं, पुंसामिति शेषः । उद्धरन्तीभिः उन्मूलयन्तीभिः । अत्र विकटवराटकवेष्टितमुखैः कलशैः रसं जलं कूपादिभ्य उद्धरन्तीभिः उदञ्चन्तीभिरिति च गम्यते । उत्कम्पिका चलनम् । तरलमणीनां हारमध्यस्थितानां रत्नानाम् । रश्मिभिः किरणैः, रज्जुभिश्च । प्रसारितैः विजृम्भितैः, दीर्घीकृतैश्च । जृम्भा जृम्भणम् (കോട്ടുവായിടുക) । जृम्भा तु राजदर्शनजातेन स्मरपारवश्येन सञ्जातेत्यनुसन्धेयम् । कूणितं निमीलितम् । 'कूण निमीलने' इति धातुः । कोणम् अन्तम् । सचतुरं सचातुर्यम् । कटाक्षैः अपाङ्गनिरीक्षणैः । अनिमिषं निमेषरहितम् । मन्थरितं निमेषोन्मेषालसम् । कपोलपालिः कपोलप्रदेशो वा । 'पालिरश्रीः प्रदेशोऽङ्कः स्त्रश्मश्रुः स्त्री त्सरुश्छदः' इति वैजयन्ती । चन्द्रोदयानित्यादि । अस्य वशीकरणे केवलस्यैव मदनस्य शक्तिहीनतया चन्द्रोदयानां सम्पादनमित्यनुसन्धेयम् । अङ्गभङ्गं अङ्गविक्षेपणम् (മൂരിനിവിരുക) । करवेणिका करपङ्क्तिः । स्फुटनं पर्वस्फोटः (ഞൊട്ട) ।

निवहनिभेन अकिञ्चित्करकामकार्मुकाणीव रुषा भञ्जन्तीभिः वार-विलासिनीभिः विलुप्यमानसौभाग्यमिव सन्ततस्पर्शस्विन्नवेपमानकर-किसलयगलितचरणारविन्दां चरणग्राहिणीं विहस्य कोणेन लीलालसं शिरसि ताडयन्तम्, अनवरतकरकलितकोणतया चात्मनः प्रियां वीणामिव श्रियमपि शिक्षयन्तं, निःस्नेह इति धनैः अनाश्रयणीय इति दोषैः निग्रहरुचिरिति इन्द्रियैः दुरुपसर्प इति कलिना नीरस इति व्यसनैः भीरुरिति अयशसा दुर्ग्रहचित्तवृत्तिरिति चित्तभुवा स्त्रीपर इति सरस्वत्या षण्ड इति परकलत्रैः काष्ठमुनिरिति यतिभिः धूर्त इति वेश्याभिः नेय इति सुहृद्भिः कर्मकर इति विप्रैः असहाय इति शत्रुयोधैः एकमप्यनेकधा गृह्यमाणं, शन्तनोर्महावाहिनीपतिं, भीष्माज्जितकाशितमं, द्रोणाच्चापलालसं,

---

अकिञ्चित्करं राजविषय इति शेषः। विलुप्यमानं यथेष्टं ह्रियमाणम्। कोणेन लीलालगुडेन। आत्मनः प्रियां श्रियमपि वीणामिव (क्षेप ? शिक्ष)यन्त-मित्यन्वयः। दुरुपसर्पः दुष्प्रापः। व्यसनैः— 'मृगयाक्षाः स्त्रियः पानं वाक्पारुष्यार्थ दूषणे। दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ॥' इति। चित्तभुवा कामेन। षण्डः नपुंसकः। मुनिः विरक्ततया काष्ठकल्पमुनिरित्यर्थः। धूर्त इति वेश्यापतिरिति, धूर्तोऽयं सर्वदा अन्यासक्तमनस्क एव। अतो मयि विरक्त इति वेश्याभिः प्रत्येकं गृह्यमाणमित्यर्थः। अनेनास्य वैराग्यातिशय उक्तः। नेयः वश्यः। 'वश्यः प्रणेयः' इत्यमरः। असहायः सहायनिरपेक्षः। समरेष्वस्यैकाकिन एव दर्शनादिति भावः। शन्तनोः भीष्मपितुः। महावाहिनी-पतिं महासेनाप्रभुम्। अन्यत्र गङ्गाभर्तारम्। जितकाशितमम् अतीव जिताहवम्। 'जितकाशी जिताहवः' इति हलायुधः। अथवा जितं जयः भावे निष्ठा। तेनातीव काशिनं दीपनशीलम्। 'काशृ दीप्तौ' इति धातुः। अन्यत्र काशी-शब्देन काशीदेशाधिपतिरुच्यते। अतीव जितः काशीदेशाधिपतिर्येन। 'पुरा भीष्मस्तु विचित्रवीर्यार्थम् अम्बामम्बालिकामम्बिकां च स्वयंवरे काशिराजं विजित्याहृतवान्' इति कथा। जितकाशिनमित्यपपाठः। देशवाचकस्येकारान्तस्य काशिशब्दस्य काशिनमितिरूपानिष्पत्तेः। चापलालसं चापलेषु अलसम्। अन्यत्र

गुरुपुत्रादमोघमार्गणं, कर्णान्मित्रप्रियं, युधिष्ठिराद्बहुक्षमं, भीमादनेकनागायुतबलं, धनञ्जयान्महाभारतरणयोग्यं, कारणमिव कृतयुगस्य, बीजमिव बुधसर्गस्य, उत्पत्तिद्वीपमिव दर्पस्य, एकागारमिव करुणायाः, प्रतिवेशकमिव पुरुषोत्तमस्य, खनिपर्वतमिव पराक्रमधनस्य, सर्वविद्यासङ्गृहीतिगृहमिव सरस्वत्याः, द्वितीयामृतमथनदिवसमिव लक्ष्मीसमुत्थानस्य, बलदर्शनमिव वैदग्ध्यस्य, सर्वावस्थानमिव स्थितीनां, सर्वस्वकथनमिव कान्तेः, अपवर्गमिव रूपपरमाणुपर्गस्य, सकलदुश्चरितप्रायश्चित्तमिव राजत्वस्य, सर्वबलसन्दोहावस्कन्दमिव कन्दर्पस्य, उपायमिव पुरन्दरदर्शनस्य, अन्तर्धानमिवाधर्मस्य, कन्यान्तःपुरमिव कलानां, परमप्रमाणमिव सौभाग्यस्य, राजसर्गक्रतुसमाप्त्यवभृथस्नानदिवसमिव सर्वप्रजापतीनां,

---

चापे धनुषि लालसं लम्पटम्। गुरुपुत्राद् अश्वत्थाम्नः। अमोघमार्गणम् अमोघम् अव्यर्थं मार्गणं याच्ञा यत्र। अथवा अमोघा उपलब्धेष्टार्था मार्गणा याचका यस्य। अन्यत्र अप्रतिहतशरम्। मित्रं सुहृत्; मित्र आदित्यश्च। क्षमा भूमिः, क्षान्तिश्च। भीमाद् भीमसेनात्। अनेकनागायुतबलं अनेकैः नागैः गजैः अयुतं बलं सेना यस्य। अन्यत्र अनेकम् असाधारणं गजानामयुतस्य दशसहस्रस्य बलमिव बलं शक्तिः यस्य। 'नागायुतबलो भीमः' इति महाभारतम्। एकशब्दस्य साधारणवाचकत्वे मुरारिः— 'एको (वर्ष ? वेष) परिग्रहः परिकरः साधारणं कर्मणाम्' इति। बलशब्दः शक्तिवाची। 'बलं रूपेऽस्थनि स्थौल्ये शक्तिरेतश्चमूषु च' इति वैजयन्ती। महाभारतरणयोग्यं महतां भाराणां दुष्करकर्मणां तरणस्य निर्वहणस्य योग्यं क्षमम्। अन्यत्र महाभारतरणे महाभारतयुद्धे योग्यः शराभ्यासो यस्य। 'अभ्यासः कथ्यते योग्यः' इति शरप्रकरणे हलायुधः। प्रतिवेशकं प्रतिच्छन्दम्। खनिपर्वतम् आकरयुक्तपर्वतम्। बलं शक्तिः। स्थितीनां मर्यादानाम्। अपवर्गं समाप्तिम्। अवस्कन्दं विलोपनम्। उपायमिव पुरन्दरदर्शनस्य पुरन्दरं दिदृक्षमाणानां तत्सदृशस्यास्य दर्शनादेव

रत्नालयमिव गम्भीरं च प्रसन्नं च त्रासजननं च रमणीयं च कौतुकजननं च पुण्यं चक्रवर्तिनं श्रीहर्षदेवमद्राक्षीत्।

दृष्ट्वा चानुगृहीत इव साभिलाष इव तृप्त इव रोमाञ्चमुचा मुखेन मुञ्चन्नानन्दवारिबिन्दून् दूरादेव विस्मयस्मेरमुखः समचिन्तयत्—'सोऽयं सुजन्मा पुमान् सुगृहीतनामा तेजसां राशिः चतुरुदधिकेदारकुटुम्बी भोक्ता ब्रह्मस्तम्बफलस्य सकलादिराजचरितजयज्येष्ठमल्लो देवः परमेश्वरो हर्षः। एतेन खलु राजन्वती पृथिवी। नास्य हरेरिव वृषविरोधीनि बालचरितानि। न पशुपतेरिव दक्षजनोद्वेगकारीणि ऐश्वर्यविलसितानि। न शतक्रतोरिव गोत्रविनाशपिशुनाः प्रवादाः। न यमस्येवातिवल्लभानि दण्डग्रहाणि। न वरुणस्येव निस्त्रिंशग्राससहस्ररक्षिता रत्नालयाः। न

---

पुरन्दरदर्शनकार्यनिष्पत्तेरेवमुक्तम्। गम्भीरं महत्तरम्, अगाधं च। प्रसन्नं प्रसादयुक्तं, स्वच्छं च।

स्मेरमुखः विकासिमुखः। चतुरुदधिकेदारकुटुम्बी चतुरुदधिशब्देन चतुरुदधिमध्यगतः प्रदेश उच्यते। केदारः क्षेत्रम्। कुटुम्बी कृषीवलः। 'क्षेत्राजीवः कुटुम्बी च' इति हलायुधः। चतुरुदधिसंज्ञकस्य केदारस्य अध्यक्ष इत्यर्थः। ब्रह्मस्तम्बफलस्य ब्रह्मस्तम्बाख्यफलस्य; स्तम्बगतस्य फलस्येति च ध्वन्यते। सकलादिराजचरितजयज्येष्ठमल्लः आदिराजानो भरतादिपूर्वराजानः। जयज्येष्ठमल्लः जयज्येष्ठश्च मल्लश्च। ज्येष्ठः प्रशस्तः। 'त्रिषु ज्येष्ठोऽतिशस्तेऽपि' इत्यमरः। राजन्वती शोभनराजयुक्ता। 'राजन्वान् सौराज्ये' (पा० सू० ८. २. १४.) इति निपातः। 'सुराज्ञि देशे राजन्वान्' इति अमरश्च। वृषविरोधीनि धर्मविरोधीनि। अन्यत्र वृषभविरोधीनि। 'पुरा गोपीजनेन सह वृन्दावने विहरन् भगवान् हरिः कंसप्रेरितं वृषभरूपिणम् अरिष्टं दानवं हतवान्' इति कथा। दक्षजनः समर्थजनः, दक्षप्रजापतेः सम्बन्धी जनश्च। ऐश्वर्यं श्रीमत्ता प्रभावं वा। अन्यत्र ईश्वरस्य कर्म। गोत्रं वंशः, पर्वतश्च। प्रवादा उक्तयः, स्तुतयश्च। दण्डं दमनं, यष्टिश्च। निस्त्रिंशग्राहः खड्गग्राही; अन्यत्र क्रूरजलचरसत्त्वविशेषः (മുതല)। रत्नालया भाण्डागाराणि, समुद्राश्च।

धनदस्येवातिनिष्फलाः सन्निधिलाभाः, न जिनस्येवार्थशून्यानि विज्ञान-दर्शनानि । न चन्द्रमस इव बहुलदोषोपहताः श्रियः चित्रमिदम् अत्यमरं राजत्वम् । अपि च, अस्य त्यागस्यार्थिनः, प्रज्ञायाः शास्त्राणि, कवित्वस्य वाचः, सत्त्वस्य साहसस्थानानि, उत्साहस्य व्यापाराः, कीर्तेः दिङ्मुखानि, अनुरागस्य लोकहृदयानि, गुणगणस्य सङ्ख्याः, कौशलस्य कलाः न पर्याप्तो विषयः । यस्मिंश्च राजनि, यतीनां योगपट्टिकाः, पुस्तकर्मणां पार्थिवविग्रहाः, षट्पदानां दानग्रहणकलहाः, वृत्तानां पादच्छेदः, अष्टापदानां चतुरङ्गकल्पना, पन्नगानां द्विजगुरुद्वेषः, वाक्यविदाम् अधिकरणविचारः

---

सन्निधिः सन्निधानम् ; अन्यत्र शोभनशङ्खपद्मादिकनिधिः । जिनस्य बुद्धमुनेः अर्थशून्यानि प्रयोजनहीनानि ; अन्यत्र ब्रह्मवस्तुरहितानि । बौद्धानाम् अर्थशून्यं ज्ञानमेवास्तीति सिद्धान्तः । तथोक्तं चाचार्यैः – 'तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः' इति । विज्ञानदर्शनानि विज्ञानं शिल्पशास्त्रयोः बुद्धिः । दर्शनं प्रेक्षणम् । तदीयविज्ञानानां प्रेक्षणमित्यर्थः । अन्यत्र विज्ञानविषयाः सिद्धान्ताः । बहुलदोषोपहताः बहुभिर्दोषैरुपहताः ; अन्यत्र बहुलदोषा कृष्णपक्षरात्रिः । तया नाशिताः । श्रियः सम्पदः, शोभाश्च । अत्यमरं अमरातीतम् । यतीनां योगिनाम् । योगपट्टिकाः योगसाधनभूताः पट्टिकाः । यतीनामेव योगपट्टिकाः सन्ति, न जनानामिति शेषः । अन्यत्र योगानां चाराणां पट्टिका पत्रिका (ത്രീoooല) । पुस्तकर्मणाम्— 'कर्म लेप्यादिकं सर्वं पुस्तकर्म स्मृतं बुधैः' मृदादिप्रतिकृतीनाम् इत्यर्थः । पार्थिवविग्रहः मृन्मयशरीरम्, राजविरोधश्च । दानं मदजलम्, देयद्रव्यं च । वृत्तानां वसन्ततिलकादीनाम् । पादच्छेदः चतुर्षु पादेषु विच्छित्तिः ; अन्यत्र चरणच्छेदः । अष्टापदानां चतुरङ्गफलकानाम् । चतुरङ्गकल्पना द्यूतविशेषरचना । अन्यत्र नरकरितुरगरथादीनाम् । द्विजगुरुद्वेषः द्विजानां पक्षिणां गुरुः गरुडः तस्मिन् द्वेषः । अन्यत्र द्विजानां ब्राह्मणानां गुरूणां पित्रादीनां च द्वेषः । वाक्यविदां मीमांसकानाम् । अधिकरणविचारः

---

१. ഭ്ദ്രോല–क.

इति समुपसृत्य चोपवीती स्वस्तिशब्दमकरोत्।

अथोत्तरेण नातिदूरे राजधिष्ण्यस्य गजपतिपरिचारकः तार-मधुरम् अपरवक्त्रमुच्चैरगायत्—

'करिकलभ विमुञ्च लोलतां चर विनयव्रतमानताननः।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरि क्रमते न तेऽङ्कुशः॥'

राजा तु तच्छ्रुत्वा दृष्ट्वा च तं गम्भीरगिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्निव नभोभागमपृच्छत् — 'किमेष स बाणः' इति। 'देव! यदाज्ञापयसि' इति विज्ञापितो दौवारिकेण, न तावदेनं कृतप्रसादं पश्यामीति तिर्यङ्नीलधवलांशुकशारां तिरस्करणीमिव भ्रामयन् अपाङ्ग-पीयमानतरलतारकस्यायामिनीं चक्षुषः प्रभां परिवृत्य प्रेष्ठस्य पृष्ठतो

---

प्रकरणसमुदायग्रन्थविचारः। 'वेदार्थनिर्णयोपायन्यायव्युत्पादितः परम्। ग्रन्थे ग्रन्थेऽधिकरणं पूर्वसिद्धान्तभेदवान्॥' इति। अन्यत्र अधिको रणस्य विचारः। अधिकरणं व्यवहारदर्शनस्थानम्। अत्र विचारो दुष्टादुष्टविचारः। उपवीती उद्धृतदक्षिणबाहुः। 'उद्धृते दक्षिणे बाहावुपवीत्युच्यते द्विजः' इति मनुः। अस्मिंस्तु वचने यद्यप्युपवीतधारणनिमित्तमुद्धरणं विवक्षितं तथाप्यत्र प्रकरणौ-चित्यात् केवलोद्धरणमात्रमेवाभिमतमिति वदन्ति।

राजधिष्ण्यस्य राजगृहस्य। 'एनपा द्वितीया' (पा०सू० २.३.३१.)इति योग-विभागात् षष्ठी। 'दूरान्तिकार्थैः षष्ठ्यन्तरस्याम्'(पा०सू० २.३.३४.) इत्यनेन वा।

करिकलभेत्यादि—चापलान्यपहाय सम्यक् साधुवर्त्मनि अवतिष्ठस्व, तत-स्त्वयि देवः क्रूरं नाचरतीति भट्टबाणस्योपश्रुतिश्चोक्ता। नखकोटिभङ्गुरः नखाग्रवत् कुटिलः। क्रमते न तेऽङ्कुशः। न क्रमते अप्रतिबन्धेन न प्रवर्तते। प्रतिबन्ध एव भवतीत्यर्थः। 'वृत्तिसर्गतायनेषु क्रमः' (पा०सू० १.३.३८.) इति वृत्तावात्मने-पदम्। 'वृत्तिरप्रतिबन्ध' इति वृत्तिकारः। किमेष स बाण इति किंशब्दः प्रश्ने। तिरस्करिणीं यवनिकाम् (७।१०)। परिवृत्य पराङ्मुखीभूय। प्रेष्ठस्य प्रियतमस्य।

निषण्णस्य मालवराजसूनोरकथयत् 'महानयं भुजङ्गः' इति। तूष्णींभावेन तु गमितनरेन्द्रवचसि तस्मिन् मूके राजके मुहूर्तमिव स्थित्वा बाणो व्यज्ञापयत्। 'देव! अविज्ञाततत्त्व इव अश्रद्दधान इव अविदितलोकवृत्तान्त इव अकस्मादेवमाज्ञापयसि। स्वैरिणो विचित्राः खलु लोकस्य स्वभावाः प्रवादाश्च। महद्भिस्तु यथार्थदर्शिभिर्भवितव्यम्। नार्हसि मामन्यथा सम्भावयितुम् अविशिष्टमिव। ब्राह्मणोऽस्मि जातः सोमपीथिनां वंशे वात्स्यायनानाम्। यथाकालमुपनयनादयः कृता मे संस्काराः। पठिताः साङ्गा वेदाः। श्रुतानि च यथाशक्ति शास्त्राणि। दारपरिग्रहादारभ्य अभ्यागारिकोऽस्मि। तत्र का मे भुजङ्गता? लोकद्वयाविरोधिभिस्तु चापलैः शैशवमशून्यमासीत्। तत्र अनपलापकोऽस्मि। अनेनैव गृहीतविप्रतीसारमिव मे हृदयम्। इदानीं तु सुगत इव शान्तचेतसि, मनाविव प्रवर्तयितरि

---

मालवराजसूनोः कुमारगुप्तनामधेयस्य। उत्तरत्र वक्ष्यते— 'मालवराजपुत्रौ भुजाविव मे शरीरादव्यतिरिक्तौ कुमारगुप्तमाधवगुप्तनामानौ' इति। भुजङ्गः विटः। तूष्णींभावेन गमितम् अनुत्तरवचनेन यापितम्। मूके तूष्णीं स्थिते। तत्त्वं यथार्थता। अश्रद्दधानः उपपत्तिभिः साधितस्यार्थस्याप्रत्यायकः, नास्तिक इत्यर्थः। 'तथेति प्रत्ययः श्रद्धा' इति हलायुधः। प्रवादा उक्तयः। ब्राह्मणोऽस्मि ब्राह्मणेन ब्राह्मण्यामुत्पन्नोऽस्मि। सोमपीथिनां सोमपायिनाम्। 'सोमपीथी तु सोमपः' इत्यमरः। साङ्गम्— 'निरुक्तं ज्योतिषं छन्दः कल्पं व्याकरणं तथा। छन्दसां विचितिं शिक्षां छन्दोङ्गानि वदन्ति षट्॥' इति। अभ्यागारिकः कुटुम्बव्यापृतः। '.... कुटुम्बव्यापृतस्तु यः। स्यादभ्यागारिकस्तस्मिन् .... ' इत्यमरः। भुजङ्गः धूर्तः। अनपलापकः प्रकटयिता। विप्रतीसारः पश्चात्तापः। 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमरः। सुगते बुद्धमुनौ। मनौ मनुनाम्नि स्मृतिकारे। प्रवर्तयितरि अनुष्ठापयितरि, चोदयितरि च।

---

१. 'अभ्यगारिकमिच्छन्ति कुटुम्बव्यापृतं जनाः' इति हलायुधः। २. अनपलापकः अत्र चापलेच्छानपलापः, अनिह्नवः। अनेन चापलाचरणेन विप्रतीसारः।

वर्णाश्रमव्यवस्थानां, समवर्तिनीव साक्षाद् दण्डभृति देवे शासति सप्ताम्बुराशिरशनाम् अशेषद्वीपमालिनीम् महीं क इवाशङ्कः सर्वव्यसनबन्धोरविनयस्य मनसाप्यवकाशं कल्पयिष्यति । आसतां च तावन्मानुष्यकोपेताः। त्वत्प्रभावादलिनोऽपि भीता इव मधु पिबन्ति । रथाङ्गनामानोऽपि लज्जन्त इव अत्यनुवृत्तिव्यसनैः प्रियाणाम् । कपयोऽपि चकिता इव चपलायन्ते । शरारवोऽपि सानुक्रोशा इव श्वापदगणाः पिशितानि भुञ्जते । सर्वथा कालेन मां ज्ञास्यति स्वामी स्वयमेव । अनपायिन्यः चित्तवृत्तिग्राहिण्यो हि भवन्ति प्रज्ञावतां प्रकृतयः' इत्यभिधाय तूष्णीमभूत् ।

भूपतिरपि 'एवमस्माभिः श्रुतम्' इत्येतावदभिधाय तूष्णीमेवाभूत् । संभाषणासनदानादिना प्रसादेन नैनम् अन्वग्रहीत् । केवलममृतवृष्टिभिः स्नपयतेव स्नेहगर्भेण दृष्टिपातमात्रेणान्तर्गतां प्रीतिमकथयत् । अस्ताचलाभिलाषिणि लम्बमाने सवितरि तु उत्थाय विसर्जितराजलोको नरपतिरभ्यन्तरं प्राविशत् । बाणोऽपि निर्गत्य धौतारकूटकोमलातपत्विषि निर्वाति वासरे, अस्ताचलकूटकिरीटे निचुलमञ्जरीभासि तेजांसि मुञ्चति वियन्मुचि मरीचिमालिनि, अतिरोमन्थमन्थरकुरङ्गकुटुम्बकाध्यास्य-

---

समवर्तिनि वैवस्वते । 'शमनः समवर्ती च' इति हलायुधः । दण्डभृति दण्डविधायिनि, दण्डस्य भर्तरि च । दण्डं दमनं, यष्टिश्च । अशङ्कः निश्शङ्कः निर्भयः । सर्वव्यसनबन्धोः सर्वव्यसनसहकारिणः । अविनयस्याजितेन्द्रियत्वस्य । मानुष्यकं मनुष्यत्वम् । मधु पुष्परसं, मद्यमिति च । अत्यनुवृत्तिः अत्यनुरोधः । चपलायन्ते चपला भवन्ति । चापलमाचरन्तीत्यर्थः । शरारवः हिंस्राः । सानुक्रोशाः सदयाः । श्वापदगणः व्याघ्रादिवनचरसत्त्वसमूहः । अनपायिन्यः अनवधानरहिताः । चित्तवृत्तिग्राहिण्यः परेषामित्यर्थः ।

आरकूटः लोहविशेषः ([illegible]) । निर्वाति शाम्यति । आतपचण्डतया वासरस्याग्निसदृशत्वं हृदि कृत्वा निर्वातीति प्रयुक्तम् । निचुळः जलकदम्बवृक्षः । रोमन्थः भक्षितवस्तूनि उद्गीर्य पुनश्चर्वणम् । कुटुम्बं पुत्रपौत्रादिकम् ।

मानम्रदिष्ठगौष्ठीनपृष्ठासु अरण्यस्थलीषु, शोकाकुलकोककामिनीकूजितकरुणासु तरङ्गिणीतटेषु, मन्दमन्दं वासविटपोपविष्टवाचाटचटकचक्रवालेषु आलवालावर्जितजलसेककुटेषु निष्कुटेषु, दिवसविहृतप्रत्यागतं प्रस्नुतस्तनं स्तनन्धये धयति धेनुवर्गम् उद्गतक्षीरक्षुधि तर्णकव्राते, क्रमेण च मन्दरधराधरधातुधुनीपूरप्लावित इव लोहितायमानमहसि मज्जति सन्ध्यासिन्धुयानपात्रे पातङ्गे मण्डले, कमण्डलुजलशुचिशयचरणेषु चैत्यप्रणतिपरेषु पाराशरिषु, पत्रपवित्रपाणौ प्रकीर्णबर्हिषि प्रोत्तेजसि

---

म्रदिष्ठं मृदुतमम्। गौष्ठीनं भूतपूर्वं गोस्थानम्। गोष्ठशब्दात् 'गोष्ठात् खञ् भूतपूर्वे' (पा॰ सू॰ ५. २. १८.) इति खञ्। 'गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्' इत्यमरश्च। कोकः चक्रवाकः। करुणासु करुणविषयभूतासु। 'अनुकम्प्यः करुणः समौ' इति वैजयन्ती। तरङ्गिणीतटीषु नदीतीरेषु। वासविटपः निवासभूतशाखा। वाचालः जल्पनशीलः। चटकः कलविङ्कः (ഊൎക്കുരുവി)। आलवालः वृक्षादीनां मूलभागेषु रचितो जलाधारः (തടം)। आवर्जितजलसेककुटेषु विक्षिप्तसेकजलयुक्तघटेषु। निष्कुटेषु गृहारामेषु। 'गृहारामस्तु निष्कुटः' इत्यमरः। दिवसविहृतप्रत्यागतं दिवसं विहृत्य प्रत्यागतमित्यर्थः। विहृतशब्दश्च परिक्रान्तार्थः। प्रस्नुतस्तनं प्रक्षरितस्तनम्। स्तनन्धये स्तनपायिनि। 'धेट् पाने' इति धातोः 'नासिकास्तनयोर्ध्माधेटोः' (पा॰ सू॰ ३. २. २९.) इति खश्। धयति पानं कुर्वति। उद्गतक्षीरक्षुधि उद्भूतक्षीरपिपासे। तर्णकव्राते वत्ससमूहे। 'तर्णकः स्मर्यते वत्सः' इति हलायुधः। धराधरः पर्वतः। धातुधुनी गैरिकरसयुक्ता सरित्। 'तटिनी ह्रादिनी धुनी' इत्यमरः। सन्ध्यासिन्धुयानपात्रे सन्ध्याख्यस्य समुद्रस्य पोते (മരക്കലം)। 'यानपात्रे शिशौ पोतः' इत्यमरः। शयः पाणिः। 'पञ्चशाखः शयः पाणिः' इत्यमरः। चैत्यं बुद्धायतनम्। पाराशरिषु बौद्धमुनिषु। पात्रेत्यादि। पात्रपवित्रपाणौ पात्राणि च पवित्राणि च पाणौ येषाम्। पात्राणि स्रुवादीनि। पवित्राणि दर्भाः। 'अस्त्री कुशं कुशो दर्भः पवित्रम्' इत्यमरः। बर्हिः दर्भः

जातवेदसि हवींषि वषट्कुर्वति यायजूकजने, निद्राविद्राणद्रोणकाककुल-कलितकुलायेषु कापेयविकलकपिकुलेषु आरामतरुषु, निर्जिगमिषति जरत्तरुकोटरकुटीरकुटुम्बिनि कौशिककुले, मुनिकरसहस्रविप्रकीर्यमाण-सन्ध्यावन्दनोदबिन्दुनिकर इव दन्तुरयति सुरपथस्थलीं स्थवीयसि तारकानिकुरम्बे, अम्बराश्रयिणि शर्वरीशबरीशिखण्डे खण्डपरशुकण्ठ-काले कवलयति बाले पाटलं ज्योतिःशेषं सान्ध्यमन्धकारावतारे, तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरकरशाखास्विव स्फुरन्तीषु दीप-लेखासु, अररिसम्पुटपटुरटनकथितावृतिषु गोपुरेषु, शयनोपजोषजुषि जरतीकथितकथे शिशयिषमाणे शिशुजने, जरन्महिषमलीमसतमसि

---

वषट्कुर्वति होमं कुर्वति । यायजूकः— 'इज्याशीलो यायजूकः' इत्यमरः । अयमन्वयः— पात्रपवित्रपाणौ यायजूकजने जातवेदसि हवींषि वषट्कुर्वतीति । विद्राणं तन्द्रीयुक्तम् । द्रोणकाकः काकविशेषः (ഞാലൻകാക്ക) । कलित-कुलायेषु सम्बद्धनीडेषु । कापेयविकलं क्रीडादिविरहितम् । 'कपेः क्रीडादिकं सर्वं कापेयमिति कथ्यते' इति हलायुधः । कोटरकुटीरं कोटरमेव कुटीरम् । कोटरम् (പൊത്ത്) । कौशिकः दिवाभीतः । शिखण्डे केशबन्धे । खण्डपरशुः ईश्वरः । दहनेत्यादि— दिनकरो हि दिवसावसाने अग्निं प्रविशति । 'आदित्यो वा अस्तमयन्नग्निमनुप्रविशति' इति ब्राह्मणम् । करशाखासु अङ्गुलीषु । 'अङ्गुल्यः करशाखाः स्युः' इत्यमरः । दीपलेखासु दीपावलीषु । अररिसम्पुटः कवाटद्वय-संश्लेषः । 'आहुस्त्वररिं कवाटं च' इति हलायुधः । पटुरटन उद्यतशब्दः । गोपुरेषु पुरद्वारेषु । 'पुरद्वारं तु गोपुरम्' इत्यमरः । शयनोपजोषजुषि निद्रासौख्यभाजि । उपजोष इति 'जुषी प्रीतिसेवनयोः' इति धातोः घञन्तस्य रूपम् ; न तु 'सुखे दिष्ट्योपजोषं शम्' (वैजयन्ती) 'दिष्ट्या शमुपजोषं च' (अमरकोशः) इति निघण्टुषु अव्ययाधिकारेषु पठ्यमानस्य, क्विबन्तेन जुषिणा, समासे उपजोषञ्जुषीति रूपप्रसङ्गात् । कविः कोऽपि जोषञ्जुषीति पठति । तदानीमव्ययस्यैव उपजोषशब्दस्य रूपम् । जरती वृद्धा ।

जनितपुण्यजनजागरे जृम्भमाणे भीषणतमे तमीमुखे, मुखरितधनुषि वर्षति शरनिकरमनवरतम् अशेषसांसारिकजनशेमुषीमुषि मकरध्वजे, सुरताकल्पारम्भशोभिनि शम्फलीभाषितभाजि भजति भूषां भुजिष्याजने, सैरन्ध्रीबध्यमानरशनाजालजल्पाकजघनासु जनीषु, वशिकविशिखाविहारिणीषु अनन्यजानुप्लवासु प्रचलितास्वभिसारिकासु, विरलीभवति वराटानां वेशन्तशायिनीनाम् मञ्जुनि मञ्जीरशिञ्जितजडे जल्पिते, निद्राद्राघीयसि द्रावयतीव विरहिहृदयानि सारसरासिते, भाविवासरारम्भबीजाङ्कुरनिकर इव विकीर्यमाणे जगति प्रदीपप्रकरे, निवासस्थानम् अगात् ।

अकरोच्च चेतसि— 'अतिदक्षिणः खलु देवो हर्षः, यदयमनेकबालचरितचापलोपनीतकौलीनकोपितोऽपि मनसा स्निह्यत्येव मयि । यद्यहमक्षिगतः स्यां, न मे दर्शनेन प्रसादं कुर्यात् । इच्छति च मां गुणवन्तम् । उपदिशन्ति हि विनयमनुरूपप्रतिपत्त्युपपादनेनापि वाचा

---

पुण्यजनः राक्षसः । 'यातुधानः पुण्यजनः' इत्यमरः । जागरः प्रबोधः । तमीमुखे रात्र्यारम्भे । 'रजनी यामिनी तमी' इत्यमरः । संसारिणः प्राणिनः । शेमुषीमुषि चित्ताक्षेपके । शम्फली गणिकानां उपदेशदायिनी जरद्वेश्या । भाषितं वाक्यम् । भुजिष्या वेश्मदासी । सैरन्ध्री शिल्पकारिणी । जनिषु वरस्त्रीषु । 'जनिर्वरस्त्रीपत्न्योश्च' इति वैजयन्ती । वशिकविशिखाविहारिणीषु जनशून्यरथ्यासञ्चारिणीषु । 'वशिकं तुच्छरिक्तकम्', 'रथ्या प्रतोली विशिखा', 'विहारस्तु परिक्रमः' इति च अमरः । अनन्यजानुप्लवासु कामैकानुचरासु । 'अनुप्लवश्चानुचरः' इत्यमरः । प्रचलितासु गन्तुमुद्यतासु । वराटानां हंसस्त्रीणाम् । 'वराटा हंसकान्ता स्याद् वराला सरलापि च' इति वैजयन्ती । वेशन्तः पल्वलम् । मञ्जुनि मनोहरे । मञ्जीरशिञ्जितजडे नूपुरशब्दवच्चित्तानुकूले इत्यर्थः । द्राघीयसि दीर्घतरे । द्रावयति विलालयति ।

अतिदक्षिणः अतिसरलः । कौलीनं जनवादम् । अक्षिगतः द्वेष्यः ।

विनापि कर्तव्यानां स्वामिनः। जिह्मं स्वदोषान्धम् अनादरभीतम् एवमतिगुणवति राजन्यस्मिन् अन्यथान्यथा चिन्तयन्तम्। सर्वथा तथा करोमि, यथा यथावस्थितं जानाति मामयं कालेन' इत्यवधार्य चापरेद्युः निष्क्रम्य कटकात् सुहृदां बान्धवानां च यथेच्छमानन्दितो मन्दिरेषु तावदतिष्ठत्, यावदस्य स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवान् अभवत्। अविशच्च पुनरपि नरपतिभवनमल्पैरेवाहोभिः। परं प्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विस्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमानीयत नरेन्द्रेण' इति।

॥ इति श्रीहर्षचरिते राजदर्शनं नाम द्वितीय उच्छ्वासः ॥

---

'जिह्मस्त्वक्षिगत' इत्यमरः। कर्तव्यानां शिक्षणीयानां पुरुषाणाम्। यथावस्थितं यथावृत्तम्। मानस्य पूजायाः। द्रविणस्य धनस्य। कोटिं सम्प्रकर्षम्।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने द्वितीय उच्छ्वासः।

# अथ तृतीय उच्छ्वासः ।

निजवर्षाहितस्नेहा बहुभक्तजनान्विताः ।
सुकाला इव जायन्ते प्रजापुण्येन भूभृतः ॥

साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥

**अथ कदाचिद् विरलितबलाहके चातकातङ्ककारिणि क्वणत्कादम्ब-कदम्बके दर्दुरद्विषि मयूरमदमुषि हंसपथिकसार्थसर्वातिथौ धौतासिनिभ-नभसि भासुरभास्वति शुचिशशिनि तरुणतरतारागणे गलच्छुनासीर-**

---

अथ कवेर्बन्धुभिः हर्षचरितवर्णनाभ्यर्थनं, हर्षान्वयकूटस्थपुरुषस्य च पुष्यभूतेः सम्भवः, तस्य च भैरवाचार्यनाम्नः[1] शैवस्य विद्याधरत्वसिद्धिसाधन-साहाय्यकं, तस्यैव च लक्ष्म्या दर्शनं, लब्धसिद्धेः भैरवाचार्यस्याकाशगमनं च इति तृतीयोच्छ्वासार्थः । तदेतत् सर्वं द्वाभ्याम् आर्याभ्यामाह —

**निजेत्यादि** । निजवर्षाहितस्नेहा निजेषु आत्मीयेषु वर्षेषु विषयभूतेषु भारतादिवर्षेषु आहितः स्नेहः अनुरागः यैः ; अन्यत्र निजेन नित्येन अनपेक्षित-कालसम्भूतेन इति यावत् । वर्षेण वृष्ट्या आहितस्नेहः भूमेरार्द्रता येषु । बहुभक्तजनान्विताः बहुभिः भक्तैः स्नेहिभिः जनैः अन्विताः ; अन्यत्र बहुभक्तैः समृद्धान्नैः जनैः अन्विताः । 'अन्नतत्परयोर्भक्तम्' इति **वैजयन्ती** ।

अथेत्यादि । बलाहकः मेघः । आतङ्कः तापः । 'रुक्तापशङ्कास्वातङ्कः' इत्य**मरः** । दर्दुरः मण्डूकः । सर्वातिथौ सर्वातिथ्यकर्तरि । शुचिशशिनि

---

१. 'भूतिनाम्नः'–क.

शरासने सीदत्सौदामनीदामनि दामोदरनिद्राद्रुहि द्रुतवैडूर्यसवर्णार्णसि घूर्णमानमिहिकालघुमेघमोघमघवति निमीलन्नीपे निष्कुसुमकुटजे निर्मुकुलकन्दले कोमलकमले मधुबिन्दुस्यन्दीन्दीवरे कल्हाराह्लादिनि शेफालिकाशीतलितनिशे निशीथयूथिकामोदिनि मोदमानकुमुदावदातदशदिशि सप्तच्छदधूलिधूसरितसमीरे स्तबकितबन्धूकबध्यमानाकाण्डसन्ध्ये नीराजितवाजिनि उन्मददन्तिनि दर्पक्षीबौक्षके क्षीणपङ्कचक्रवाळे बालपुलिनपल्लवितसिन्धुरोधसि परिणामश्यानश्यामाके जनितप्रियङ्गुमञ्जरीरजसि कठोरितत्रपुसत्वचि कुसुमस्मेरशरे शरत्समयारम्भे विजृम्भमाणे राज्ञः समीपाद् बाणो बन्धून् द्रष्टुं पुनरपि तमेव ब्राह्मणाधिवासमगमत् ।

---

हिमरहितत्वान्निर्मलचन्द्रे । सीदत्सौदामनीदामनि नश्यद्विद्युन्माले । दामोदरनिद्राद्रुहि, शरत्काले दामोदरः प्रबुद्ध्यत इति वादः । अत्रायं स्मृतिः— 'क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्तिक्यां तयोः सम्पूजयेद्धरिम् ॥' इति । द्रुतं विलीनम् । अर्णसि जले । मिहिकालघु हिमवत् तुच्छम् । 'प्रालेयं मिहिका च' इत्यमरः । मोघः निश्शक्तिः । निमीलन्नीपे नश्यत्कदम्बपुष्पे । निमीलनं हि मरणम् । कन्दलः[1] शिलिन्ध्रः । कल्हारः[2] सौगन्धिकम् । शेफालिका[3] लताविशेषः । निशीथयूथिका निशीथेषु विकस्वरा यूथिका[4] । आमोदिनि गन्धवति । मोदमानः सुगन्धीभवन् । अवदातं धवलम् । सप्तच्छदः[5] शारदी । समीरे वायौ । बन्धूकः[6] बन्धुजीवः । नीराजितः कृतशान्तिकः । दर्पक्षीबौक्षके मदाधिकोक्षसमूहे । उक्षन्शब्दाद् गोत्रादिना समूहार्थे वुञ् प्रत्ययः । 'उक्ष्णां संहतिरौक्षकम्' इत्यमरः । चक्रवाले दिङ्मण्डले । श्यामाको[7] धान्यविशेषः । प्रियङ्गुः[8] फलिनी ; कङ्गुरिति केचित् । मञ्जरी[9] फलिनीपक्षे पुष्पमञ्जरी । कठोरितं कर्कशितम् । त्रपुसं[10] हस्तिपर्णी शरः काशः ।

---

१. कन्दलः=கோடல், २. कल्हारः=செங்கழுநீர், ३. शेफालिका=வெவ்வாலி, (அடம்பு) ४. यूथिका=முல்லை, ५. सप्तच्छदः=ஏழிலம்பாலை, ६. बन्धूक=உச்சிச்சிலந்தி, ७. श्यामाकः=சாமை, ८. प्रियङ्गुः=தினை, ९. मञ्जरी सस्यमञ्जरी, १०. त्रपुसं=மிதுக்கு (மிதுக்கை)—क.

समुपलब्धभूपालसम्मानातिशयपरितुष्टास्तु अस्य ज्ञातयः श्लाघमाना अभिययुः। क्रमेण च कांश्चिदभिवादयमानः, कैश्चिदभिवाद्यमानः, कांश्चिन्मूर्ध्नि समाजिघ्रन्, कैश्चिच्छिरसि चुम्ब्यमानः, कांश्चिदालिङ्गन्, कैश्चिदालिङ्ग्यमानः, अन्यैराशिषानुगृह्यमाणोऽपराननुगृह्णन्, बहुबन्धुमध्यवर्ती परं मुमुदे। संभ्रान्तपरिजनोपनीतमासनम्, आसनेषु आसीनेषु गुरुषु, भेजे। भजमानश्च अर्घ्यादिसत्कारमतितरां ननन्द। प्रीयमाणेन च मनसा सर्वांश्च तान् पर्यपृच्छत्— 'कच्चिदेतावतो दिवसान् सुखिनो यूयम्। अप्रत्यूहा वा सम्यक्करणपरितोषितद्विजातिचक्रा क्रातवी क्रियते क्रिया। यथावदविकलमन्त्रविकल्पभाञ्जि भुञ्जते वा हवींषि हुतभुजः। यथाकालमधीयते वा बटवः। प्रतिदिनमविच्छिन्नो वा वेदाभ्यासः। कच्चित् स एव चिरन्तनो यज्ञविद्याकर्मणि अभियोगः। तान्येव वा व्याकरणे परस्परस्पर्धानुबन्धाबन्ध्यदिवसदर्शितादराणि व्याख्यानमण्डलानि। सैव वा पुरातनी परित्यक्तान्यकर्तव्या प्रमाणगोष्ठी। स एव वा मन्दीकृतेतरशास्त्रार्थरसो मीमांसायाम् अतिरसः। कच्चित् त एवाभिनवभाषितसुधावर्षिणः काव्यालापाः' इति।

अथ ते तमूचुः— 'तात! सन्तोषजुषां सततसन्निहितविद्याविनोदानां वैतानवह्निमात्रसहायानां कियन्मात्रया नः कृत्यं सुखितया।

(एतावतो दिवसान्) अत्यन्तसंयोगे द्वितीया। अप्रत्यूहा निर्विघ्ना। क्रातवी क्रतुसम्बन्धिनी। विकल्पः ऊहः। प्रमाणगोष्ठी न्यायशास्त्रविषयगोष्ठी।

तातेत्यादि। सन्तोषजुषां स्वभावत एवाल्पलाभसन्तुष्टानाम्[1]। वैतानवह्निमात्रसहायानां, मात्रशब्दोऽवधारणे, वैतानवह्न्येकसहायानाम्। कियन्मात्रया मात्राशब्दः परिमाणे, कियत्परिमाणया। 'मात्रा परिच्छदे। अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। एतदुक्तं भवति— विदुषाम् अल्पसन्तुष्टता सत्सहायता सद्विद्याविनोदिता चेति इयत्येव परमसुखिता, एतया

१. 'तुष्टानां'-क.

सकलभुवनभुजि भुजङ्गराजदेहदीर्घे रक्षति क्षितिं क्षितिभुजो भुजे सर्वदा सुखिन एव वयम्; विशेषेण त्वयि विमुक्तकौसीद्ये परमेश्वर-पार्श्ववर्तिनि वेत्रासनमधितिष्ठसि। सर्व एव यथाशक्ति यथाविभवं यथाकालं च सम्पद्यन्ते विप्रजनोचिताः क्रियाकलापाः' इति। एवमादिभिः आलापैः स्कन्धावारवार्ताभिश्च शैशवातिक्रान्तक्रीडास्मरणैश्च पूर्वजकथाभिश्च तैस्सह सुचिरमतिष्ठत्। उत्थाय च मध्यन्दिने यथाक्रियमाणा स्थितीः अकरोत्। भुक्तवन्तं च तं सर्वे ज्ञातयः पर्यवारयन्।

अत्रान्तरे दुकूलपट्टप्रभवे शिखण्ड्यपाङ्गपाण्डुनी पौण्ड्रे वाससी वसानः, स्नानावसानसमयवन्दितया तीर्थमृदा गोरोचनया च आरचिततिलकः, तैलामलकमसृणितमौलिः, अनुच्चचूडाचुम्बिना निबिडेन

---

समग्राणां नेतःपरं कियन्मात्रया सुखितयापेक्षास्ति। एतावत्येव खल्वतिमहती सुखितेति। कौसीद्ये आलस्ये। 'निद्रा कौसीद्यमालस्यम्' इति वैजयन्ती। वेत्रासनमधितिष्ठतीति। 'तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः' इति राजोपास्तिसमये ब्राह्मणव्यतिरिक्तानाम् आसनोपवेशननिषेधद्वारा ब्राह्मणानामासनोपवेशनस्योक्तत्वादिहापि वेत्रासनाधिष्ठानमुक्तम्। वेत्रासनशब्देन वेत्रमयमासनमुच्यते इति केचित्। आसन्दीत्यपरे। पूर्वजः पूर्वपुरुषः। स्थितीः कर्तव्यानि।

दुकूलपट्टप्रभवे, पट्टशब्देन तन्तुरुच्यते, दुकूलतन्तूपादाने इत्यर्थः। शिखण्ड्यपाङ्गपाण्डुनी, शिखण्डिनां खल्वपाङ्गः शुक्लः, अत एव हि तेषां शुक्लापाङ्ग इति संज्ञा। अत्र वैजयन्ती च—'मयूरो बर्हिणो बर्ही शुक्लापाङ्गः शिखावलः' इति। पौण्ड्रे पुण्ड्रदेशसम्भूते। स्नानावसानसमयवन्दितया तीर्थमृदेति। सर्वोऽपि हि गङ्गातीर्थसम्बन्धिनीं मृदं स्नानानन्तरं हस्ते जलेन परिमृज्य तां तत्तदुपादानतीर्थदेवताबुद्ध्या नमस्कृत्य ललाटे तया पुण्ड्रादिकं करोतीत्युपदेशः तैलामलकं तैलपरिमृष्टमामलकम्। मसृणितमौलिः स्निग्धकेशः। चूडा शिखा।

---

१. 'त्रात्मसुखितया'-ख. २. 'तदुप', ३. 'शस्य निषेध'-क.

कुसुमापीडेन समुद्भासमानः, सकृदुपयुक्तताम्बूलविरलाधररागकान्तिः, एकशलाकाञ्जनजनितलोचनरुचिः अचिरभुक्तः, विनीतमार्यवेषं दधानः, पुस्तकवाचकः सुदृष्टिराजगाम। नातिदूरवर्तिन्यां च आसन्द्यां निषसाद। मुहूर्तमिव स्थित्वा च तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैः मृदुमृणालसूत्रैरिव वेष्टितं पुस्तकं पुरोनिहितशरशलाकायन्त्रके निधाय, पृष्ठतः सनीडसन्निविष्टाभ्यां मधुकरपारावताभ्यां वांशिकाभ्यां दत्ते ताने प्राभातिकप्रपाठकच्छेदचिह्नीकृतमन्तरपत्रमुत्क्षिप्य, गृहीत्वा कतिपयपत्रलघ्वीं कवलिकां प्रक्षालयन्निव मषीमलिनानि अक्षराणि दन्तकान्तिभिः, अर्चयन्निव च सितकुसुममुक्तिभिः ग्रन्थम्, मुखसन्निहितसरस्वतीनूपुरस्खलनरवैरिव पदैः गमकैः मधुरैः आक्षिपन् मनांसि श्रोतॄणां गीत्या पवनप्रोक्तं पुराणं पपाठ। तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति सुदृष्टौ नातिदूरवर्ती बन्दी सूचिबाणः तारमधुरेण गीतध्वनिमनुवर्तमानः स्वरेण इदम् आर्यायुगलमगायत् —

"तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि ।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम् ॥

---

आपीडेन शेखरेण। उपयुक्तं चर्वितम्। एकशलाकाञ्जनजनितलोचनरुचिः शलाका अञ्जनादिलेखनसाधनं वस्तु। एकेन सकृद्योजितेन शलाकाञ्जनेन शलाकया कृतेन अञ्जनेन जनिता लोचनरुचिः यस्य। आसन्द्याम् आसने। सूत्रं तन्तुकृतबन्धनरज्जुः (ചരട്)। शरशलाकायन्त्रके शरमयीभिः नलमयीभिः शलाकाभिः काण्डैः कृते यन्त्रके। यन्त्रकम्[1] (പുസ്തകക്കൂട്). सनीडं समीपम्। प्रपाठकः अवसानम्। प्रपाठकः आह्निकमिति अवसानपर्यायः। पत्रं पत्रिकाम् (ഓല)। कवलिकां पत्रनिधानकवलिकाम् (ഓലക്കെട്ട് കവളിക)। कवलिकेति पत्रबन्धश्च उच्यत इति केचित्। गमकैः अर्थबोधकैः।

तदपीति। तदपि तच्छब्देन हर्षचरितं विवक्षितम्। मुनिगीतं मुनिभिः कीर्तितम्। अन्यत्र मुनिना व्यासेन प्रोक्तम्। अतिमहत् च। पावनं शुद्धिसाधनम्,

---

1. यन्त्रकम्=அட்டாலைக்கால்—क.

**वंशानुगमविधायि स्फुटकरणं भरतमार्गभजनगुरु ।**
**श्रीकण्ठाविर्यातं गीतमिदं हर्षराज्यमिव ॥”**

**तच्छ्रुत्वा बाणस्य चत्वारः पितामहमुखपद्मा इव वेदाभ्यास-पवित्रितमूर्तयः, उपाया इव सामप्रयोगललितमुखाः, गणपतिः अधिपतिः तारापतिः श्यामल इति पितृव्यपुत्रा भ्रातरः, प्रसन्नवृत्तयः, गृहीतवाक्याः, कृतगुरुपदन्यासाः, न्यायवादिनः, सुकृतसङ्ग्रहाभ्यासगुरवः, लब्धसाधु-शब्दाः लोक इव व्याकरणेऽपि, सकलपुराणराजर्षिचरिताभिज्ञाः, महा-भारतभावितात्मानः, विदितनिखिलेतिहासाः, महाविद्वांसः, महाकवयः,**

---

पवनप्रोक्तं च’ हर्षचरितात् हर्षस्य वृत्तात् ।

वंशानुगमविधायि वेणोरनुगमकारि ; अन्वयानुगमनविधायि च । अन्वयक्रमागतमित्यर्थः । *[(वं ? अं)शानुगमेति वा पाठः । (वं ? अं)शः प्रधानस्वरः । तथा च माघकाव्ये— ‘अनल्पत्वात् प्रधानत्वाद्वंशस्येवेतरे स्वराः । विजिगीषोर्नृपतयः प्रयान्ति परिवारताम् ॥’ इति । अन्यत्र अंशः राज्यभागः, तत्सहितमित्यर्थः । स्फुटकरणं, गीतौ क्रियमाणः क्रियाविशेषः करणम् । अन्यत्र क्षेत्रम्, अप्रतिहतीभूतक्षेत्रम् इत्यर्थः ।] ‘करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ’ इत्यमरः । भरतः गीतिशास्त्रप्रणेता मुनिः ; आदिभरतश्च । श्रीकण्ठाविर्यातम् ईश्वरात् निर्गतम् । ईश्वरसृष्टं गीतमिति प्रसिद्धिः । अन्यत्र श्रीकण्ठनाम्नो जनपदात् प्रवृत्तम् । ‘श्रीकण्ठो नाम जनपदः’ इति कविरुत्तरत्र वक्ष्यति ।

वेदेत्याद्युभयत्र समानम् । सामप्रयोगललितमुखाः सामवेदोक्तौ अनायस्त-वदनाः[1] । अन्यत्र सामाख्यस्योपायस्य प्रयोगेण यथास्थानविनियोगेन मृद्वारम्भाः । पितृव्यः, ‘पितृभ्राता पितृव्यः स्याद्’ इत्यमरः । प्रसन्नवृत्तयः लोकपक्षे निर्मलचरिताः । व्याकरणपक्षे शुद्धवृत्तिग्रन्थाः, सम्यक् ज्ञातवृत्तिसंज्ञकग्रन्था इत्यर्थः । गृहीतवाक्याः सर्वैरपि स्वीकृतवचनाः ; अन्यत्र ज्ञातकात्यायनवाक्याः । कृतगुरुपदन्यासाः कृतः गुरुषु पदन्यासः सम्बन्धः यैः ; गुरुकुलवासिन इत्यर्थः ।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.  १. ‘सामवेदोक्तयवदातवदनाः’—क.

महापुरुषवृत्तान्तकुतूहलिनः, सुभाषितश्रवणरसरसायनावितृष्णाः, वयसि वचसि यशसि तपसि महसि सदसि वपुषि यजुषि च प्रथमाः, पूर्वमेव कृतसञ्ज्ञानाः, विचक्षवः विलक्षस्मितसुधाधवलितकपोलोदराः, परस्परस्य मुखानि व्यलोकयन्।

अथ तेषां कनीयान् कमलदलदीर्घलोचनः श्यामलो बाणस्य प्रेयान् प्राणानामप्यतिशयिता दत्तसंज्ञः तैः सप्रणयं दशनज्योत्स्नास्नपितककुभा मुखेन्दुना बभाषे—'तात! बाण! द्विजानां राजा गुरुदारग्रहणम् अकार्षीत्।

---

अन्यत्र कृतः शिक्षितः गुरुपदः दुर्निर्वहतया गुरुभिः पदैः युक्तः न्यासः वृत्तिः विवरणग्रन्थः यैः। अथवा कृतैः कृतप्रक्रियैः गुरुपदैः युक्तो न्यासग्रन्थो येषाम्। न्यायवादिनः धर्मोपेतं वक्तारः। अन्यत्र न्यायैः अन्तरङ्गबहिरङ्गादिभिः। सुकृत-सङ्ग्रहाभ्यासगुरवः सुकृतस्य पुण्यस्य सङ्ग्रहाभ्यासेन स्वीकरणस्य पुनःपुनः करणेन गुरवः गौरवयुक्ताः। अन्यत्र सुकृतः शोभनं शिक्षितः। सङ्ग्रहः ग्रन्थविशेषः, अभ्यासः अभ्याससंज्ञा, गुरुः गुरुसंज्ञा च यैः। लब्धसाधुशब्दाः लब्धः प्राप्तः साधुरिति वादो यैः। अन्यत्र साधुशब्दः अनपभ्रंशः। लोक इव व्याकरणेऽपि— लोके यथा प्रसन्नवृत्तित्वादिगुणयुक्ताः तथा व्याकरणविषयेऽपि प्रसन्नवृत्तित्वादिगुणयुक्ता इत्यर्थः। भावितात्मानः रसिकबुद्धयः। अवितृष्णाः साभिनिवेशाः। प्रथमा आद्याः, प्रधानं वा। 'आद्ये प्रधानं प्रथमं त्रिषु' इत्यमरः। सञ्ज्ञानं सङ्केतः, सम्भाषणं वा।

संज्ञा सूचनम्। तातेत्यादि। अत्र द्विजेत्यादिषु वाक्येषु, गम्यमानेन मुख्येन चोभयेनापि पक्षेणोभयथा राज्ञां निन्दनं क्रियत इत्यनुसन्धेयम्। *[द्विजानां राजा चन्द्रः गुरुदारग्रहणं कृतवान्। इदमत्र विवक्षितम्— द्विजराजो ब्राह्मणानामाधिपत्ये वर्तमानः तैस्तैः सह चरन् ब्राह्मणैः मनसाप्यचिन्तितं गुरूणां दारग्रहणं कृतवानित्ययं ध्वन्यमानः पक्षः। मुख्यार्थपक्षस्तु— द्विजानां राजा चन्द्रो गुरुदारहरणं कृतवान्। चन्द्रो बृहस्पतिभार्याया अपहरणं कृतवान्।] एषा कथा अस्मिन्नेव काव्येऽष्टमोच्छ्वासे कविनैव प्रदर्शयिष्यते। राज्ञां निन्दनप्रकरणे चन्द्रस्य निन्दनं राजशब्दवाच्यत्वात् कृतवानित्यनुसन्धेयम्

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

पुरूरवा ब्राह्मणद्रविणतृष्णया दयितेनायुषा व्ययुज्यत। नहुषः परकळत्राभिलाषी महाभुजङ्ग एवाभवत्। ययातिः आहित-ब्राह्मणीपाणिग्रहणः पपात। सुद्युम्नः स्त्रीमय एवाभवत्। सोमकस्य प्रख्याता जगति जन्तुवधनिर्घृणता। मान्धाता मार्गणव्यसनेन सपुत्रपौत्रः रसातलमगात्। पुरुकुत्सः कुत्सितं कर्म तपस्यन्नपि

---

पुरूरवा इत्यादि— पुरूरवा नाम राजा ब्राह्मणद्रविणतृष्णया ब्रह्मस्वाभिनिवेशेन दयितेन आयुषा जीवितकालेन व्ययुज्यत। ब्रह्मस्वमपहृत्य नष्टवानित्यर्थः। मुख्यार्थः पुरूरवा यथाप्राप्तकरादधिकग्राही ब्राह्मणानां शापेन नश्यन् आयुषा आयुर्नाम्ना स्वपुत्रेण व्ययुज्यत। नहुष इत्यादि — नहुषः परकळत्राभिलाषी नित्यं परदारेषु बद्धसङ्गः महाभुजङ्गो महाविट आसीत्। मुख्यार्थः— नहुषः परकळत्राभिलाषी शचीपरिग्रहणेच्छुः मुनिभिरात्मानं वाहयन् अगस्त्यमहामुनिशापात् महाभुजङ्गः महासर्प आसीत्। ययातिरित्यादि— ययातिः आहितब्राह्मणीपाणिग्रहणः कृतब्राह्मणीविवाहः। पपात पातकी बभूव। क्षत्रियस्य ब्राह्मणीपरिग्रहणम् अयुक्तमिति भावः। क्षत्रियायुक्तत्वात्। मुख्यार्थः— ययातिः आहितब्राह्मणी-पाणिग्रहणः कृतशुक्रकन्यापरिणयो बभूव। किं च स्वर्गे निवसन् स्वपुण्याख्यापन-पापात् पतितवांश्च। सुद्युम्न इत्यादि— स्त्रीमयः स्त्रीति वम्रिकाख्यः कीट उच्यते (കരയാൻ)। 'वम्रिकायोषितोः स्त्रियौ' इति वैजयन्ती। सुद्युम्नो वम्रिका-रूपोऽभवदित्यर्थः। मुख्यार्थः— सुद्युम्नो देवारण्ये मृगयार्थं गतो देवीशापेन इळेत्यभिधाना स्त्री बभूव। सोमकस्येत्यादि— सोमकस्य जन्तुवधनिर्घृणता प्राणिवधे निर्दयता प्रख्याता। मुख्यार्थः— सोमको ब्राह्मणः बहुपुत्राभिकाङ्क्षी पुत्रीयामिष्टिं यजन् जन्तुं नाम स्वसुतमालब्धवान्। अतस्तस्य तद्वधे निर्घृणता प्रख्याता। मान्धातेत्यादि—मार्गणव्यसनेन याच्ञाभिनिवेशेन याचक-निर्बन्धेनेति वा। मुख्यार्थः— मान्धाता रसातलवासिनां जिगीषया मार्गणव्यसनेन शरक्षेपणेन सपुत्रपौत्रः पातालं गतवान्। अत्र तु पातालं गच्छन् भयातिशयात् पुत्रपौत्रैः सहैव गतवानिति निन्दा। पुरुकुत्स इत्यादि। पुरुकुत्सः तपस्यन्नपि

---

१. 'जन्तुनामानं स्व'-क.

**मेखलकन्यकायामकरोत् । कुवलयाश्वः भुजङ्गलोकपरिग्रहाद् अश्वतर-कन्यकामपि न परिजहौ । पृथुः प्रथमपुरुषः परिभूतवान् पृथिवीम् । नृगस्य कृकलासभावेऽपि वर्णसङ्करः समदृश्यत । सौदासेन नरक्षिता पर्याकुलीकृता क्षितिः । नलम् अवश्याक्षहृदयं कलिः अभिभूतवान् ।**

---

मेखलकन्यकायां कुत्सितं कर्म कन्यादूषणपरं निकृष्टं कर्म कृतवान् । मुख्यार्थः—पुरुकुत्सो मेखलकन्यकायां रेवाभिधानायां नद्यां तपस्यन्नपि स्वरूपसौन्दर्यातिशयेन सकामायां स्त्रीरूपधारिण्यागतायां तस्यां कुत्सितं कर्म मैथुनं कृतवान् । कुवलयाश्व इत्यादि । कुवलयाश्वो भुजङ्गलोकपरिग्रहात् पाताललोकस्वीकारेण अश्वतरकन्यकामपि वेसरीमपि न परिजहौ न त्यक्तवान् । धौर्त्यातिशयात् तामपि परिगृहीतवान् इत्यर्थः । अश्वतरः (കോവർകഴുത) । मुख्यार्थः—कुवलयाश्वो भुजङ्गलोकपरिग्रहात् पाताललोकस्वीकारेण पातालगमनादित्यर्थः । तस्मादश्वतरकन्यां अश्वतरनाम्नो नागराजस्य सुतां मदालसां नाम न परिजहौ परिगृहीतवान् । अत्र तु अतिकामितया पातालं गत्वा काञ्चित् स्त्रियं परिगृहीतवानिति निन्दा । पृथुरित्यादि । पृथुः प्रथमपुरुषः, उत्तमपुरुषोऽपि पृथिवीं परिभूतवान् । उत्तमानां रक्षणीयायाः पृथिव्याः परिभवो न युक्त इति भावः । मुख्यार्थः— पृथुः प्रथमपुरुषः प्रस्तसमस्तसस्यां पृथिवीं चापपाणिः समस्तलोकान् परितोऽनुबध्नन् परिभूतवान् । नृगस्येत्यादि । कृकलासः सरटः । नृगस्य न केवलं राजत्वे, कृकलासत्वेऽपि वर्णसङ्करः ब्राह्मणादिवर्णसाङ्कर्यं समदृश्यत । मुख्यार्थः— नृगस्य, पूर्वं कस्मैचिद् द्विजाय दत्तां गां अज्ञाना-दन्यस्मै दत्तवतः तेनापहृतपशुना कृकलासो भवेति शप्तस्य कृकलासत्वेऽपि शौक्ल्यादिवर्णसाङ्कर्यं समदृश्यत । सौदासेनेत्यादि । कल्माषपादेन न रक्षिता क्षितिः न रक्षिता भूमिः, किन्तु पर्याकुलीकृता । सौदासः स्वधर्मत्वेन विहितं पृथिवीपालनमकृत्वा तामेव पर्याकुलयाञ्चकार इत्यर्थः । मुख्यार्थः— सौदासेन नरक्षिता वसिष्ठमुनिपुत्रेण शक्तिना पुरुषभक्षको भवेति शप्ततया भक्षणार्थं सर्वान् नरान् हिंसता क्षितिराकुलीकृता । नरक्षिदिति 'क्षि हिंसायाम्' इति धातोः नरान् क्षिणोतीत्यर्थे क्विपि रूपम् । नलमित्यादि । अवश्याक्षहृदयम् अवश्येन्द्रियचित्तं नलं कलिः कलहोऽभिभूतवान् प्राप्तवान् । 'भू प्राप्तौ' इति

**संवरणोऽपि मित्रदुहितरि विक्लवताम् अगात् । दशरथः अभीष्ट-रामोन्मादेन मृत्युमुपजगाम । कार्तवीर्योऽपि गोब्राह्मणातिपीडनेन निधन-मयासीत् । मरुत्तः इष्टबहुसुवर्णको देवगुरुद्विजबहुमतो न बभूव । शन्तनुः अतिव्यसनादेकाकी वियुक्तो महावाहिन्या विपिने विललाप । पाण्डुः वनमध्यगतः मत्स्य इव मदनरसाविष्टः प्राणान् मुमोच ।**

---

धातुः । मुख्यार्थः— अवश्याक्षहृदयं कलिवञ्चनाया अविधेयद्यूतशास्त्रज्ञानं नलं कलिः कलियुगम् अभिभूतवान् परिभूतवान् । संवरण इत्यादि । संवरणः मित्रदुहितरि सुहृत्तनयायां विक्लबतां कामपरवशतामगात् । मुख्यार्थः— संवरणो मित्रदुहितरि तपतीनामधेयायां आदित्यपुत्र्यां उत्पन्नकामोऽभूत् । दशरथ इत्यादि । दशरथोऽभीष्टरामोन्मादेन दयितस्त्रीनिमित्तेन कामपारवश्येन मृत्यु-मुपजगाम । कार्तवीर्य इत्यादि । कार्तवीर्यः सहस्रबाहुर्जुनः गोब्राह्मणातिपीडनेन गवां ब्राह्मणानां च अतिपीडाकरणेन निधनं नाशमयासीत् । मुख्यार्थः— कार्तवीर्यो जमदग्निनामानं ब्राह्मणं हत्वा तस्य सुरभिमपि हठाद् गृहीतवान् । तत एव कुपितेन तत्सुतेन परशुरामेण हतो निधनं प्राप्तवान् । मरुत्त इत्यादि । मरुत्तः इष्टबहुसुवर्णको लोभातिशयेन वाञ्छितबहुकनको देवानां द्विजानां गुरूणां च न बहुमतो बभूव । मुख्यार्थः— मरुत्त इष्टबहुसुवर्णकः कृतबहुसुवर्णाख्यक्रतुः बभूव । किञ्च बृहस्पतिना सह कृतविरोधेन बृहस्पत्यनुजेन संवर्तेन याजितत्वाद् देवगुरुद्विजस्य देवानां गुरुभूतस्य द्विजस्य बृहस्पतेः बहुमतो न बभूव । 'बहूनि तु सुवर्णानि यत्रोपकरणत्वत । भवन्ति स क्रतुः सद्भिः स्मृतो बहुसुवर्णकः ॥' 'अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः' इति **श्रीरामायणे** । शन्तनुरित्यादि । शन्तनुः विपिने महावाहिन्या महासेनया वियुक्त एकाकी भीरुतया अतिव्यसनाद् विललाप । मुख्यार्थः— शन्तनुः विपिने महावाहिन्या गङ्गया वियुक्तो विललाप । पाण्डुरित्यादि । पाण्डुः वनमध्यगतः अरण्यस्थितः मदन-रसाविष्टः कामरसाविष्टः प्राणान् मुमोच । मुख्यार्थः— पाण्डुः वनमध्ये विद्यमानः उत्पन्नकामो माद्र्या सह विहरन् किन्दमाख्यमुनिशापाद् मृत इत्यर्थः । यथा वनमध्यगतो जलमध्यगतो मदनरसाविष्टो मदनाख्यवृक्षरसाविष्टो मत्स्यः प्राणान्

**युधिष्ठिरो गुरुभयविषण्णहृदयः समरशिरसि सत्यम् उत्सृष्टवान् । इत्थं नास्ति राजत्वम् अपगतकलङ्कम् ऋते देवादमुतः सप्तद्वीपभुजो हर्षात् । अत्र बहून्याश्चर्याणि श्रूयन्ते । तथा हि -- अत्र बलजिता निश्चलीकृताः चलन्तः कृत्तपक्षाः क्षितिभृतः । अत्र प्रजापतिनाशेषभोगिमण्डलस्योपरि क्षमा कृता । अत्र पुरुषोत्तमेन सिन्धुनाथं प्रमथ्य लक्ष्मीरात्मसात्कृता ।**

---

विमुञ्चति तथेति । मदनरसो मत्स्यानां विषमिति भावः । मदनः मातुलः (மருக்காரை) । युधिष्ठिरेत्यादि । युधिष्ठिरः गुरुभयविषण्णहृदयः समरशिरसि सत्यम् उत्सृष्टवान् । मुख्यार्थः--युधिष्ठिरः गुरुभयविषण्णहृदयः गुरोः द्रोणाचार्यात् स्वविनाशशङ्काजनितेन भयेन विषण्णहृदयो 'मयाश्वत्थामा हत इति श्रुतेः शस्त्रमुत्स्रष्टव्यमेवे'ति कृतप्रतिज्ञस्य तस्य शस्त्रत्यागार्थम् 'अश्वत्थामा हत' इत्येवं रूपम् असत्यमुक्तवान् । अत्रेत्यादि । बलजिता निश्चलीकृताः चलन्तः कृत्तपक्षाः क्षितिभृत इति यत् तदत्र एतस्मिन् वाक्ये योऽर्थो गम्यते स एतद्विषय एव नान्यत्रेत्यर्थः । अयमेव उत्तरेषामपि वाक्यानां योजनाप्रकारः । बलजिता बवयोरभेदः ; प्रतिबलजिता अनेन, चलन्तः सेनयोच्चलन्तः क्षितिभृतः राजानः कृत्तपक्षाः हतसहायाः निश्चलीकृताः निष्पन्दीकृताः । अन्यत्र बलजिता बलासुरजिता इन्द्रेण चलन्तः पक्षैः पतन्तः क्षितिभृतः पर्वताः कृत्तपक्षाः छिन्नपक्षाः निश्चलीकृताः इति । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति **वैजयन्ती** । अत्र प्रजापतिनेत्यादि । प्रजापतिना प्रजानां प्रभुणा अनेन, अशेषभोगिमण्डलस्य समस्तराजसमूहस्य उपरि क्षमा क्षान्तिः कृता । अन्यत्र प्रजापतिना ब्रह्मणा शेषभोगिमण्डलस्य शेषाख्यसर्पफणामण्डलस्य उपरिभागे क्षमा कृता भूमिर्निहितेति । अत्र पुरुषोत्तमेनेत्यादि । पुरुषोत्तमेन अनेन, सिन्धुनाथं सिन्धुदेशाधिपतिं प्रमथ्य हत्वा लक्ष्मीः सम्पद् आत्मसात्कृतेति । पुरुषोत्तम इति सप्तमीतत्पुरुषः । 'न निर्धारणे' (पा० सू० २. २. १०.) इति षष्ठीसमासनिषेधात् । कर्मधारये च 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' (पा० सू० २. १. ६१.) इत्युत्तमपुरुष इति स्यात् । अन्यत्र पुरुषोत्तमेन विष्णुना सिन्धुनाथं समुद्रं प्रमथ्य विलोड्य श्रीरात्मसात्कृता इति ।

---

१. मदनः=மருக்காரை--क.

अत्र बलिना मोचितभूभृद्वेष्टनो मुक्तो महानागः। अत्र देवेनाभिषिक्तः कुमारः। अत्र स्वामिनैकप्रहारपातिताचलारातिना ख्यापिता शक्तिः। अत्र नरसिंहेन स्वहस्तविशसितारातिना प्रकटीकृतो विक्रमः। अत्र परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः। अत्र लोकनाथेन

---

अत्र बलिनेत्यादि। बलिना बलवतानेन, मोचितभूभृद्वेष्टनः मोचितं भूभृद्वेष्टनं राज्ञां वेष्टनं येन सः। महानागः दर्पशालः राज्ञः प्रति मुक्तः क्षिप्तः। अन्यत्र बलिना। वायुना मोचितभूभृद्वेष्टनः त्याजितत्रिकूटपर्वतवेष्टनः। महानागः वासुकिः। मुक्तः निरस्तः इति। बली बलवान् महाबलः इति वायोः पर्यायाः। पुरा वायु-वासुक्योः परस्परं बलवत्तामुद्दिश्य अतिमहती स्पर्धा बभूव। ततो वासुकिः वायुमुवाच—'अस्य त्रिकूटपर्वतस्य शिखरे कृतवेष्टनं मां त्वं यदि मोचयेः, ततः त्वं मत्तोऽपि बलवत्तरो भविष्यति' इति। ततः वायुः कृतवेष्टनं तं बलेन मोचयित्वा क्षिप्तवानिति कथा। अत्र देवेनेत्यादि। देवेन स्वामिभूतेन अनेन। कुमारः प्राग्ज्योतिषेश्वरः निजपदेऽभिषिक्तः। कुमार इति प्राग्ज्योतिषेश्वरस्य नाम। तथायमेव कविरुत्तरत्र वक्ष्यति— 'प्राग्ज्योतिषेश्वरेण कुमारेण' इति। अन्यत्र देवेन इन्द्रेण कुमारः स्कन्दः सैनापत्येऽभिषिक्त इति। अत्र स्वामिना प्रभुणानेन। एकप्रहारपातितेति। प्रह्रियतेऽस्मिन्निति प्रहारो युद्धम्; एकयुद्ध-निपातिताचलाख्यनृपः। शक्तिः पराक्रमः, ख्यापिता। अन्यत्र स्वामिना गुहेन एकप्रहारपातिताचला एकप्रहृतिपातितक्रौञ्चपर्वता शक्तिः आयुधविशेषः ख्यापितेति। अत्र नरसिंहेनेत्यादि। नरसिंहेन नरश्रेष्ठेन। स्वहस्तविशसिता-रातिना स्वहस्तहतशत्रुणा। विक्रमः पराक्रमः प्रकटीकृतः। अन्यत्र नरसिंहेन नरसिंहरूपिणा, स्वहस्तविशसितारातिना हिंसितहिरण्याख्यशत्रुणा, विक्रमः प्रकटीकृत इति। अत्र परमेश्वरेणेत्यादि। परमेश्वरेण उत्तमस्वामिना। दुर्गाया गन्तुमशक्यायाः। तुषारशैलभुवः हिमवत्प्रदेशभूम्याः। करः राजदेयः भागः, गृहीतः। अन्यत्र परमेश्वरेण महादेवेन, तुषारशैलभुवः हिमवदुत्पन्नायाः। दुर्गाया उमाया इत्यर्थः। करः हस्तः गृहीत इति। अत्र लोकनाथेनेत्यादि।

दिशां मुखेषु परिकल्पिता लोकपालाः। सकलभुवनकोशश्च अग्रजन्मनां विभक्त इत्येवमादयः प्रथमकृतयुगस्येव दृश्यन्ते महान्तः समारम्भाः। यतोऽस्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेण सर्वमादितः प्रभृति चरितमिच्छामि श्रोतुम्। सुमहान् कालो नः शुश्रूषमाणानाम्। अयस्कान्तमणय इव लोहानि नीरसानि निष्ठुराणि क्षुल्लकानामपि आकर्षन्ति मनांसि महतां गुणाः। किमुत स्वभावसरसमृदूनीतरेषाम्। कस्य न द्वितीयमहाभारत इव भवेदस्य चरिते कुतूहलम्। आचष्टां भवान्। भवतु भार्गवोऽयं वंशः शुचिनानेन पुण्यराजर्षिचरितश्रवणेन सुतरां शुचिरित्येवमभिधाय तूष्णीमभूत्।

बाणस्तु विहस्याब्रवीत्— 'आर्य! न युक्तरूपमभिहितम्। अघटमानमनोरथमिव भवतां कुतूहलमवकल्पयामि। शक्याशक्यपरिसङ्ख्यानशून्याः प्रायेण स्वार्थतृषः। परगुणानुरागिणी प्रियजनकथाश्रवणरसमोहिता च मन्ये महतामपि मतिरपहरति विवेकम्। पश्यन्तु आर्याः, क्व परमाणुपरिमाणमपटु हृदयं, क्व समस्तब्रह्मस्तम्बव्यापि देवस्य चरितम्। क्व परिमितवर्णवृत्तयः कतिपये शब्दाः, क्व सङ्ख्यातीतास्ते

---

लोकनाथेन लोकाधिपतिनानेन दिशां मुखेषु लोकपालाः परिकल्पिताः। सकलभुवनकोशः सकलेषु भुवनेषु सञ्चितोऽर्थसमूहश्च। अग्रजन्मनां ब्राह्मणानाम्। विभक्तः अङ्गीकृतः। अन्यत्र लोकनाथेन विष्णुना, दिशां मुखेषु लोकपालाः इन्द्रादयः कल्पिताः। सकलभुवनकोशः सकलभुवनसन्निवेशः, अग्रजन्मनां दशप्रजापतीनां विभक्त इति। प्रथमकृतयुगस्य प्रथमचतुर्युगसम्बन्धिनः कृतयुगस्य दृश्यन्ते, हर्षस्येति शेषः। समारम्भाः कर्माणि। वंशानुक्रमेण वंशस्य क्रमकथनेन। लोहानि अयांसि। क्षुल्लकानां निहीनानाम्। 'निहीनोऽपशदो जाल्मः क्षुल्लकश्चेतरश्च सः' इत्यमरः।

युक्तरूपं युक्तेषु प्रशस्तम्। 'प्रशंसायां रूपप्' (पा० सू० ५. ३. ६६) अनुरूपमित्यर्थः। अवकल्पयामि अवगच्छामि। परिसङ्ख्यानं गणनम्।

गुणाः। सर्वज्ञस्याप्यविषयः, वाचस्पतेरप्यगोचरः, सरस्वत्या अप्यतिभारः, किमुत अस्मद्विधस्य। कः खलु पुरुषायुषशतैरपि शक्नुयाद् अविकलमस्य चरितं वर्णयितुम्। एकदेशे तु यदि कुतूहलमस्ति सज्जा वयम्। इयमधिगतकतिपयाक्षरलधीयसी जिह्वा क उपयोगं गमिष्यति। भवन्तः श्रोतारः। वर्ण्यते श्रीहर्षचरितम्। किमन्यत्। अद्य तु परिणतप्रायो दिवसः। पश्चाल्लम्बमानकपिलकिरणजटाभारभासुरो भगवान् भार्गवो राम इव समन्तपञ्चकरुधिरमहाह्रदे निमज्जति सन्ध्यारागपटले महार्णवे पूषा। श्वो निवेदितास्मि' इति। सर्वे च तथेति प्रत्यपद्यन्त। नातिचिरादुत्थाय बाणस्तु सन्ध्यामुपासितुं शोणतटमयासीत्।

अथ मधुमदपल्लवितमालवीकपोलतलकोमलातपे मुकुलितेऽह्नि, कमलिनीमेलनादिव लोहिततमे तमोलिहि लम्बमाने रवौ, रविरथतुरगमार्गानुसारेण यममहिष इव धावति नभसि तमसि, क्रमेण च गृहतापसकुटीरकपटलावलम्बिषु रक्तातपच्छेदेष्विव संहृतेषु वल्कलेषु, कलिकल्मषमुषि मुष्णति गगनमग्निहोत्रधामधूमे, सनियमे यजमानजने

---

सर्वज्ञस्य ईश्वरस्य। पुरुषायुषशतैः संवत्सरायुतैः। सज्जाः सन्नद्धाः। किमन्यत् न विलम्बने किञ्चिदपि कारणमस्तीति भावः। (कपिल)किरणजटाभारः कपिलकिरणाख्यजटाभारः। अन्यत्र कपिलप्रभाजटाभारः। भार्गवः परशुरामः। समन्तपञ्चकं परशुरामेण पितृतर्पणार्थं कृतानां रुधिरमयानां ह्रदानां समीपदेश इति महाभारतवचनम्। निवेदितास्मि लुट्युत्तमपुरुषैकवचनम्।

मालवी मालवदेशजाता स्त्री। मुकुलिते सङ्कुचिते; अल्पावशेष इत्यर्थः। मेलनात् सम्बन्धात्। तमोलिहि तमोभक्षके। रविरथतुरगमार्गानुसारेण यममहिष इति। महिषः तुरगशत्रुरिति भावः। अत्र वैजयन्ती च—'महिषः सैरिभोऽश्वारिः'। गृहतापसः गृहे वर्तमानस्तपस्वी। कुटीरकं वक्रगृहम् (കുടിൽ)। पटलं छदिः (ഓല°)। संहृतेषु उपात्तेषु। अग्निहोत्रधाम अग्न्यगारम्।

---

१. 'निवेदयिता', २. मिलनात्'-न.

मौनव्रतिनि, विहारवेलाविलोले पर्यटति पत्नीजने, विकीर्यमाणहरितश्यामाकशालीपूलिकासु दुग्धासु होमकापिलासु, हूयमाने वैताने तनूनपाति, पूतविष्टरोपविष्टे कृष्णाजिनजटिले जटिनि जपति वटुजने, ब्रह्मासनाध्यासिनि ध्यायति योगिगणे, तालध्वनिधावमानान्तेवासिनि, अलसवृद्धश्रोत्रियानुमतेन गरग्रन्थदण्डकोद्गारिणि सन्ध्यामवधीरयति वठरविटवटुसमाजे, समुन्मिषति ज्योतिषि तारकाख्ये खे, प्राप्ते प्रदोषारम्भे भवनमागत्योपविष्टः स्निग्धैर्बन्धुभिश्च सार्धं तथैव गोष्ठ्या तस्थौ। नीतप्रथमयामश्च गणपतेर्भवने परिकल्पितं शयनमसेवत। इतरेषां तु सर्वेषां निमीलितनयनानामपि अनुपजातनिद्राणां कमलवनानामिव सूर्योदयं प्रतिपालयतां कुतूहलेन कथं कथमपि सा क्षपा क्षयमगमत्।

---

अग्निहोत्रशब्दोऽग्निवाची। 'अग्निहोत्रमुपासत' इति दर्शनात्। विहारवेला अग्निप्रणयनकालः। विकीर्यमाणं पुरतः क्षिप्यमाणम्। श्यामाकशालीपूलिका श्यामाकशाल्योः पलालबन्धः। कपिलासु कपिलवर्णासु धेनुषु (കറൊരാൾപശു)। हूयमाने हविषा समिध्यमाने। हूयमाने हविषीति वा पाठः। तनूनपाति अग्नौ। विष्टरः दर्भमुष्टिः, आसनं वा। 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः। जटिले सङ्कटे। ब्रह्मासनं योगासनम्। तालध्वनिधावमानान्तेवासिनि तालः विततांगुलिर्हस्तः। 'चपेटश्चर्पटस्तालः प्रहस्तः प्रतलस्तलः। षट् ते तताङ्गुले हस्ते' इति वैजयन्ती। तस्य ध्वनिना परस्परप्रहारजनितध्वनिश्रवणेन धावमाना दूरतः शीघ्रमागच्छन्तः अन्तेवासिनः शिष्या यस्य। अलसः अशक्तः; निवारणाशक्त्या उपेक्षित इत्यर्थः। गरग्रन्थदण्डकोद्गारिणि गरग्रन्थो नाम भट्टबाणकालजातः कश्चिदश्लीलग्रन्थप्रणेता कविरित्युपदेशः। दण्डकं समासाढ्यपदमाला। 'समासप्रायमाख्यातं पदजातं तु दण्डकम्' इति हलायुधः। उद्गारिणि वक्तरि। 'गॄ शब्दे' इति धातुः। गरग्रन्थेन कृतस्य दण्डकस्य वक्तरि इत्यर्थः। सन्ध्यामवधीरयति सन्ध्यावन्दनं प्रत्युपेक्षावति। वठरः मूर्खः इत्युणादिवृत्तिकारः। स्निग्धैः वयस्यैः। प्रतिपालयतां प्रतीक्ष्य तिष्ठताम्।

अथ यामिन्यास्तुरीये यामे प्रतिबुद्धः स एव वन्दी श्लोकद्वयम् अगायत्—

पश्चादङ्घ्रिं प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥

कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कन्धरामातिरश्चीं
लोलेनाहन्यमानस्तुहिनकणमुचा चञ्चता केसरेण ।
निद्राकण्डूकषायं कषति निबिडितश्रोत्रशुक्तिस्तुरङ्ग-
स्त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण ॥

बाणस्तु तच्छ्रुत्वा समुत्सृज्य निद्राम्, उत्थाय प्रक्षाल्य च वदनम् उपास्य च भगवतीं सन्ध्याम्, उदिते भगवति सवितरि, गृहीत-ताम्बूलः तत्रैवातिष्ठत् ।

अत्रान्तरे सर्वेऽस्य ज्ञातयः समाजग्मुः । परिवार्यैनमासाञ्चक्रिरे च ।

---

तुरीये चतुर्थे । स एव वन्दी सूचिबाणः ।

त्रिकं पृष्ठवंशाधरभागः (കീഴ്മുതുക്) । द्राघयित्वा दीर्घतरीकृत्य । दीर्घ शब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (ग०सू०) इति णिचि तस्येष्ठवद्भावे च कृते 'प्रियस्थिर—'(पा०सू० ६.४.१७७.)इत्यादिना द्राघादेशे ततः क्त्वाप्रत्यये च कृते द्राघयित्वेति रूपम् । आभुग्नं वक्रम् । सटाः स्कन्धरोमाणि । घासग्रासः यवसभक्षणम् । चलत्प्रोथतुण्डः चलता प्रोथेन नासिकया युक्तं तुण्डं मुखं यस्य । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरोऽश्वाधिकारे(?) । क्ष्मां भुवम् । मुखनिकटकटिः मुखासन्नकटि देशः । आतिरश्चीं ईषत् तिर्यग्गताम् । चञ्चता चलता । केसरेण स्कन्धरोम्णा । कषायं रक्तवर्णम् । निबिडितश्रोत्रशुक्तिः निश्चलीकृतश्रोत्राख्यशुक्तिः । त्वङ्गत् चलत् । पक्ष्म अक्षिरोम । बुसं कडङ्गरः (പതിര്) । कोणम् अन्तम् ।

असावपि पूर्वोद्घातेन विदिताभिप्रायः तेषां पुरो हर्षचरितं कथयितुमारेभे । श्रूयताम्—

अस्ति पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः, सततम् असङ्कीर्णवर्णव्यवहारस्थितिः कृतयुगव्यवस्थः, स्थलकमल-वनबहुलतया पोत्रोन्मूल्यमानमृणालवलयैः उन्मीलन्मेदिनीसारगुणैरिव कृतमधुकरकुलकोलाहलैः हलैरुल्लिख्यमानक्षेत्रः, क्षीरोदपयःपायिपयोद-सिक्ताभिरिव पुण्ड्रेक्षुवाटसन्ततिभिर्निरन्तरः, प्रतिदिशम् अपूर्वपर्वतकैरिव खलधानधामभिः विभज्यमानैः सस्यकूटैः सङ्कटसीमान्तः, समन्तादुद्घाटित-घटीयन्त्रसिच्यमानैः जीरकजूटकैः जटिलितभूमिः, उर्वरावरीयोभिः शालेयै-रलङ्कृतः, पाकविशरारुराजमाषनिकरकर्बुरः स्फुटितमुद्गकोशीकपिशितैः परिणतगोधूमधामभिः स्थलीपृष्ठैरधिष्ठितः, महिषपृष्ठप्रतिष्ठितगायद्गोपाल-

---

उद्घातेन प्रस्तावेन । 'प्रस्तावः पुनरुद्घातः' इति वैजयन्ती ।

पुण्यकृतामधिवास इत्युभयत्र समानम् । व्यवहारस्थितिः आचारमर्यादा । पोत्रोन्मूल्यमानं हलमुखोद्ध्रियमाणम् । 'मुखाग्रे क्रोडहलयोः पोत्रम्' इत्यमरः । उन्मीलत् प्रकाशमानम् । हलैः सीरैः । क्षीरोदपयःपायिपयोदसिक्ताभिरित्यनेन पुण्ड्रेक्षूणां माधुर्यं सूचितम् । पुण्ड्रेक्षुः इक्षुभेदः । वाटः उद्यानविशेषः(தோட்டம்) । खलधानधामभिः खलधानं खलं (களம்) । 'खलधानं खलम्' इति हलायुधः । खलधानं धाम स्थानं येषां, खलगतैरित्यर्थः । विभज्यमानैः परस्परासङ्गतं स्थाप्यमानैः । सस्यकूटैः सस्यपुञ्जैः ([illegible]) । उद्घाटितम् उद्ग्राहितजलम् इत्यर्थः । [1]घटीयन्त्रं घटीचक्रम् । जीरकजूटकैः जीरकसमूहैः ([illegible]) - उर्वरावरीयोभिः उर्वरा सर्वसस्याढ्या भूमिः, तस्य श्रेष्ठभूतैः । शालेयैः शाल्युद्भव-क्षेत्रैः । शालीनां भवनमिदं क्षेत्रमित्यर्थे 'व्रीहिशाल्योर्ढक्' (पा० सू० ५. २. २.) इति ढक् । 'क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम्' इत्यमरः । [2]विशरारुः विशरणशीलः । [3]राजमाषः अलसान्द्रः । [4]मुद्गः अश्वभक्ष्यः । कोशी शिम्बा । [5]गोधूमः धान्यविशेषः । प्रतिष्ठितं स्थितम् ।

---

१. घटीयन्त्रं - பூட்டை, २. विशरारुः=வெடிக்கை, ३. राजमाषः=அலசந்தி (பெரும்பயறு), ४. मुद्गः=சிறுபயறு, ५. गोधूमः=கோதுமை-க.

पालितैः कीटलम्पटबलाकानुसृतैः अवटुघटितघण्टाघटीरणितरमणीयैः अटद्भिरटवीं हरवृषभपीतम् आमयाशङ्कया बहुधा विभक्तं क्षीरोदमिव क्षीरं क्षरद्भिः बाष्पच्छेद्यतृणतृप्तैः गोधनैः धवलितविपिनः, विविधमखहोमधूमान्धशतमन्युमुक्तैः लोचनैरिव सहस्रसङ्ख्यैः कृष्णसारैः शारीकृतोद्देशः, धवलधूलिमुचां च केतकीवनानां रजोभिः पाण्डरीकृतैः प्रमथोद्धूलनभस्मधूसरैः शिवपुरस्येव प्रदेशैरुपशोभितः, श्यामाककन्दलश्यामलितग्रामोपकण्ठकाश्यपीपृष्ठः, पदे पदे करभपालकैः पीलुपल्लवप्रस्फोटितैः करपुटपीडितकोमलमातुलुङ्गीदलरसोपलिप्तैः स्वेच्छा-

---

कीटः कृमिः। अवटुः कन्धरोपरिभागः। 'घाटामवटुं कृकाटिकामाहुः' इति हलायुधः। घटितः बद्धः। घण्टाघटी घटीरूपा घण्टा। हरवृषभपीतमिति सर्वत्र गमनशक्ततया हरवृषभस्य क्षीरोदपानमुक्तम्। आमयः व्याधिः। क्षीरस्य अतिपानजो व्याधिरत्र विवक्षितः। विभक्तं स्वजातित्वादिति भावः। बाष्पच्छेद्यं बाष्पः जलसमूहः। 'बाष्पोऽश्रुण्यम्बुधूमे च' इति वैजयन्ती। बाष्पसंस्पर्शमात्रेणापि ग्लानिमुपागच्छदित्यर्थः। एतेन मार्दवातिशय उक्तः। 'कृत्यैरधिकार्थवचने' (पा० सू० २. १. ३३.) इति समासः। गोधनैः गोसमूहैः। 'गोकुलं तु गोधनं स्याद् गवां व्रजे' इत्यमरः। सहस्रसङ्ख्यैः अनेकसङ्ख्यैः। अन्यत्र दशशतसङ्ख्यैः। कृष्णसारैः शारीकृतोद्देश इति। एतेन अस्य देशस्य धर्मप्रभूतत्वं दर्शितम्। उक्तं च—'यस्मिन् देशे मृगः कृष्णस्तत्र धर्मं निबोधत'[1] इति। कृष्णसारैः रुरुभिः[2]। अन्यत्र सशयोरभेदः। कृष्णैश्च शारैश्च। केतकी[3] केतकः। प्रमथा ईश्वरभूतगणाः। शिवपुरस्य शिवलोकस्य। शिवपुरस्य प्रदेशैरिव एवंभूतैः प्रदेशैरुपशोभित इति प्रदेशशब्द उभयत्रापि सम्बन्धनीयः। कन्दलैः वल्लीभिः। काश्यपी भूमिः। पदे पदे द्राक्षालतामण्डपैः स्फुटत्फलानां डाडिमानां च वनैर्विलोभनीयोपनिर्गम इत्यन्वयः। पदे पदे स्थाने स्थाने। करभपालकैः उष्ट्ररक्षिभिः। पीलुः गुडफलवृक्षः। प्रस्फोटितैः शोधितैः। पीडितं भेदितम्। मातुलुङ्गी

---

१. 'तस्मिन् धर्मान् नि', २. कृष्णसारः=கலைமான், ३. केतकी=தாழை-क.

विरचितकुङ्कुमकेसरकृतपुष्पप्रकरैः प्रत्यग्रफलरसपानसुखप्रसुप्तपथिकैः वनदेवतादीयमानामृतरसप्रपागृहैरिव द्राक्षालतामण्डपैः स्फुटत्फलानां च बीजलग्नशुकचञ्चुरागाणामिव सपाकरूढकपिकुलकपोलसन्दिह्यमानकुसुमानां दाडिमीनां वनैः विलोभनीयोपनिर्गमः, उपवनपालपीयमाननालिकेररसासवैश्च पथिकलोकलुप्यमानपिण्डखर्जूरैः गोलाङ्गूललिह्यमानमधुरमोचापिण्डीरसैः चकोरचञ्चुजर्जरितैलावनैःउपवनैरभिरामः,तुङ्गार्जुनपाटलीपाली परिवृतैश्च गोकुलावतारकलुषितकूलकीलालैः अध्वगशतशरण्यैः अरण्यजलाधारबन्धैरवन्ध्यवनरन्ध्रः, कलहायमानकरभीयकुमारककाल्यमानैः औष्ट्रकैः औरभ्रकैश्च कृतसम्बाधः, दिशिदिशि रविरथतुरगविलोभनायेव

रुचकः । कुङ्कुमं पुष्पम् । केसरः बकुलः । कुङ्कुमकिञ्जल्क इति वा । दीयमानं सम्पाद्यमानम् । अमृतरसप्रपागृहैः अमृतरसपानार्थं कल्पिताभिः शालाभिः । [1]द्राक्षा मधुरस[2]बीजं । चञ्चुः नासिका । [3]दाडिमीनां करकवृक्षाणाम् । विलोभनीयः श्लाघ्यः, [4]उपनिर्गमः । [5]नालिकेरः लाङ्गलीवृक्षः । लुप्यमानं यथेष्टं गृह्यमाणम् । [6]पिण्डखर्जूरं खर्जूरभेदः । [7]मोचापिण्डी कदलीफलगर्भपेशी । जर्जरितः भेदितः । एला निष्कुटी । तुङ्गः [8]पुन्नागवृक्षः । 'पुन्नागे पुरुषस्तुङ्गः' इत्यमरः । *[(अर्जुनः) सालः (മരുത്). पाटली पाटलीवृक्षः (പാതിരി) । पाली पङ्क्तिः । गोकुलं गोसमूहः । कूलकीलालैः कूलप्रदेशजलैः । 'शोणितेऽम्भसि कीलालम्' इत्यमरः ।] शरण्यैः शरणं भवितुमर्हद्भिः । जलाधारबन्धैः [9]जलाधारभूमिबन्धैः । वनरन्ध्रं वनोदरम् । करभीयः करभहितः । काल्यमानः निर्गम्यमानः । औष्ट्रकः उष्ट्रसमूहः । औरभ्रकैः उरभ्रसमूहैः । उरभ्रः ([10]ചെമ്മരിയാട്) । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यवत्सपुत्रमनुष्याजाद्वुञ्' (पा० सू० ४.२.३९.) इति समूहार्थे वुञ्प्रत्ययः । 'उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम्' इत्यमरः । उरभ्रः मेषः । दिशिदिशीत्यादि । रविरथतुरगविलोभनायेव दिशिदिशि

१. द्राक्षा=முந்திரிகை, २. बीजं=பால், ३. दाडिमी=மாதுளை, ४. उपनिर्गमः=புறப்பாடு, ५. नालिकेरः=தெங்கு, ६. पिण्डखर्जूरं=பேரீச்சை, ७. मोचापिण्डी=வாழைப்பழச்சதை, ८. पुन्नागवृक्षः=புன்னை, ९. जलाधारबन्धः=ஏரிக்கட்டு, १०. செம்மறி ஆடு.

*कोष्ठकान्तर्गतो भागः व्याख्यान्तरयोर्नास्ति।

विलुठनमृदितकुङ्कुमस्थलीरससमालब्धानाम् उत्प्रोथपुटैः मुखैरुदरशायिकिशोरकजवजननाय प्रभञ्जनमिवापिबन्तीनां वातहरिणीनामिव स्वच्छन्दचारिणीनां बडवानां वृन्दैः विहरद्भिः आचितः, अनवरतक्रतुधूमान्धकारत्रस्तैः हंसयूथैः गुणैरिव धवलितभूतलः, सङ्गीताहतमुरवरवमत्तैः मयूरैरिव विभवमुखरितजीवलोकः, शशिकरावदातवृत्तैः मुक्ताफलैरिव गुणिभिः प्रसाधितः, पथिकशतविलुप्यमानस्फीतफलैः महातरुभिरिव सर्वातिथिभिर्गमनीयः, मृगमदपरिमलवाहिभिः मृगरोमावच्छादितैः

---

विहरद्भिः बडवानां वृन्दैराचित इत्यन्वयः। 'विलुठनं भूमौ परिवर्तनम्। समालब्धानां कृतविलेपनानाम्। 'समालम्भो विलेपनम्' इत्यमरसिंहेन उक्तम्। किशोरकः अश्वपोतः। प्रभञ्जनः वायुः। वातहरिणीनां मृगीणाम्। बडवानाम् अश्वस्त्रीणाम्। विहरद्भिः परिक्रमद्भिः। क्रतुधूमान्धकारत्रस्तैः मेघशङ्कयेवेति भावः। सङ्गीतेत्यादि। विभवातिशयः सङ्गीतप्रवृत्तेः हेतुरित्यनुसन्धेयम्। मत्तः हृष्टः, मदं प्राप्तश्च। मुखरित उद्धत इत्यर्थः। अवदातवृत्तैः शुद्धचरित्रैः, अन्यत्र अवदातैर्वृत्तैश्च। अवदातं शुद्धं, वृत्तं वर्तुलम्। गुणिभिः सद्गुणयुक्तपुरुषैः; अन्यत्र गुणः सूत्रं तद्युक्तैः; सूत्रप्रोतैरित्यर्थः। स्फीतफलैः प्रभूतधनैः। अन्यत्र प्रभूतसस्यैः (फलैः)। 'लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम्' इति वैजयन्ती। सर्वातिथिभिर्गमनीयः सर्वातिथिभिर्हेतुभिः गमनीयः। सर्वातिथियुक्तत्वात् सर्वैरपि जनैर्गम्यत इत्यर्थः। 'ये ब्राह्मणाद्याश्चण्डालपर्यन्ता मानवा भुवि। ते सर्वेऽतिथयो येषां ते सर्वातिथयः स्मृताः॥' इति। मृगमदेत्यादि। मृगमदपरिमलवाहिभिश्च मृगरोमावच्छादितैश्च। मृगमदपरिमलवाहिभिः कस्तूरीसौरभ्यवाहिभिः। मृगरोमावच्छादितैः मृगरोमशब्देन रङ्कवाख्यमृगरोमकृतः कम्बलो लक्ष्यते। तेन कृतप्रावरणैः। अन्यत्र मृगः गजविशेषः। 'भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः। वनप्रचारसारूप्यसत्त्वभेदोपलक्षिताः॥' इति हलायुधः। तेषां मदपरिमलवाहिभिश्च। मृगाणां रोमभिः पिहितैश्च।

---

१. विलुठनं=புரளுதல; २. 'मावच्छादितैः', ३. 'श्च रङ्कादिम्'-क.

हिमवत्पार्श्वैरिव महत्तरैः स्थिरीकृतः, प्रोद्दण्डशतपत्रोपविष्टद्विजोत्तमैः नारायणनाभिमण्डलैरिव तोयाशयैर्मण्डितः, मथितपयःप्रवाहप्रक्षालितक्षितिभिः मन्थनारम्भैरिव महाघोषैः पूरिताशः श्रीकण्ठो नाम जनपदः।

यत्र त्रेताग्निधूमाश्रुजलप्रक्षालिता इव अक्षीयन्त कुदृष्टयः। पच्यमानचयनेष्टकादहनदग्धानीव नादृश्यन्त दुरितानि। भिद्यमानयूपदारुपरशुपाटित इव व्यशीर्यताधर्मः। मखशिखिधूमजलधरधाराधौत इव ननाश वर्णसङ्करः। दीयमानानेकगोसहस्रखुरखण्ड्यमान इव पलायत कलिः। सुरालयशिलासङ्घट्टनटङ्कनिकरनिकृत्ता इव व्यदीर्यन्त विपदः। महादानकलकलाभिद्रुता इव प्राद्रवन्नुपद्रवाः। दीप्यमानसत्रमहानससहस्रसन्तापिता इव व्यलीयन्त व्याधयः। वृषविवाहप्रहतपुण्यपटहपटुरववित्रासिता इव अपासर्पन्नपमृत्यवः। सन्ततब्रह्मघोषबधिरिता इव

---

महत्तरैः महापुरुषैः, विशालैश्च। शतपत्रं पद्मम्। द्विजोत्तमः हंसः, ब्रह्मा च। मथितपयःप्रवाहः मथितपयसः प्रवाहः। मथितं निर्जलं गोरसः, तक्रम्। 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः। पयः क्षीरम्। अन्यत्र मथितस्य विलोडितस्य पयसो जलस्य प्रवाहः। मन्थनारम्भः समुद्रमथनारम्भः। महाघोषैः महतीभिः गोपश्रेणिभिः। 'घोष आभीरपल्ली स्याद्' इत्यमरः। अन्यत्र महाशब्दवद्भिः।

त्रेता गार्हपत्यदक्षिणाग्न्याहवनीयाः। 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता॥' इत्यमरः। कुदृष्टयः कुत्सितज्ञानानि। बौद्धादिदर्शनानीत्यर्थः; कुत्सितनेत्राणि इति च। चयनेष्टका अग्निचयनेष्टका। यूपदारुपरशुः यूपार्थानां दारूणां छेदनसाधनपरशुः। पाटितः छेदितः। मखशिखिधूमजलधरः मखशिखिभ्य उद्गतैर्धूमैरुत्पादितो जलधरः। धूमप्रकृतिको मेघ इति भावः। वर्णः ब्राह्मणादिः, चित्राणां लेपनद्रव्यमिति च। टङ्कः पाषाणदारणः। सत्रमहानसं सत्रार्थं महानसम्। सत्रं सदादानम्। महानसं पाकस्थानम्। वृषविवाहः धर्मविवाहः। अपमृत्यवः अकालमरणानि। ब्रह्मघोषः

अपजग्मुः ईतयः। धर्माधिकारपरिभूतमिव च न प्राभवद् दैवम्।

तत्र च एवंविधे नानारामाभिरामकुसुमगन्धपरिमलसुभगो यौवनारम्भ इव भुवनस्य, कुङ्कुमकुड्मलमिलनापिञ्जरितबहुमहिषीसहस्रशोभितोऽन्तःपुरनिवेश इव धर्मस्य, मरुदुद्धूयमानचमरीबालव्यजनशतशबलितप्रान्तः एकदेश इव सुरराज्यस्य, ज्वलन्मखशिखिसहस्रदीप्यमानदशदिगन्तः शिबिरसन्निवेश इव कृतयुगस्य, पद्मासनावस्थितब्रह्मर्षिध्यानाधीयमानसकलाकुशलप्रशमोऽवतार इव ब्रह्मलोकस्य, कलकलमुखरमहावाहिनीशतसङ्कुलो विक्षेप इव उत्तरकुरूणाम्, ईश्वरमार्गणसन्तापा-

---

वेदध्वनिः। ईतयः अतिवृष्ट्याद्युपद्रवाः। उक्तं च—'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥' इति। धर्माधिकारः धर्मानुवृत्तिः। प्राभवत् स्वतन्त्रमासीत्। दैवं, दैवशब्देन जन्मान्तरकृतं कर्म लक्ष्यते। दैवज्ञशब्दव्याख्याने तु 'दैवशब्दः पूर्वकृतकर्मवाची' इति क्षीरस्वामिनोक्तम्।

नानेत्यादि। नानारामाणां नानाभूतानामुद्यानानां सम्बन्धिनाभिरामेण हृद्येन कुसुमगन्धस्य परिमलेन सौरभ्येण सुभगः शोभनः। अन्यत्र नानाभूतानां रामाणां स्त्रीणामभिरामस्येष्टस्य कुसुमस्य गन्धस्य च चन्दनाद्यनुलेपस्य परिमलेन सम्बन्धेन सुभगः। मिलनं सम्पर्कम्। महिषी महिषस्त्री, राजस्त्री च। मरुद् वायुः, देवश्च। चमरीबालव्यजनं चमरीमृगाणां बालव्यजनम्। पद्मासनावस्थितः पद्मासनेनोपविष्टः। 'उत्तानौ चरणावूर्वोः न्यस्येन्नाभौ करद्वयम्। दक्षिणोत्तरमुत्तानं प्राणदृक् पद्मकासनी॥' इति वैजयन्ती। अन्यत्र पद्माख्यासनेऽवस्थितः। ब्रह्मर्षिः ब्राह्मणर्षिः, ब्रह्माख्यर्षिश्च। महावाहिनी महासेना, महानदी च। उत्तरकुरवः बहुनदीयुक्ता इति प्रसिद्धिः। [1]विक्षेपः सेनानिवेशः। अथवा आक्षेपकः। ईश्वरमार्गणसन्तापः ईश्वरे आढ्ये याच्ञया जातः सन्तापः। अन्यत्र महादेवशराग्निदाहः। विजिगीषुरिव त्रिपुरस्य, त्रिपुरम् ईश्वरसन्तापाभिज्ञमिति

---

१. विक्षेपः सेनाविक्षेपः—क.

मभिज्ञसकलजनो विजिगीषुरिव त्रिपुरस्य, सुधारससिक्तधवलगृह-पङ्क्तिपाण्डरः प्रतिनिधिरिव चन्द्रलोकस्य, मधुमदमत्तमत्तकाशिनी-भूषणरवभरितभुवनो नामापहार इव कुबेरनगरस्य स्थाण्वीश्वराख्यो जनसन्निवेशः।

यश्च यौवनमिति युवतिभिः, तपोवनमिति मुनिभिः, कामायतन-मिति वेश्याभिः, सङ्गीतशालमिति लासकैः, यमनगरमिति शत्रुभिः, चिन्तामणिभूमिरित्यर्थिभिः, वीरक्षेत्रमिति शस्त्रोपजीविभिः, गुरुकुलमिति विद्यार्थिभिः, गन्धर्वनगरमिति गायनैः, विश्वकर्ममन्दिरमिति विज्ञानिभिः, लाभभूमिरिति वैदेहकैः, धूर्तस्थानमिति वन्दिभिः, साधुसमागम इति सद्भिः, वज्रपञ्जरमिति शरणागतैः, विटगोष्ठीति विदग्धैः, सुकृतपरिणाम इति पथिकैः, असुरविवरमिति वादिकैः, शाक्याश्रम इति शमिभिः, अप्सरःपुरमिति कामिभिः, महोत्सवसमाज इति चारणैः, वसुधारेति च विप्रैरगृह्यत।

---

भावः। सुधा गृहादीनां लेपनद्रव्यविशेषः; अमृतं च। धवळगृहं सुधालिप्तगृहम्, उभयत्र समानम्। मत्तकाशिनी उत्तमस्त्री। 'वरारोहा मत्तकाशिनी' इत्यमरः। अन्यत्र मत्तकाशिनीनां मत्तकाशिनीति यक्षस्त्रीणां गुणविशिष्टं नाम। गुणश्च सर्वोत्तमत्वम्। अत एव कालिदासकविनापि मेघसन्देशे 'उत्तमस्त्रीसहाया' इत्यत्र यक्षस्त्रीणामुत्तमस्त्रीति नाम कृतम्। नामापहारः नामाक्षेपः। जनसन्निवेशः नगरम्।

सङ्गीतशालं सङ्गीतगृहम्। 'विभाषा सेना ....' (पा० सू० २. ४. २५.) इत्यादिना शालाशब्दस्य नपुंसकत्वम्। लासकैः नटैः। विज्ञानिभिः शिल्पविद्भिः। वैदेहकैः वणिग्भिः। 'वैदेहकः सार्थवाहः' इत्यमरः। सुकृतपरिणाम इति पथिकैः अभीष्टसिद्धेरुपस्थानादिति भावः। वादिकैः रसवादिभिः। शाक्यः बौद्धः। चारणैः चाटुकारैः। वसुधारा अर्थधारा, मन्त्रविशेषो वा।

---

१. सुधा—[illegible]—क.

यत्र च मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिरामोदनिःश्वसनाश्च, चन्द्रकान्तवपुषः शिरीषकोमलाङ्गयश्च, अभुजङ्गगम्याः कञ्चुकिन्यश्च, पृथुकलत्रश्रियः दरिद्रमध्यकलिताश्च, लावण्यवत्यः मधुरभाषिण्यश्च,

---

मातङ्गगामिन्यः चण्डालपरिग्राहिकाः। 'चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः। शीलवत्यः शुद्धचरिताः। चण्डालपरिग्राहिणां शुद्धचरितत्वं विरुद्धम्। मुख्यार्थः— मातङ्गगामिन्यो गजगामिन्यः, गजतुल्यगमना इत्यर्थः। शीलवत्यः सत्स्वभावाः। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। गौर्यः पार्वत्यः। विभवरताः विगतं भवे ईश्वरे रतं रतिः यासाम्। मुख्यार्थः— गौर्यः गौरवर्णाः, विभवरताः ऐश्वर्येण सुखिताः। श्यामाः श्यामवर्णाः। पद्मरागिण्यः पद्मानां रागेण शोभया युक्ताः। मुख्यार्थः— श्यामा युवत्यः, पद्मरागिण्यः आभरणनिबद्धपद्मरागमणियुक्ताः। धवलद्विजशुचिवदनाः श्रेष्ठब्राह्मणैः शुद्धाननाः। मदिरामोदनिःश्वसनाः सुरागन्धनिःश्वासाः। ब्राह्मणसम्बन्धिनां सुरासम्बन्धो विरुद्ध इति भावः। मुख्यार्थः— शुक्लदन्तशुभ्रवदनाः मधुसदृशगन्धनिःश्वासाः। चन्द्रकान्तवपुषः चन्द्रकान्तमणिना कृतवपुषः। शिरीषकोमलाङ्गयः शिरीषपुष्पकृतकोमलवपुषः। चन्द्रकान्तकृतशरीराणां शिरीषकोमलाङ्गत्वं विरुद्धम्। मुख्यार्थः— चन्द्रवत् कान्तवपुषः। अथवा चन्द्रेणाभरणभूतसुवर्णेन कान्तवपुषः। 'गाङ्गेयं स्याद् गैरिकं भूरि चन्द्रम्' इति हलायुधः। शिरीषपुष्पवत् कोमलाङ्गयः। अभुजङ्गगम्याः असर्पगम्याः। कञ्चुकिन्यः सर्पस्त्रियः। कञ्चुकः निर्मोकः अस्या इति कञ्चुकिनी। मुख्यार्थः— अभुजङ्गगम्याः, गम्य इति वेश्यापतीनां कामतन्त्रसिद्धं नाम। भुजङ्गा धूर्ताः यासां गम्या न भवन्ति ता अभुजङ्गगम्याः। कञ्चुकिन्यः कञ्चुकयुक्ताः। पृथुकलत्रश्रियः पृथुः कलत्राणां भार्याणां सम्बन्धिनी श्रीः आभरणादिसम्पद् यासाम्। दरिद्रमध्यकलिताः दरिद्राणां मध्ये गणिताः। समग्राभरणादिसम्पदां दरिद्रमध्यगणनमयुक्तमिति भावः। मुख्यार्थः— पृथुकलत्रश्रियः पृथुजघनशोभाः। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। दरिद्रमध्यकलिताः कृशमध्यदेशयुक्ताः। लावण्यवत्यः लवणरसवत्यः। मधुरभाषिण्यः प्रियभाषिण्यः। 'स्वादुप्रियौ तु मधुरौ' इत्यमरः।

अप्रमत्ताः प्रसन्नोज्ज्वलमुखरागाश्च, अकौतुकाः प्रौढाश्च प्रमदाः ।

यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं, भारः कुवलयदामानि । अलकप्रतिबिम्बान्येव कपोलभाञ्जि अकिप्राः श्रवणावतंसकाः, पुनरुक्तानि तमालकिसलयानि । प्रियजनकथा एव सुभगाः कर्णालङ्काराः, आडम्बरः कुण्डलदामादिः । कपोला एव सततमालोककारकाः, विभवो मणिदीपादिः । निःश्वासाकृष्टमधुकरकुलमेव रमणीयं मुखावरणं, कुलजनाचारो जालिका । वाण्येव मधुरतरा वीणा, बाह्यविज्ञानं तन्त्रीताडनम् । हासा एवातिसुरभयः पटवासाः, निरर्थकाः कर्पूरपांसवः । अधरकान्तिनिर्झर एव उज्ज्वलतरोऽङ्गरागः, निर्गुणो लावण्यकलङ्कः कुङ्कुमपङ्कः । बाहव एव कोमलतमाः परिहासप्रहारलताः, निष्प्रयोजनानि मृणालानि । यौवनोष्मस्वेदबिन्दव एव विदग्धाः कुचालङ्कृतयः, हारास्तु भाराः । श्रोण्य एव विशालशिलातलचतुराः

---

अप्रमत्ताः प्रमत्तेतराः, निर्मदा इत्यर्थः । प्रसन्नोज्ज्वलमुखरागाः प्रसन्नया सुरया, सुरापानेनोज्ज्वलो मुखरागो मुखारुणिमा येषाम् । 'मद्यासवः शीधु सुरा प्रसन्ना' इति हलायुधः । मुख्यार्थः— अप्रमत्ता अनवधानरहिताः, सर्वत्र स्खलनरहितवृत्तयः इत्यर्थः । प्रसन्नोज्ज्वलमुखरागाः प्रसन्नाः प्रसादयुक्ताः उज्ज्वलाः दीप्ताश्च मुखरागाः मुखशोभाः यासाम् । अकौतुकाः हस्तसूत्ररहिताः । 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले' इति वैजयन्ती । प्रौढाः प्रकर्षेण ऊढाः प्रगल्भाः [कृतविवाहाः । अत्र नूतनोढा विवक्षिताः । मुख्यार्थः अकौतुकाः हेयविषयेषु कुतूहलरहिताः । साध्वीनां स्त्रीणां हेयविषयेषु कुतूहलमयुक्तमित्यर्थः ।]

जालिका अवगुण्ठनपटः । बाह्यविज्ञानं वीणावादनविज्ञानाद् बाह्यमेव किमपि विज्ञानान्तरम् । तन्त्री वीणादिकम् । ताडनम् आघातः । पटवासः पटो वास्यते सुगन्धीक्रियते येन स पटवासः । निर्गुणः निष्प्रयोजनः । विदग्धाः चतुराः ।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

विश्रमकारणम्, अनिमित्तं भवनमणिवेदिकाः। कमलकोशनिलीनानि अलिकुलान्येव मुखराणि पादाभरणानि, निष्फलानि इन्द्रनीलमणि-नूपुराणि। नूपुररवाहूतभवनहंसा एव समुचिताः सञ्चरणसहायाः, ऐश्वर्यप्रपञ्चः परिजनः।

तत्र च साक्षात् सहस्राक्ष इव सर्ववर्णधरं धनुर्दधानः, मेरुमय इव कल्याणप्रकृतित्वे, मन्दरमय इव लक्ष्मीसमाकर्षणे, जलनिधिमय इव मर्यादायाम्, आकाशमय इव शब्दप्रादुर्भावे, शशिमय इव कलासङ्ग्रहे, वेदमय इव अकृत्रिमालापे, धरणिमय इव लोकधृतिकरणे, पवनमय इव सकलपार्थिवरजोविकारापहरणे, गुरुर्वचसि, पृथुरुरसि, विशालो मनसि, जनकस्तपसि, सुमित्रस्तेजसि, सुमन्त्रो रहसि, बुधः सदसि,

---

चातुर्यं च बाह्योपकरणनिरपेक्षत्वम्। विश्रमकारणं श्रमयापनोपकरणम्। अनिमित्तम् अकारणम्।

सर्ववर्णधरं सर्वेषां ब्राह्मणादिवर्णानां रक्षकम्। अन्यत्र शुक्लादिवर्णधरम्। कल्याणप्रकृतित्वे शोभनस्वभावत्वे। अन्यत्र स्वर्णोत्पत्तित्वे। 'राः कल्याण-मष्टापदं च' इति हलायुधः। लक्ष्मीः राजलक्ष्मीः, श्रीश्च। समाकर्षणे परत आदाने। मर्यादायां स्थितौ, लोकवेदस्थित्यनतिलङ्घन इत्यर्थः। अन्यत्र तीरे, तीरानतिलङ्घन इत्यर्थः। 'मर्यादा कूलदेशोऽस्य' इति हलायुधः। शब्दप्रादुर्भावे यशस उत्पत्तौ। अन्यत्र शब्दो ध्वनिः। 'शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ' इति वैजयन्ती। कलाः चतुष्षष्टिकलाः, षोडशकलाश्च। अकृत्रिमालापे अकपटोक्तौ, अकृतकोक्तौ च। धृतिः सौख्यं, धारणं च। पार्थिवरजोविकारः पार्थिवानां राज्ञां रजसो गर्वस्य विकारः। अन्यत्र पृथिवीसम्भूतस्य रजसो रेणोः विकारो विकरणम्। गुरुः गौरवयुक्तः, अनल्प इति वा। अन्यत्र बृहस्पतिः। पृथुः बृहत्तरः। अन्यत्र वैन्यः। विशालः विशङ्कटः, कश्चिद्राजविशेषश्च। जनकः जनयिता कर्तेत्यर्थः, मैथिलश्च। सुमित्रः शोभन आदित्यः, कश्चिद्राजा च। सुमन्त्रः शोभनमन्त्रः, दशरथमन्त्री च। बुधः विद्वान्, बुधभगवांश्च।

अर्जुनो यशसि, भीष्मो धनुषि, निषधो वपुषि, शत्रुघ्नः समरे, शूरः शूरसेनाक्रमणे, दक्षः प्रजाकर्मणि, सर्वादिराजतेजःपुञ्जनिर्मित इव राजा पुष्यभूतिरिति नाम्ना बभूव।

पृथुना गौरियं कृतेति स्पर्धमान इव यो महीम् महिषीं चकार। निसर्गस्वैरिणी स्वरुच्यनुरोधिनी च भवति महताम् मतिः। यतः तस्य केनचिदनुपदिष्टा सहजैव शैशवादारभ्यानन्यदेवता भगवति भक्तिसुलभे भुवनभृति भूतभावने भवच्छिदि भवे भूयसी भक्तिरभूत्। अकृत-वृषध्वजपूजाविधिः न स्वप्नेऽप्याहारमकरोत्। अजम् अजरम् अमरगुरुम् असुरपुररिपुम् अपरिमितगणपतिम् अचलदुहितृपतिम् अखिलभुवनकृत-चरणनतिं पशुपतिं प्रपन्नोऽन्यदेवताशून्यममन्यत त्रैलोक्यम्। भर्तृ-चित्तानुवर्तिन्यश्च अनुजीविनां प्रकृतयः। तथा हि— गृहे गृहे भगवानपूज्यत खण्डपरशुः। ववुरस्य *होमानलज्वालाविलीयमानबहलगुग्गुलगन्ध-

---

अर्जुनः धवलः, पार्थश्च। भीष्मः भयङ्करः, शान्तनवश्च। निषधः कठिनः, नलश्च। 'निषधोऽद्रौ देशभेदे कठिने तस्य राजनि' इति वैजयन्ती। शत्रुघ्नः शत्रुहन्ता लक्ष्मणानुजश्च। शूरः वीरः, यादवविशेषश्च। शूरसेनां शूराणां सेनाम्, अथवा शूरसेनो नाम जनपदविशेषः। दक्षः कुशलः, दक्षप्रजापतिश्च। प्रजाकर्मणि प्रजाशिक्षायाम्, प्रजासृष्टौ च। आदिराजतेजःपुञ्ज इति। तेजः-शब्देन राज्ञां सम्बन्धिनोऽपि गृह्यन्ते(?)।

पृथुनेत्यादि। इयं मही, पृथुना राज्ञा गौः सुरभिः कृतेति तेन सह स्पर्धमान इव यः तामेव महीं महिषीं तस्याः प्रतियोगिनीं महिषस्त्रियं चकार। पृथुना भूमिः सुरभिरूपा कृतेति कथा। मुख्यार्थः— महिषीं सह कृताभिषेकां स्त्रियम्। स्वैरिणी स्वैरचारिणी, स्वतन्त्रा। अनन्यदेवता अन्या देवता यस्या विषयो न भवति सा अनन्यदेवता। भूतभावने सकलप्राणिनां स्रष्टरि। आहारं भोजनविधिम्। प्रकृतयः शीलानि। ववुः 'वा गतिगन्धनयोः' इति धातुः। होमालयानलः होमकुण्डस्थाग्निः।

---

* होमालयानलेति व्याख्यानुसारी पाठः।

१. तामेव सुरभिं महिषीं स्त्रियं च, २. महिषीं स्त्रियं, ३. सुरभिः—क.

गर्भा स्नपनक्षीरशीकरक्षोदक्षारिणो बिल्वपल्लवदामदलोद्वाहिनः पुण्यालयेषु वायवः। शिवसपर्यासमुचितैरुपायनैः प्राभृतैश्च पौराः पादोपजीविनः सचिवा भुजबलनिर्जिताश्च करदीकृता महासामन्तास्तं सिषेविरे। तथा हि कैलासकूटधवलैः कनकपत्रालङ्कृतविषाणकोटिभिः महाप्रमाणैः सन्ध्याबलिवृषैः सौवर्णैश्च स्नपनकलशैः अर्घ्यपात्रैश्च धूपभाजनैश्च पुष्पपुटैश्च यष्टिप्रदीपैश्च ब्रह्मसूत्रैश्च महार्हमाणिक्यखण्डखचितमुखकोशैश्च परितोषमस्य मनसि चक्रुः। अन्तःपुराण्यपि स्वयमारब्धशालेयतण्डुलखण्डनानि देवगृहोपलेपनलोहिततरकरकिसलयानि कुसुमग्रथनव्यग्रसमग्रपरिजनानि तस्याभिलषितमन्ववर्तन्त।

तथा च परममाहेश्वरः स भूपालो लोकतः शुश्राव भुवि भगवन्तमपरमिव साक्षाद् दक्षमखमथनं दाक्षिणात्यं बहुविधविद्याप्रभावप्रख्यातैर्गुणैः शिष्यैरिव अनेकसहस्रसङ्ख्यैः व्याप्तमर्त्यलोकं भैरवाचार्यनामानम् महाशैवम्। उपनयन्ति हि सतां हृदयम् अदृष्टमपि जनं शीलसंवादाः। यतः स राजा श्रवणसमकालमेव तस्मिन् भैरवाचार्ये भगवति द्वितीय इव कपर्दिनि दूरगतेऽपि गरीयसीं बुद्धिं बबन्ध। आचकाङ्क्ष च मनोरथैरस्य सर्वदा दर्शनम्।

---

क्षोदः धूलिः। [1]बिल्वः श्रीफलः। उपायनैः पुष्पाद्युपहारैः। प्राभृतैः [2]रत्नादिद्रव्यैः। करदीकृताः करदायिनः कृताः। विषाणकोटिः शृङ्गाग्रम्। वृषैः वृषभैः। [3]पुष्पपुटैः पुष्पभाजनैः। 'करण्डी तु पुटी त्रयी' इति वैजयन्ती। [4]यष्टिप्रदीपैः यष्टिस्थदीपैः। कोशैः शिवलिङ्गप्रतिमान्याससमुद्रैः। खण्डनम् 'अवघातस्तु खण्डनम्*' इति वैजयन्ती। कण्डनमिति केचित्। तदा 'कडि विभेदने' इति धातुः। उपलेपनं गोमयादिना धावनम्। कुसुमग्रथनं माल्यादिनिर्माणम्।

---

१. बिल्वः श्रीदः—கூவிளை, २. रत्नकलशादिगुरुद्रव्यैः, ३. पुष्पपुटः—பூக்கூடை
४. यष्टिप्रदीपः—கிலவிளக்கு-क. *'कण्डन'मिति मुद्रितवैजयन्तीपाठः।

अथ कदाचित् पर्यस्तेऽस्ताचलचुम्बिनि दिवसकरेऽन्तःपुरवर्तिनं राजानमुपसृत्य प्रतिहारी विज्ञापितवती— 'देव! द्वारि परिव्राडास्ते, कथयति च भैरवाचार्यवचनाद् देवमनुप्राप्तोऽस्मी'ति। राजा तु तच्छ्रुत्वा सादरं 'क्वासौ, आनय, अत्रैव प्रवेशयैनम्' इत्यब्रवीत्। तथा च अकरोत् प्रतिहारी। नचिराच्च प्रविशन्तं प्रांशुम् आजानुलम्बिभुजं भैक्षाशिनमपि स्थूलतरास्थिभिरवयवैः पीवानमिव उपलक्ष्यमाणं, पृथूत्तमाङ्गम्, उत्तुङ्गवलिभस्थपुटललाटं, निर्मांसगण्डकूपम्, मधुबिन्दुपिङ्गलपरिमण्डलाक्षम्, ईषदाभुग्नवक्रघोणम्, अतिप्रलम्बकर्णपाशम्, अलाबुबीजविकटदीर्घदन्तपङ्क्तिं, तुरगानूकश्लथाधरलेखं, लम्बचिबुकायततरलपनम्, अंसावलम्बिना काषायेण योगपट्टकेन विरचितवैकक्ष्यकं, हृदयमध्यनिबद्धग्रन्थिना च रागेणेव खण्डशः कृतेन धातुरसारुणेन

भैक्षाशिनं भिक्षान्नभक्षणेन कृशशरीरम्। पीवानं स्थूलम्। वलिभं वलीयुक्तम्। 'तुन्दिवलिवटेर्भः' (पा० सू० ५. २. १३९.) इति भो मत्वर्थीयः। स्थपुटं निम्नोन्नतम्। गण्डकूपं गण्डाख्यगर्तः। 'कूपो गर्ते प्रहावपि' इति वैजयन्ती। (ईषद्) आभुग्नवक्रघोणम् ईषत्कुटिलवक्रनासादण्डम्। 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः। कुटिलत्वं च नासिकाग्रे, वक्रत्वं नासिकादण्डे। केचिद् आभुग्नपदस्य विवरणत्वेनाधोभागे कैश्चिल्लिखितं वक्रपदमपि अतिरेकग्रन्थभ्रान्त्या आभुग्नवक्रघोणामित्येकत्वेन लिखितमिति आभुग्नघोणमिति[1] पठन्ति। कर्णपाशः शोभनकर्णः। 'पाशो रज्जौ कर्णशब्दात् परः कर्णेऽतिशोभने' इति वैजयन्ती। अलाबुः[3] तुम्बी। विकटः पृथुः। तुरगानूकं तुरगाधरोष्ठः। तुङ्गहनूकमिति केषुचित् कोशेषु पाठः। तुङ्गकपोलोपरिभाग इत्यर्थः। 'अधः स्याच्चिबुकं गण्डौ कपोलौ तत्परा हनुः' इत्यमरः। श्लथा शिथिला। लम्बमानोष्ठाधरभागत्वाद् दीर्घतरमुखम्। काषायेण कषायरक्तेन। कषायो वस्त्राणां रञ्जकपाषाणः। हृदयेत्याद्युभयत्र समानम्। हृदयं वक्षोदेशः। हृदये बन्धनं चागमसिद्धम् अनुसन्धेयम्। ग्रन्थिः बन्धः। धातुः गैरिकम्।

१. 'मविवक्षितैरेकग्रन्थ'-ख. ग. २. 'स्रेव प', ३. अलाबु—कलाबु-क.

कर्पटेन कृतोत्तरासङ्गं, पुनरुक्तबालप्रग्रहवेष्टननिश्चलमूलेन बद्धमृत्परिशोधनवंशत्वक्कृततितउना कौपीनसनाथशिखरेण खर्जूरपुटगर्भीकृतभिक्षाकपालेन दारवफलकत्रयत्रिकोणत्रियष्टिनिविष्टकमण्डलुना बहिरुपपादितपादुकावस्थानेन स्थूलदशासूत्रनियन्त्रितपुस्तिकापूलिकेन वामकरधृतेन च योगभारकेणाध्यासितस्कन्धम्, इतरकरगृहीतवेत्रासनम्, मस्करिणमद्राक्षीत् क्षितिपतिः । उपगतमुचितेन चैनमादरेणान्वग्रहीत् । आसीनं चैनं पप्रच्छ— 'क्व भैरवाचार्यः' इति । सादरनरपतिवचनमुदितस्तु परिव्राट् तमुपनगरं सरस्वतीतटवनान्तसङ्गिनि शून्यायतने स्थितमाचचक्षे । भूयश्चाबभाषे— 'वर्धयति च भवन्तं भगवान् महाभागम् आशीर्वचसा' इत्युक्त्वा उपनिन्ये च योगभारकादाकृष्य भैरवाचार्य-

---

कर्पटेन वस्त्रेण । उत्तरासङ्गः प्रावरणवस्त्रम् । 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः । पुनरुक्तं द्विगुणितम् । बालप्रग्रहं केशकृतरज्जुः । बद्धेत्यादि । तितउः चालनी । 'चालनी तितउः पुमान्' इत्यमरः । बद्धो मृत्परिशोधनार्थो वंशत्वचा कृतः तितउः यत्र । कौपीनं कक्ष्यापुटम् । खर्जूरेत्यादि । पुटः समुद्गः । 'समुद्गः सम्पुटः पुटः' इति वैजयन्ती । खर्जूरपुटस्य खर्जूरशलाकारचितस्य समुद्गस्य, गर्भीकृतं गर्भस्थीकृतं, मध्यनिहितं भिक्षाकपालं यत्र । खर्जूरपुटसमुद्ग इति वा पाठः । तदा पुटेन उदरेण युक्तः समुद्गः पुटसमुद्गः । दारवेत्यादि । दारवस्य दारुणा कृतस्य फलकत्रयस्य । त्रिषु कोणेषु प्रान्तेषु स्थापितायां, त्रियष्टौ निविष्टः शलाकात्रयमध्ये निविष्टः कमण्डलुः यत्र । बहिरुपपादितपादुकावस्थानेन भिक्षाकपालादिभिः[1]असंवृतस्थितये बहिः भिक्षा[2]कपालस्थानादन्यत्र सम्पादितं पादुका[3]स्थानं यत्र । उपानत् पादुका । दशासूत्रं वर्तितन्तुः (കരാന്നൽ) । नियन्त्रितं बद्धम् । पुस्तिकापूलिका [4]पुस्तिकाबन्धः (ഏട്ടുകെട്ട്) । [5]योगभारकेण योगोपकरणवाहिना । आदरेण सम्मानेन । शून्यायतने शून्यमातृदेवालये । महाभागः अयं पूज्यानामुपचारशब्दः । महा-

---

१. असम्बद्धस्थितये, २. कपालादन्यत्र, ३. पुस्तिकावस्थानम्, ४. पत्रिकाबन्धः, ५. योगभारभारकेण त्रिदण्डेनाध्यासितस्कन्धमिति पाठः । योगो-क.

प्रहितानि रत्नवन्ति बहलालोकलिप्तान्तःपुराणि पञ्च राजतानि पुण्डरीकाणि ।

नरपतिस्तु प्रियजनप्रणयभङ्गकातरं दाक्षिण्यमनुरुध्यमानो ग्रहणलाघवं च लङ्घयितुमसमर्थो डोलायमानेन मनसा स्थित्वा कथमपि सौजन्यनिघ्नः तानि जग्राह । जगाद च—'सर्वप्रसवहेतुः शिवभक्तिरियं मनोरथदुर्लभानि फलति फलानि, येनैवमस्मासु प्रीयते तत्रभवान् भुवनगुरुः भैरवाचार्यः । श्वो द्रष्टास्मि भगवन्तम्' इत्युक्त्वा मस्करिणं व्यसर्जयत् । अनया च प्रतिपत्त्या परां मुदमवाप ।

अपरेद्युः प्रातरेवोत्थाय वाजिनमधिरुह्य समुच्छ्रितश्वेतातपत्रः, समुद्धूयमानधवलचामरः, कतिपयैरेव राजपुत्रैः परिवृतः, भैरवाचार्यं सवितारमिव शशी द्रष्टुं प्रतस्थे । गत्वा च किञ्चिदन्तरं तदीयमेव अभिमुखमायान्तमन्यतमं शिष्यम् अद्राक्षीत् । अप्राक्षीच्च 'क्व भगवानास्ते' इति । सोऽकथयत्—'अमुं जीर्णमातृगृहमुत्तरेण बिल्ववाटिकामध्यास्ते' इति । गत्वा च तं प्रदेशम् अवततार तुरगात् । प्रविवेश च बिल्ववाटिकाम् ।

अथ महतः कार्पटिकपेटकस्य मध्ये प्रातरेव स्नातं, दत्ताष्टपुष्पिकम्, अनुष्ठिताग्निकार्यं, कृतभस्मरेखापरिहारपरिकरे हरितगोमयो-

---

भाग्यमित्यर्थः । 'महाभाग्यांशतुर्यांशौ' इति वैजयन्ती(?) । पञ्च पुण्डरीकाणीति । एतेन पञ्चभिः पुरुषैः सम्भूय साध्यं किञ्चिदस्तीति सूच्यते ।

दाक्षिण्यं परच्छन्दानुवर्तित्वम् । लङ्घयितुं अनादर्तुमित्यर्थः । निघ्नः परवशः ।

समुच्छ्रितम् उपरिधृतम् । मातृगृहमुत्तरेण मातृगृहस्योत्तरभागे । 'एनपा द्वितीया' (पा० सू० २. ३. ३१.) । वाटिकाम् उद्यानम् ।

कार्पटिकपेटकस्य तीर्थयात्रिकसमूहस्य । अग्निकार्यं होमः । कृतभस्मरेखापरिहारपरिकरे परिहारो भूतानामप्रवेशार्थं रक्षा । परिकरः परिवेष्टनम् । कृतः

---

१. अतिक्रामितं- ।

**पलितक्षितितलवितते व्याघ्रचर्मण्युपविष्टं, कृष्णकम्बलप्रावरणव्याजेनासुरविवरप्रवेशाशया पातालान्धकारवासमिव अभ्यस्यन्तम्, उन्मिषता विद्युत्कपिलेन आत्मतेजसा महामांसविक्रयक्रीतेन मनःशिलापङ्केनेव शिष्यलोकं लिम्पन्तं, जटीकृतैकदेशलम्बमानरुद्राक्षगुलिकेन रचितमहाशङ्खचन्द्रकेणोर्ध्वबद्धेन शिखापाशेन बध्नन्तमिव विद्यालवावलेपदुर्विदग्धान् ऊर्ध्वं सञ्चरतः सिद्धान्, धवलकतिपयशिरोरुहेण शिरसा वयसा पञ्चाशतं वर्षाण्यतिक्रान्तं, खालत्यक्षीयमाणशङ्खलोमलेखं, क्लोमशकर्णशष्कुलीप्रदेशं, पृथुललाटतटं, तिरश्च्या भस्मत्रिपुण्ड्रललाटिकया बहुशः शिरोविधूतगुग्गुलुदहनसन्तापस्फुटितकपालास्थिपञ्जरराजिशङ्कामिव जनयन्तं, सहजललाटतटवलीभङ्गसङ्कोचितकूर्चभागं, बभ्रुभासा भ्रूसङ्गत्या निरन्तरायामिनीम् एकामिव भ्रूलतां बिभ्राणम्, ईषत्काचकाचरकनीनिकेन**

---

भस्मरेखया रचितः परिहारभूतः परिकरो यस्य । वितते आस्तीर्णे । महामांसं नरमांसं लक्ष्यते । मनश्शिला धातुविशेषः । रुद्राक्षगुलिकेन गुलिका (ഉണ്ട) गुलिकारुद्राक्षफलयुक्तेन इत्यर्थः । रचितमहाशङ्खचन्द्रकेण सम्बद्धमहाशङ्खकृतचन्द्रकेण । शिखापाशेन पाशाकारशिखया । धवलेत्यादि । एवंभूतेन शिरसा गच्छत्पञ्चाशद्वर्षमिव संलक्ष्यमाणमित्यर्थः । पञ्चाशतं वर्षाणि इति । अस्य सङ्ख्येये वर्तमानस्य पञ्चाशच्छब्दस्य वैजयन्तीकारेण— 'पङ्क्त्यादयः स्युः सङ्ख्यायां सङ्ख्येयेषु च वस्तुषु । सङ्ख्यायां द्व्येकबहुता सङ्ख्येयेषु सदैकता ॥' इत्येकवचनान्तत्वानुशासनादेकवचनं कृतमित्यनुसन्धेयम् । खालत्यं खलतिभावः (കഷണ്ടി) । शङ्खः ललाटास्थि । 'शङ्खो निधौ ललाटास्थि' इत्यमरः । कर्णशष्कुली कर्णवेष्टनं (ചെവിപ്പൂറ്റം) । 'वेष्टनं कर्णशष्कुली' इति **वैजयन्ती** । शिरोविधूतगुग्गुलुदहनं, गुग्गुलुदहनम् ईश्वरार्चनसमये धूपार्थं कृतमित्यनुसन्धेयम् । कूर्चभागः भ्रूमध्यम् । 'पीठे श्मश्रुणि कूर्चोऽस्त्री भ्रूमध्ये कत्थने कुशे' इति **वैजयन्ती** । बभ्रुभासा पिङ्गलवर्णया । सङ्गत्या एकीभावेन । ईषत्काचकाचरकनीनिकेन काचो वलयादिकरणयोग्या मृत्तिका (കുപ്പിമണ്ണ്) । काचरा कृष्णधूम्रवर्णा । 'काचरः कृष्णधूमलः' इति **वैजयन्ती** । कनीनिका तारका ।

**रक्तापाङ्गनिर्गतांशुप्रतानेन मध्यधवलभासा इन्द्रायुधेनेवातिदीर्घेण लोचनयुगलेन परितो महामण्डलमिव अनेकवर्णरागं लिखन्तम्, असितसितलोहितपीतपताकावलिशबलं शिवबलिमिव दिक्षु विक्षिपन्तं, तार्क्ष्यतुण्डकोटिकुटिलाग्रघोणं, दूरविदीर्णसृक्कसंक्षिप्तकपोलं, किञ्चिद्दन्तुरतया हृदयसन्निहितहरमौलिचन्द्रातपेनेव निर्गच्छता दन्तालोकेन धवलयन्तं दिशां चक्रवालं, जिह्वाग्रस्थितसर्वशैवसंहितातिभारेणेव मनाक्प्रलम्बितोष्ठं, प्रलम्बश्रवणपालीप्रेङ्खिताभ्यां स्फटिकमाणिक्यकुण्डलाभ्यां शुक्रबृहस्पतिभ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्धयानुबध्यमानं, बद्धविविधौषधिमन्त्रसूत्रपङ्क्तिना सलोहवलयेन प्रकोष्ठेन शङ्खखण्डं पूष्णो दन्तमिव भगवता भवेन भग्नं भक्त्या भूषणीकृतं कलयन्तम्, अखिलरसरूपोदञ्चनघटीयन्त्रमालामिव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तम्,**

---

काचवदीषत्काचरा कनीनिका यस्य इत्यर्थः। महामण्डलम् ऐन्द्रगारुडादिदेवतावाहनस्थानम्। तार्क्ष्यः गरुडः। तुण्डः चञ्चुः। यद्यपि 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यादिना निघण्टुकारोपदेशेन मुख एव तुण्डशब्दस्य वृत्तिर्दृष्टा, तथापि पक्षिजातेश्चञ्चुव्यतिरिक्तस्याननस्याभावादत्र नासिकायां वर्तते। दूरविदीर्णसृक्कसंक्षिप्तकपोलम् अतिमात्रभिन्नोष्ठप्रान्ततयाल्पावकाशकपालम् आस्यविशालतया सङ्कुचितकपोलम् इत्यर्थः। दन्तुरतया उन्नतदन्ततया। उन्नता दन्ता यस्येति। 'दन्त उन्नत उरच्' (पा० सू० ५. २. १०६.) इति उरचि कृते दन्तुर इति रूपम्। शैवसंहिता शैवशास्त्रम्। श्रवणपाली कर्णलता (കാതു്)। 'पालिस्तु कर्णलतिका' इति वैजयन्ती। ओषधिमन्त्रसूत्रम् ओषधयश्च मन्त्राभिमन्त्रितसूत्राणि च। सलोहवलयेन भूनागसारयुक्तं लोहमत्र विवक्षितम्। पूष्णो दन्तमित्यादि। भवेन भग्नमिति भक्तिः, न तु पूष्ण इदमिति। कलयन्तं धारयन्तम्। रसरूपः सिद्धरसयुक्तो रूपः। रसशब्देन विषयश्रद्धोच्यते इति केचित्। उदञ्चनम् उद्धरणम्। घटीयन्त्रं यन्त्रारूढघटी।

उरसि डोलायमानेन पिङ्गलाग्रेण कूर्चकलापेन सम्मार्जयन्तमिव अन्तर्गतं निजरजोनिकरम्, अतिनिबिडनीललोममण्डलनिचितं ध्यानलब्धेन ज्योतिषा दग्धमिव हृदयदेशं दधानम्, ईषत्प्रशिथिलवलीवलयबध्यमानतुन्दम्, उपचीयमानस्फिङ्मांसपिण्डकं, पाण्डरपवित्रक्षौमावृतकौपीनं, सावष्टम्भपर्यङ्कबन्धमण्डलितेन अमृतफेनश्वेतरुचा योगपट्टकेन वासुकिनेव अप्रतिहतानेकमन्त्रप्रभावाविर्भूतेन प्रदक्षिणीक्रियमाणम्, अरुणतामरससुकुमारतलस्य पादयुगलस्य निर्मलैः नखमयूखजालकैः जर्जरयन्तमिव महानिधानोद्धरणरसेन रसातलान्धकारं, तोयक्षालनशुचिना धवलपादुकायुगलेन हंसमिथुनेनेव भागीरथीतीर्थयात्रापरिचयागतेन अमुच्यमानचरणान्तिकं, शिखरनिखातकुब्जकालायसकण्टकेन च वैणवेन विशाखिकादण्डेन सर्वविद्यासिद्धिविघ्नविनायकापनयनाङ्कुशेनेव सततपार्श्ववर्तिना विराजमानम्, अबहुभाषिणं, मन्दहासिनं, पूर्वोपकारिणं, कुमारब्रह्मचारिणम्, अतितपस्विनं, महामनस्विनं, कृशक्रोधम् अकृशानुरोधं, महानगरमिव अदीनप्रकृतिशोभितं, मेरुमिव कल्पतरुपल्लवराशिसुकुमारच्छायं, कैलासमिव पशुपतिचरणरजःपवित्रितशिरसं, शिवलोक-

---

कूर्चं श्मश्रु। रजः रजोगुणः, धूलिरिति च। तुन्दम् उदरम्। स्फिक् कटीभागः। 'स्त्रियां स्फिचौ कटीप्रोथौ' इत्यमरः। कौपीनं गुह्यप्रदेशः। 'अकार्यगुह्ये कौपीनम्' इत्यमरः। पर्यङ्कबन्धः परिकरबन्धः ([illegible])। मण्डलितेन परिवेष्टितेन। (रसशब्दे दग्धं च चीवरम्?)। जर्जरयन्तं शिथिलयन्तम्। रसातलं बस्तकम्। पादुका दारुकृतोपानत् (मरवडि)। अमुच्यमानेति छेदः। कुब्जः वक्रः। कालायसकण्टकः अयोनिर्मितशङ्कुः। [1]विशाखिकादण्डेन रुद्राङ्कुशेन। सर्वविद्यासिद्धिविघ्नविनायकापनयनाङ्कुशेन सर्वविद्यानां सिद्धेर्विघ्नस्य विघ्नभूतस्य विनायकस्यापनयनार्थेन अङ्कुशेन। विद्यासिद्धिविघ्नापनयनाय विनायकाङ्कुशेनेति च पाठः। अदीनप्रकृतिः गम्भीरस्वभावः। अन्यत्र अक्षीणमौलजनः। राशिसुकुमारच्छायं राशिवत् सुकुमारतेजसम्। अन्यत्र राशेः

---

१. विशाखिकादण्डः=கப்பித்தண்டு—क

मिव माहेश्वरगणानुयातं, जलनिधिमिव अनेकनदनदीसहस्रप्रक्षालित-शरीरं, जाह्नवीप्रवाहमिव बहुपुण्यतीर्थस्नानशुचिं, धाम धर्मस्य, तीर्थं तथ्यस्य, समाजं सौजन्यस्य, संभवं सद्भावस्य, प्रभवभवनं प्रभावस्य, कोशं कुशलस्य, पत्तनं पूततायाः, शालां शीलस्य, क्षेत्रं क्षमायाः, शरणं शालीनतायाः, स्थानं स्थितेः, आधारं धृतेः, आकरं करुणायाः, निकेतनं कौतुकस्य, आरामं रामणीयकस्य, प्रासादं प्रसादस्य, अगारं गौरवस्य, कालं कलेः, भगवन्तं साक्षादिव विरूपाक्षं भैरवाचार्यं ददर्श।

भैरवाचार्यस्तु दूरादेव दृष्ट्वा राजानं शशिनमिव जलनिधिः चचाल। प्रथमतरोत्थितशिष्यलोकश्च उत्थाय प्रत्युज्जगाम। समर्पित-श्रीफलफलोपायनश्च जह्नुसमुदीर्यमाणगङ्गाप्रवाहनिर्ह्रादगम्भीरया गिरा स्वस्तिशब्दमकरोत्।

नरपतिरपि प्रीतिविस्तार्यमाणधवलिम्ना चक्षुषा प्रत्यर्पयन्निव बहुतराणि पुण्डरीकवनानि ललाटपट्टपर्यस्तेन उदंशुना शिखामणिना महेश्वरप्रसादमिव तृतीयनयनोद्गमेन प्रकाशयन् आवर्जितकर्णपल्लवपलाय-मानमधुकरः शिवसेवासमुन्मूलिताशेषपापमललवमुच्यमान इव दूरावनतः, प्रणाममभिजातमकरोत्। भैरवाचार्योऽपि 'आगच्छ तात! अत्रोपविश' इति शार्दूलचर्म आत्मीयमदर्शयत्। उपदर्शितप्रश्रयस्तु राजा मत्तकलहंस-गद्गदस्वरसुभगाम् मधुरसमयीम् महानदीमिव प्रवर्तयन् वाचं व्याजहार।

---

सुकुमारशोभायुक्तम्। माहेश्वरगणः महेश्वरदैवतकानां समूहः। अन्यत्र महेश्वर-सम्बन्धी भूतगणः। बहुपुण्यतीर्थस्नानशुचिं बहुपुण्येषु प्रशस्तेषु तीर्थेषु स्नानेन शुचिम्। अन्यत्र बहुषु पुण्येषु प्रयागादितीर्थेषु स्नानेन तु स्नातानां शुचिं पावनम्। 'शुचिर्मेध्यं पवित्रं च पुण्यं पावनमुच्यते' इति हलायुधः। तीर्थं योनिम्। कोशं गृहम्। पत्तनं नगरम्। शाला गृहम्। क्षेत्रम् उत्पत्तिस्थानम्। शरणं गृहम्। शालीनताया अधृष्टतायाः। कौतुकस्य कुतूहलविषयताया इत्यर्थः। मङ्गलस्येति वा। 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले। कामे ख्याते मङ्गले च' इति वैजयन्ती। कालं मृत्युम्।

श्रीफलं बिल्वफलम्। निर्ह्रादः ध्वनिः।

आवर्जितं अवाक्षिप्तम्। अभिजातं सविनयम्। गद्गदस्वरसुभगां

'भगवन्! नार्हसि मामन्यनृपतिस्खलितैः खलीकर्तुम्। अशेषराजकोपेक्षिताया हतलक्ष्म्याः खल्वयं शीलापराधः द्रविणदौरात्म्यं वा, यदेवमाचरति मयि गुरुः। अभूमिः खल्वयमुपचाराणाम्। अलम् अतियन्त्रणया। दूरस्थितोऽपि मनोरथशिष्योऽयं जनो भगवतः। माननीयं च गुरुवचनम्। नोल्लङ्घनमर्हति गुरोरासनम्। आसतामत्रभवन्त एवात्र' इति व्याहृत्य परिजनोपनीते वाससि निषसाद। भैरवाचार्योऽपि प्रीत्यानतिक्रमणीयं नृपवचनमनुवर्तमानः पूर्ववत् तदेव व्याघ्राजिनम् अभजत।

आसीने च सराजपरिजने शिष्यवर्गे, समुचितमर्घ्यादिकं चक्रे। क्रमेण च नृपमाधुर्यहृतान्तःकरणः शशिकरविमलाः दशनदीधितीः स्फुरन्तीः साक्षाच्छिवभक्तिरिव दर्शयन्नुवाच— 'तात! अतिनम्रतैव ते गुणानां कथयति गौरवम्। सकलसम्पत्पात्रमसि। विभवानुरूपास्तु प्रतिपत्तयः। जन्मनः प्रभृति अदत्तदृष्टिरस्मि स्वापतेयेषु। यतः सकलदोषकलापानलेन्धनैर्धनैरविक्रीतं क्वचिच्छरीरकमस्ति। भैक्षसंरक्षिताः सन्ति प्राणाः। दुर्गृहीतानि कतिचिद् वर्तन्ते विद्याक्षराणि। भगवच्छिवभट्टारकपादसेवासमुपार्जिता कियत्यपि सन्निहिता पुण्यकणिका।

---

गद्गदस्वरवत् सुभगाम्। राजकोपेक्षितायाः, अस्याः क्षुद्रस्वभावतयेति भावः। द्रविणं[1] धनम्। अतियन्त्रणया अत्यादरेण। उल्लङ्घनम् आक्रमणम्।

अतिनम्रता अत्यनुकूलता। स्वापतेयेषु अर्थेषु। धनैरविक्रीतं धनैः कर्तृभिः अविक्रीतम्। अधनपरवशमित्यर्थः। शरीरकं कप्रत्ययोऽश्रद्धेयताद्योतनार्थं प्रयुक्तः। भैक्षं भिक्षान्नम्, भिक्षासमूहो वा। भगवच्छिवभट्टारकः— मूलशिवतत्त्वादर्वाचीना आचार्यमूर्तयोऽनेकशिवाः सन्ति इत्यागमविदः। तेषु भट्टारकाद्यो लौकिकाचार्योपचारशब्दाश्च प्रयुज्यन्ते[2]। एवमत्रापि 'शिवभट्टारक' इति नाम कृतम्। भगवच्छब्दोऽस्यैश्वर्यादियोगदर्शकतया प्रयुक्तः प्रशंसावचनः।

---

१. 'णं अर्थः', २. 'न्ते। अत एवात्रापि शिवस्य शिव'-क.

स्वीक्रियतां यदत्रोपयोगार्हम्। प्रतनुगुणलवग्राह्याणि कुसुमानीव भवन्ति मनांसि सताम्। अपि च विद्वत्सम्मताः श्रूयमाणा अपि शब्दा इव सुखयन्ति साधवः। सुधीरेऽपि मनसि यशांसि कुर्वन्ति विवरम्। विशेषतः कुतूहलस्य। फेनधवलैः स्रोतोभिरिव ह्रियमाणो गुणगणै-रानीतोऽस्मि कल्याणिनः' इति।

राजा तु तं प्रत्यवादीत्—'भगवन्! अनुक्तेऽपि साधूनां शरीरादौ स्वामिन एव प्रणयिनः। युष्मद्दर्शनाद् उपार्जितमेव अपरिमितं पुण्य-जातम्। कृतमनेनैवागमनेन, स्पृहणीयं पदमारोपितोऽस्मि गुरुणा' इति। विविधाभिश्च कथाभिः सुचिरं स्थित्वा गृहमगात्।

अन्यस्मिन् दिवसे भैरवाचार्योऽपि राजानं द्रष्टुमुपाययौ। तस्मै राजा सान्तःपुरं सपरिजनं सकोशमात्मानं निवेदितवान्। स विहस्य उवाच—'तात! क्व विभवाः, क्व वयं वनवर्धिताः। धनोष्मणा म्लायति लतेव मनस्विता। खद्योतानामिवेयमेव अस्माकमपरोपतापिनी[1] तेजस्विता।

---

गुणलवग्राह्याणि विद्वत्तादिगुणैकदेशस्वीकरणीयानि। अन्यत्र सूत्रैकदेशबन्ध-नीयानीत्यर्थः। विद्वत्सम्मताः विद्वद्भिरादृताः। अन्यत्र विद्वद्भिः सम्यक् ज्ञाताः। 'मन ज्ञाने' इति धातुः। श्रूयमाणाः दूरत एवाकर्ण्यमानाः। अन्यत्र श्रवणगोचरतां गच्छन्तः। साधवः गुणवन्तः, अनपभ्रंशाश्च। फेनधवलैः फेनेन धवलैः, फेनवद्धवलैश्च। ह्रियमाणः आवर्ज्यमानः। कल्याणिनस्तवैवेति शेषः।

अनुक्तेऽपीत्यादि। साधूनामनुक्तेऽपि शरीरादौ तद्विषये प्रणयिनोऽर्थिन एव स्वामिनः। साधूनां शरीरादिकम् अर्थिनां स्वाधीनमेवेत्यर्थः। कृतं पर्याप्तम्। गुरुणा त्वयेति शेषः।

सकोशं सधनम्। निवेदितवान् दत्तवान्। धनोष्मणा धननिमित्त-जातेन गर्वेण इत्यर्थः। ऊष्मशब्देन उष्णं च विवक्षितम्। परोपतापिनी परेषामुपक्लेशकरी, परेषां परं तापकरी च। तेजस्विता प्रभाववत्ता, दीप्तिमत्ता च।

---

[1] 'अपरोपतापिनी परेषामक्लेशकरी परेषामसन्ताप'–ख.

भवादृशा एव भाजनं विभूतेः' इति। स्थित्वा कञ्चित्कालं जगाम।

परिव्राट् तु तेनैव क्रमेण पञ्च राजतानि पुण्डरीकाणि उपायनीचकार। एकदा तु श्वेतकर्पटावृतं किमप्यादाय प्राविशत्। उपविश्य च पूर्ववत् स्थित्वा मुहूर्तमब्रवीत्— 'महाभाग! भवन्तमाह भगवान्। यथा अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणायनः। तेन ब्रह्मराक्षसहस्तादपहृतो महासिः अट्टहासनामा। सोऽयं भवद्भुजयोग्यो गृह्यताम्' इत्यभिधाय अपनीतकर्पटाच्छादनात् परिवाराच्चाकृष्य शरद्गगनतलमिव पिण्डतां नीतं, कालिन्दीप्रवाहमिव स्तंभितजलं, नन्दकजिगीषया कृष्णकोपितं कालियमिव कृपाणतां गतं, लोकविनाशाय प्रकाशितधारासारं प्रळयकालमेघखण्डमिव नभस्तलात् पतितं, दृश्यमानविकटदन्तमण्डलं हासमिव हिंसायाः, हरिबाहुदण्डमिव कृतदृढमुष्टिकग्रहणं, सकलभुवनजीवितापहरणक्षमेण कालकूटेनेव निर्मितं, कृतान्तकोपानलतप्तेनेवायसा घटितं, सुतीक्ष्णतया पवनस्पर्शेनापि रुषेव क्वणन्तं, मणिसभाकुट्टिमपतत्प्रतिबिम्बच्छलेनात्मानमपि द्विधेव पाटयन्तम्, अरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारं, मुहुर्मुहुस्तडिदुन्मेषतरलैः प्रभाचक्रस्फुरितैः जर्जरितातपं खण्डशश्छिन्दन्तमिव दिवसं, कटाक्षमिव कालरात्रेः, कर्णोत्पलमिव कालस्य, उद्गारमिव कोपस्य, अलङ्कारमिव

---

तेनैव क्रमेण दीनप्रकारेण(?)। कर्पटं वस्त्रम्। ब्राह्मणायनः ब्राह्मणपुत्रः। अस्तीति शेषः। परिवारात् कोशात्(ब्१०)। नन्दकः विष्णुखड्गः। प्रकाशितधारासारं प्रकाशितो धाराया आस्यस्य सारः स्थैर्यं यत्र। अन्यत्र प्रकाशितधारः प्रकाशितजलसन्ततिः आसारः महावर्षः यस्य। विकटदन्तमण्डलं पृथुदन्तकृतं मूलफलकम्। अन्यत्र विकटदशनसमूहम्। कृतदृढमुष्टिकग्रहणं कृतं दृढेन मुष्टिकेन मुष्ट्या ग्रहणं यस्य। अथवा गृह्यतेऽत्रेति ग्रहणं, कृतं दृढमुष्टिकस्य मुष्टेर्ग्रहणस्थानं यस्य। अन्यत्र मुष्टिकः कश्चिदसुरः। तीक्ष्णतया निशिततया, क्रूरस्वभावतयेति च। स्पर्शेन सम्पर्केण, स्पृष्ट्या च। पाटयन्तं छिन्दन्तम्। करालितं दन्तरितं। कालरात्रेः

अहङ्कारस्य, कुलमित्रं शौर्यस्य, दोहलं दर्पस्य, सुसहायं साहसस्य, अमात्यं मृत्योः, आगमनमार्गं लक्ष्म्याः, निर्गमनमार्गं कीर्तेः, कृपाणम् अदात् ।

अवनिपतिस्तु तं गृहीत्वा करेणायुधप्रीत्या प्रतिमानिभेनालिङ्गन्निव सुचिरं ददर्श । सन्दिदेश च— 'वक्तव्यो भगवान् परद्रविणग्रहणावज्ञादुर्विदग्धमपि मे मनो युष्मद्विषये न शक्नोति वचनव्यतिक्रमव्यभिचारमाचरितुम्' इति । परिव्राट् तु गृहीतेऽस्मिन् परितुष्टः 'स्वस्ति भवते । साधयामि' इत्युक्त्वा निरयासीत् । नृपश्च शूरः प्रकृत्या वीररसानुरागी तेन कृपाणेनामन्यत करतलवर्तिनीं मेदिनीम् ।

अथ व्रजत्सु दिवसेषु एकदा तु भैरवाचार्यो राजानमुपह्वरे सोपग्रहमवादीत्— 'तात! स्वार्थालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानाम् । भवादृशानामर्थिदर्शनं महोत्सवः, प्रणयनमाराधनम् अर्थग्रहणमुपकारः । भूमिरसि सर्वलोकमनोरथानां, येनाभिधीयसे । श्रूयतां— भगवतो महाकालहृदयनाम्नो महामन्त्रस्य कृष्णस्रगम्बरानुलेपनेन आकल्पेन कल्पकथितेन महाभैरवव्रतेन महाश्मशाने जपकोट्या कृतपूर्वसेवोऽस्मि । तस्य च वेताळसाधनावसाना कार्यसिद्धिः । असहायैश्च सा दुरवापा । त्वं च अलमस्मै कर्मणे । त्वयि च गृहीतभरेऽपरेऽपि भविष्यन्ति

---

चण्ड्याः । उद्गारम् उद्गिरणम् । [1]दोहलं कौतुकविषयमित्यर्थः (കൗതുകം) । साहसस्य हठात्कारस्य ।

व्यतिक्रमव्यभिचारम्, व्यतिक्रमः पापकर्म । साधयामि गच्छामि ।

उपह्वरे रहसि । सोपग्रहं सानुकूलम् । स्वार्थालसाः स्वकार्यतात्पर्यहीनाः । प्रणयनं याच्ञा । आराधनं तोषणम् । भूमिरित्यादि । सर्वलोकमनोरथानां भूमिरसि येन, स्थानमसीति यत् । यतोऽभिधीयस इत्यर्थः । भगवत इति मन्त्रस्योपचार[2]प्रयोगः । आकल्पेन उपलक्षितः । कल्पः वि[3]धायकग्रन्थः (വിധാനം) । पूर्वसेवा पुरश्चरणम् । साधना निग्रहः । अलमस्मै अस्मिन् कर्मणि ।

---

१. दोहलं=കൗതുകം, २. 'रशब्दः', ३. 'विधानग्रन्थः'—क.

सहायास्त्रयः। एकः स एवास्माकं बालमित्रं टिट्टिभनामा मस्करी, यो भवन्तमुपतिष्ठते। द्वितीयः पातालस्वामी। अपरो मच्छिष्य एव कर्णतालनामा द्रमिडः। यदि वा साधु मन्यसे ततो दीयतामयं विङ्नागहस्तदीर्घो गृहीताट्टहासो निशामेकामेकदिङ्मुखार्गलतां बाहुः' इति। कृतवचसि तस्मिन्, अन्धकारप्रविष्ट इव दृष्टदीपप्रकाशः प्राप्तो-पकारावकाशः प्रमुदितोऽन्तरात्मना नरेन्द्रः समभाषत— 'भगवन्! परमनुगृहीतोऽस्मि। अनेन शिष्यजनसामान्यनिर्देशेन कृतपरिग्रहमिव आत्मानमवैमि' इति। ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्यः। चकार च सङ्केतम्— 'आगामिन्यामस्यामेव असितपक्षचतुर्दशीक्षपायाम् अस्यामेव वेलायाममुष्मिन् महाश्मशानसमीपभाजि शून्यायतने शस्त्र-द्वितीयेनायुष्मता द्रष्टव्या वयम्' इति।

अथातिक्रान्तेष्वहःसु प्राप्तायां कृष्णचतुर्दश्यां शैवेन विधिना दीक्षितः क्षितिपालो नियमवानभूत्। कृताधिवासनं च सम्पादित-गन्धधूपमाल्यादिपूजं खड्गमट्टहासमकरोत्। ततः परिणते दिवसे केनापि कर्मसाधनाय कृतविविधरुधिरबलिविधानास्विव लोहिताय-मानासु दिक्षु, रुधिरबलिलम्पटासु वेतालजिह्वास्विव लम्बमानासु रवि-दीधितिषु, नरेन्द्रानुरागेण गृहीतापरदिशि स्वयमेव दिक्पालतां चिकीर्षति सवितरि, यातुधानीष्विव वर्धमानासु तरुच्छायासु, पातालवासिषु

---

उपतिष्ठते सङ्गच्छते। द्रमिडः द्रमिडदेशजातः। 'दीयतामिति पाठः। निशामेकां 'कालाध्वनोरत्यन्तसंयोगे' (पा० सू० २. ३. ५.) इति द्वितीया। सङ्केतं समयम्। अमुष्मिन्निति शब्देन पूर्वोक्तं सरस्वतीतीरगतं शून्यायतनं विवक्षितम्।

शैवेन शैवागमोक्तेन। विधिना कल्पेन। दीक्षितः गृहीतव्रतः। भैरवा-चार्यादिति शेषः। नियमवान् व्रतवान्। कृताधिवासनं मन्त्रसंस्कारेण कृतस्थापनम्।

---

१. 'नीयतां'-क.

विघ्नाय दानवेष्विव उत्तिष्ठत्सु तमोमण्डलेषु, नभसि पुञ्जीभवति, रौद्रं कर्म दिदृक्षमाण इव नक्षत्रगणे, विगाढायां शर्वर्यां, सुप्तजनस्तिमिते निशीथे, राजा सान्तःपुरं परिजनञ्च वञ्चयित्वा वामकरस्फुरत्फलको दक्षिणेन करेणोत्खातं खड्गमट्टहासमादाय, विसर्पता खड्गप्रभापटलेन नीलांशुकेनेव दर्शनभयादवकुण्ठितनिखिलगात्रयष्टिः अनादिष्टयाप्यनुगम्यमानो राजलक्ष्म्या पृष्ठतः परिमललग्नमधुकरवेणिव्याजेन केशेष्विव कर्मसिद्धिम् आकर्षन्नेकाकी नगरात् निरगात् । आगाच्च तं देशम् ।

अथ प्रत्युज्जग्मुस्ते त्रयोऽपि द्रौणिकृपकृतवर्माण इव सौप्तिके युद्धे, सन्नद्धाः स्नाताः स्रग्विणो गृहीतविकटवेषाः कुसुमशेखरसञ्चारिभिः क्रियमाणमन्त्रशिखाबन्धा इव गुञ्जद्भिः षट्चरणैः, उष्णीषपट्टकान् ललाटपट्टघटितविकटस्वस्तिकग्रन्थीन् महामुद्राबन्धानिव धारयन्तो मूर्धभिः, एकश्रवणविततविमलदन्तपत्रप्रभालोकालेपधवलितकपोलैः मुखैरापिबन्त इव निशाचरापचयचिकीर्षया शार्वरमन्धकारम्, इतरकर्णावलम्बिनां रत्नकुण्डलानामच्छाच्छया रुचा रोचनयेव मन्त्रपरिजप्तया समालब्धाः,

---

विगाढायां परिणतायाम् । फलकं चर्म (കടക°) । उत्खातं परिवारादाकृष्टम् । वेणिः आवलिः ।

सौप्तिकं सुप्त्यवस्थायां क्रियमाणं कर्म । अन्यत्र रात्रौ परबलवधः । 'अवस्कन्दः प्रपातश्च सौप्तिकश्च निगद्यते' इति हलायुधः । मन्त्रशिखाबन्धा इति । प्राणिषु कृतावेशानां भूतानां निरसनसमयेषु मन्त्रवादिना तैः स्वस्यानभिभवाय मन्त्राणां जपेन निजकेशेषु शिखाकारेण कृतं बन्धनं मन्त्रशिखाबन्धशब्देनोच्यते । स्वस्तिकग्रन्थीन् स्वस्तिकबन्धान् (പുള്ളിക്കെട്ട്) । मुद्राबन्धान् तन्त्रोक्ता बन्धनविशेषाः मुद्राबन्धशब्देनोच्यन्ते । (रचितं सम्बद्धम् ?) । अपचयः क्षयः । मन्त्रजप्तया[2] स्पृष्ट्वा कृतेन मन्त्रजपेनाहितसंस्कार इत्यर्थः । समालब्धाः कृतविलेपनाः ।

---

१. കടക‌ २. जपितया-क.

स्वप्रतिबिम्बगर्भान् कर्मसिद्धये दत्तपुरुषोपहारानिव कलयन्तो निशितान् निस्त्रिंशान्, निस्त्रिंशरश्मिसन्तानसीमन्तिततिमिराम् आत्मीयदिग्विभाग-संरक्षणाय त्रिधेव त्रियामां पाटयन्तः, सार्धचन्द्रैः कलधौतबुद्बुदावली-तरलतारागणैः दिव इव परुषासिधारानिकृत्तैः खण्डैः गृहीतैः चर्मफलकैः अकाण्डशर्वरीपरम्परां घटयन्तः, काञ्चनशृङ्खलाकलापनियमितनिबिड-निष्प्रवाणयो बद्धासिधेनवः टिट्टिभकर्णतालपातालस्वामिनः निवेदितवन्त-श्चात्मानम् ।

अवनिपतिस्तु 'कोऽत्र क' इति त्रीनप्यपृच्छत् । आचचक्षिरे च स्वं स्वं नाम त्रयोऽपि ते । तैरेवानुगम्यमानो जगाम तां बलिप्रदीपालोक-जर्जरिततिमिरां गुग्गुलुधूपगृह्यमाणदिग्विभागतया विक्षिप्यमाणरक्षासर्ष-पार्धजग्धान्धकारपलायमाननिशामिव समुपकल्पितसर्वोपकरणां निश्शब्दां च गम्भीरां च भीषणां च साधनभूमिम् ।

तस्यां च कुमुदधूलिधवलेन भस्मना लिखितस्य महतो मण्डलस्य मध्ये स्थितं दीप्ततरतेजःप्रसरं पृथुपरिवेषपरिक्षिप्तमिव शरत्सवितारं मथ्यमानक्षीरोदावर्तवर्तिनमिव मन्दरं रक्तचन्दनानुलेपिनो रक्तस्रगम्बरा-

---

पुरुषोपहारान् पुरुषान् हत्वा तैः कृतबलीन् । सार्धचन्द्रैः अर्धचन्द्राकाराभरण-विशेषैः सहितैः । अन्यत्र अर्धेन्दुसहितैः । कलधौतं रजतम् । बुद्बुदावली-तरलतारागणैः । बुद्बुदशब्देन जलबुद्बुदाकारा आभरणविशेषा लक्ष्यन्ते । तेषामा-वल्य एव तरला दीप्ताः तारागणा येषाम् । अन्यत्र बुद्बुदावलिवत् तरलतारा-गणैः । परुषं तीक्ष्णम् । चर्मफलकैः चर्मबन्धफलकैः (തോൽകടകം[1]) । घटयन्तः उत्पादयन्तः । शृङ्खलाकलापः पुंस्कटीषु बध्यमान आभरणविशेषः । 'पुंस्कट्यां शृङ्खलं त्रिषु' इत्यमरः । निष्प्रवाणिः नवाम्बरम् । 'अनाहतं निष्प्रवाणिस्तन्त्रकं च नवाम्बरम्[2]' इत्यमरः । असिधेनुः छुरिका (ചുരിക[3]) ।

जर्जरितं जीर्णम् । जग्धं भक्षितम् ।

---

१. தோல்கட்டு, २. 'नववस्त्रं', ३. யந்திரம்-கம்

भरणस्य उत्तानशयितस्य शवस्योपर्युपविश्य जातजातवेदसि मुखकुहरे प्रारब्धाग्निकार्यं कृष्णोष्णीषं कृष्णाङ्गरागं कृष्णप्रतिसरं कृष्णवाससं कृष्णतिलाहुतिनिभेन विद्याधरत्वतृष्णया मानुष्यकनिर्माणकारणकालुष्य-परमाणूनिव क्षयमुपनयन्तम्, आहुतिदानपर्यस्ताभिः प्रेतमुखस्पर्शदूषितं प्रक्षाळयन्तमिवाशुशुक्षणिं करनखदीधितिभिः, धूमालोहितेन चक्षुषा क्षतजा-हुतिमिव हुतभुजि पातयन्तम्, ईषद्विवृताधरपुटप्रकटितसितदशनशिखरेण दृश्यमानमूर्तमन्त्राक्षरपङ्क्तिनेव मुखेन कमपि जपन्तं, होमश्रमस्वेद-सलिलप्रतिबिम्बिताभिः आसन्नदीपिकाभिर्दहन्तमिव सिद्धये सर्वावयवान्, अंसावलम्बिना बहुगुणेन विद्याधरराज्येनेव ब्रह्मसूत्रेण परिगृहीतं महाभैरवं भैरवाचार्यमपश्यत्। उपसृत्य चाकरोन्नमस्कृतिम्। अभि-नन्दितश्च तेन स्वं व्यापारमन्वतिष्ठत्।

अत्रान्तरे पाताळस्वामी शातमन्यवीम् आशामङ्गीचकार। कर्ण-तालः कौबेरीम्। परिव्राट् प्राचेतसीम्। राजा तु ज्योतिषा त्रैशङ्क-वेनाङ्कितां ककुभमलञ्चकार।

एवं चावस्थितेषु प्रतिदिशं दिक्पालेषु, दिक्पालभुजपञ्जरप्रविष्टे विस्रब्धं साधयति कर्म भैरवं भैरवाचार्ये, चिरतरकृतकोलाहलेषु प्रशान्तेषु प्रत्यूहकारिषु निष्फलप्रयत्नेषु कौणपेषु, गळत्यर्धरात्रसमये, मण्डलस्य नातिदवीयसि उत्तरेणाकस्मादेव प्रळयमहावराहदंष्ट्राविवरमिव दर्शयन्ती

---

उत्तानशयितस्य शवस्य मुखकुहरे आस्यरन्ध्रे प्रारब्धाग्निकार्यं कृतहोमम्। प्रतिसरः हस्तसूत्रम् (क०४१०)। मानुष्यकं मनुष्यत्वम्। कालुष्यं पापम्। क्षतजं रक्तम्। बहुगुणेन बहुसूत्रेण। अन्यत्र गुणशब्देन अणिमादयोऽष्टगुणा विवक्षिताः। महाभैरवं अतिभयङ्करम्।

शातमन्यवीम् ऐन्द्रीम्।

विस्रब्धं स्थिरम्। 'विस्रब्धः स्थिर उच्यते' इति हलायुधः। कौणपेषु राक्षसेषु। 'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः' इत्यमरः।

---

१. 'क्रूराकारम्'-क.

क्षितिरदीर्यत सहसैव। तस्माद् विवरादाशावारणोत्क्षिप्त इवालानकाल-लोहस्तम्भः, *महावराह इव पीवरस्कन्धपीठः, नरकासुर इव भुवो गर्भाद् उद्भूतः, बलिदानव इव भित्त्वोत्थितः पातालम्, इन्द्रनीलप्रासाद इवो-परिज्वलितरत्नप्रदीपः, स्निग्धनीलघननिबिडकुटिलकुन्तलकान्तमौलिः उन्मीलन्मालतीमुण्डमालो, गद्गदतया स्वरस्य स्वभावलोहिततया चक्षुषः क्षीब इव यौवनमदेन वल्गनचलद्गलदामकः करसम्पुटमृदितया मृदा दिङ्नागकुम्भविकटावंसकूटौ पुनःपुनः पङ्कयन्, सान्द्रचन्दनकर्दमदत्तैः अव्यवस्थस्थासकैः सितजलधरशकलशारित इव शरदाकाशैकदेशः, केतकीगर्भपाण्डरस्य चण्डातकस्योपरि क्षामतरीकृतकुक्षिः, कक्ष्याबन्धं विधाय विलासविक्षिप्तेन धवलव्यायतेन पालीपटान्तेन धरणितलगतेन धार्यमाण इव पृष्ठतः शेषेण, स्थिरस्थूलोरुदण्डो भूमिभङ्गभयेनेव मन्थराणि स्थापयन् पदानि, निर्भरगर्वगुरु कथमपि शैलमिव गात्रमुद्वहन्, दर्पेण स्वे मुहुर्मुहुरुरसि द्विगुणीकृते दोष्णि वामे, तिर्यगुत्क्षिप्ते च दक्षिणे जङ्घाकाण्डे कुण्डलीकृते चण्डास्फोटनटङ्कारैः कर्मविघ्ननिर्घातानिव पातयन्

---

अदीर्यत भिन्नाभूत्। आशावारणः दिग्वारणः, दिग्गजः। आलानकाललोहस्तम्भः आलानभूतायःस्तम्भः (आलानं ७१)। महावराहपीवरस्कन्धपीठः महावराहवत् पीवरस्कन्धपीठः। महावराहस्य पीवरस्कन्धपीठ इव पीवरस्कन्धपीठो यस्य इत्यर्थः। उपरिज्वलितरत्नप्रदीपः शिरसि ज्वलितरत्नमेव प्रदीपो यस्य। एतच्च सर्पत्वा-दित्यनुसन्धेयम्। अन्यत्र उपरिज्वलिता रत्नतुल्याः प्रदीपा यस्य। उन्मीलद् विकसत्। क्षीबः मत्तः। वल्गनं नर्तनम्। गलदाम कण्ठमाला। करसम्पुटः करोदरः। कुम्भविकटौ कुम्भवदुन्नतौ। पङ्कयन् पङ्कयुक्तीकुर्वन्। दत्तैः सम्पादितैः। अव्यवस्थस्थासकैः विषमहस्तबिम्बैः। कक्ष्याबन्धं गुह्यपिधानम्। पालीपटान्तेन पालीयुक्तेन पटान्तेन। (पाली ८००)। 'व्यायतपालिना पटान्तेन' इति च पाठः। मन्थराणि अनतिद्रुतानि। दोष्णि भुजे। दोस्शब्दस्य सप्तम्येकवचने 'पद्दन्नोमास्' पा० सू० (६. १. ६३.) इत्यादिना दोषन्नादेशे कृते रूपम्। कुण्डलीकृते द्विगुणीकृते। आस्फोटनं प्रहारः (८४१७७३७)। कर्मविघ्न-

---

*'महावराहपीवरस्कन्धपीठ' इति व्याख्यानुसारी पाठः।

एकेन्द्रियविकलमिव जीवलोकं कुर्वन्, कुवलयदलश्यामलः पुरुष उज्जगाम। जगाद च विहस्य नरसिंहनादनिर्घोषघोरया भारत्या— 'भो विद्याधरी-(भा)वश्रद्धाकामुक! किमयं विद्यालवावलेपः सहायमदो वा, यदस्मै जनाया-विधाय बलिं बालिश इव सिद्धिमभिलषसि। का ते दुर्बुद्धिः। अयमेतावता कालेन क्षेत्राधिपतिरस्य मन्नाम्नैव लब्धव्यपदेशस्य देशस्य नागतस्ते श्रोत्रोपकण्ठं श्रीकण्ठनामा नागोऽहम्। अनिच्छति च मयि का शक्तिर्ग्रह-गणस्यापि गगने गन्तुम्। भूतनाथोऽप्ययमनाथस्तपस्वी, यतस्त्वादृशैः शैवापशदैरुपकरणीक्रियते। लभस्वेदानीं सहामुना नरेन्द्रेण दुर्नरेन्द्र! स्वस्य तावद् दुर्नयस्य फलम्' इत्यभिधाय निष्ठुरैः प्रकोष्ठपृष्ठप्रहारैः त्रीनपि टिट्टिभप्रभृतीन् अभिमुखप्रधावितान् सशरावरणकृपाणानपातयत्।

अथापूर्वाधिक्षेपश्रवणादरिशस्त्रव्रणैरपि अमर्षस्वेदच्छलेन अनेक-समरपीतमसिधाराजलमिव वमद्भिरवयवैरपि रोमाञ्चनिभेन मुक्तशरशत-शल्यनिकरभरलघुमिवात्मानं रणाय कुर्वद्भिः अट्टहासेनापि प्रतिबिम्बित-तारागणेन स्पष्टदृष्टधवलदन्तमण्डलेनावज्ञया हसतेव कथ्यमानसत्त्वा-वष्टम्भः परिकरबन्धविभ्रमभ्रमितकरनखकिरणचक्रवालच्छलेन व्यपगमा-शङ्कया नागदमनमन्त्रमण्डलेनेव रुन्धन् दश दिशो नरनाथः सावज्ञम्

---

निर्घातान् कर्मविघ्नार्थं निर्घातान् अशनीन् (शङ्करार्यः०)। एकेन्द्रियविकलम्— अत्र इन्द्रियशब्देनास्फोटनप्रस्तावनया श्रोत्रेन्द्रियं विवक्षितम्। श्रद्धाकामुक! स्वेच्छामात्राभिनिवेशक!। बालिशः अज्ञः। क्षेत्राधिपतिरित्यादि क्षेत्रा-धिपतयः सप्त विषाभिमानिन्यो देवताः[1]। तेष्वहम् अस्य देशस्य क्षेत्रा-धिपतिरित्यर्थः। व्यपदेशः संज्ञा। अनाथः अशिक्षकः। तपस्वी शोच्यः। शैवापशदैः निहीनशैवैः। 'निहीनोऽपशदो जाल्मः' इति सिंहः। 'लभस्वे-दानीम्' इति पाठः। दुर्नरेन्द्र दुर्मन्त्रवादिन्। 'नरेन्द्रौ नृपवादिनौ'[2] इति हलायुधः। वादिशब्देन मन्त्रवाद्युच्यते। शरावरणं शरा आव्रियन्तेऽनेनेति शरावरणं फलकं (कटकः०)।

अधिक्षेपः भर्त्सनम्। विभ्रमः भ्रमणम्। नागदमनमन्त्रमण्डलेन गारुड-

---

१. 'मः तत्तद्देशाभिमानिन्यो'—क. २. 'नृपवार्तिकौ' मुद्रितपाठः.

अवादीत्— 'अरे काकोदर काक! मयि स्थिते राजहंसे न जिह्रेषि बलिं याचितुम्। अमीभिः किं वा परुषभाषितैः। भुजे वीर्यं निवसति सतां, न वाचि। प्रतिपद्यस्व शस्त्रम्। अयं न भवसि। अगृहीतहेतिषु अशिक्षितो मे भुजः प्रहर्तुम्' इति। नागस्तु अनादततरम् 'एहि किं शस्त्रेण, भुजाभ्यामेव भिनद्मि भवतो दर्पम्' इत्यभिधाय आस्फोटयामास। नरपतिस्तु निरायुधमायुधेन लज्जमानो युधि जेतुमुत्सृज्य सचर्मफलकमट्टहासमसिम् अधोरुकस्योपरि बबन्ध बाहुयुद्धाय कक्ष्याम्। एवं युयुधाते च दर्पनिर्दयास्फोटनस्फुटितभुजरुधिरनिकरशीकरसिच्यमानौ शिलास्तम्भैरिव पतद्भिर्बाहुदण्डैः शब्दमयमिव कुर्वाणौ भुवनं तौ। न चिराच्च पातयामास भूतले भुजङ्गमं भूपतिः। जग्राह च कचेषु। उच्चखान च शिरः छेत्तुम् अट्टहासमसिम्। अपश्यच्च वैकक्ष्यकमालान्तरेणास्य यज्ञोपवीतम्। उपसंहृतशस्त्रव्यापारश्च अब्रवीत्— 'दुर्विनीत! अस्ति ते दुर्नयनिर्वाहबीजमिदं, यतो विस्रब्धमेवमाचरसि चापलानि' इत्युत्ससर्ज च तम्। अनन्तरं च सहसैव अतिबहलज्योत्स्नाप्रवाहं ददर्श। शरदि विकसतां कमलवनानामिव घ्राणलेपिनमामोदिनं गन्धमभ्यजिघ्रत्। झटिति च क्वणितनूपुरशब्दमशृणोत्। व्यापारयामास च शब्दानुसारेण दृष्टिम्।

अथ करतलस्थितस्यैवाट्टहासस्य मध्ये तडिल्लतामिव नीलजलधरोदरेषु स्फुरन्तीं, प्रभया पिबन्तीमिव त्रियामां, तामरसहस्तां, कोमलाङ्गुलिरागराजिजालकानि चरणलग्नानि वेलावालविद्रुमलता-

---

मन्त्रजपेन कृतमण्डलेन। अरे! आक्षेपसूचकमव्ययमिदम्। काकोदर काक! सर्पाधम!। 'कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी' इत्यमरः। काकशब्दः क्षेपसूचकः। राजहंसे राजश्रेष्ठे, कलहंसे इति च। अयं न भवसि इदानीमेवायं त्वं नश्यसीत्यर्थः। अशिक्षितः अकुशलः। अधोरुकस्य चण्डातकस्य। कक्ष्यां गुह्यपिधानम्। निर्वाहबीजं फलपर्यन्ततानयनकारणम्।

वनानीवाकर्षन्तीं, करपङ्कजसङ्कोचाशङ्कया शशाङ्कमण्डलमिव खण्डशः कृतं निर्मलचरणनखनिवहनिभेन बिभ्रतीं, गुल्फावलम्बिनूपुरघुटतया स्थितिनिबिडनिबद्धनिगलकटकां बलिबन्धनादिव परिभ्रश्यागतां, बहुविधकुसुमशकुनिशतशोभितात् पवनचलिततनुतरङ्गाद् अतिस्वच्छादंशुकाद् उदधिसलिलादिवोत्तरन्तीम्, उदधिजन्मप्रेम्णा त्रिवलीच्छलेन त्रिपथगयेव परिष्वक्तमध्याम्, अभ्युन्नतस्तनमण्डलां दृश्यमानदिङ्नागकुम्भामिव ककुभं, स्तनशिखरलग्नमैरावतकरशीकरमिव शरत्तारागणतारं हारमुरसा दधानां, धवलचामरैरिव मन्दमन्दनिःश्वासडोलायितैः हारकिरणैरुपवीज्यमानां, स्वभावलोहितेन मदान्धगन्धेभकुम्भास्फालनसंक्रान्तसिन्दूरेणेव करतलद्वयेन उद्योतमानां, हरशिखण्डेन्दुद्वितीयखण्डेनेव कुण्डलीकृतेन ज्योत्स्नामुचा दन्तपत्रेण दर्शनीयां, कौस्तुभगभस्तिस्तबकेनेव च श्रवणलग्नेन अशोककिसलयेन अलङ्कृतां, महता मातङ्गमदमयेन तिलकेनादृश्यमानछत्रच्छाया-

---

गुल्फं पादग्रन्थिः। स्थितिनिबिडनिबद्धनिगलकटकां स्वाभाविकचञ्चलत्वं निवृत्य स्थित्यर्थं निबिडबद्धनिगलवलयाम्। बलिबन्धनात् महाबलिकृतात् कारागृहात्। बहुविधकुसुमशकुनिशतशोभितात् वस्त्रशोभार्थं प्रान्तेषु तन्तुना उत्कीर्णैः बहुविधैः कुसुमहंसादिशकुनिशतरूपैः शोभितात्। अन्यत्र जलगतैः बहुविधकुसुमशकुनिशतैः शोभितात्। तरङ्गः भङ्गः (७।१०[illegible])। अन्यत्र ऊर्मिः। स्वच्छात् निर्मलात्, प्रसन्नाच्च। अंशुकादुदधिसलिलादिवोत्तरन्तीमिति— अतिस्वच्छस्यांशुकस्य आच्छादनसमये उदधिसलिलादुत्तरन्तीमिवेत्युत्प्रेक्षा। उदधिजन्मप्रेम्णा उदधिपत्न्या त्रिपथगया त्रिवलीच्छलेन दुहितृस्नेहात् परिष्वक्तमध्यामिवेत्यर्थः। त्रिवली उदरगतवलित्रयम्। वलीनां त्रित्वमवेक्ष्य त्रिपथगाप्रयोगः। शरत्तारागणतारं शरत्तारागणवत् शुद्धं हारं[1] मुक्तावलिम्। गन्धेभः गन्धशब्देन सुरभिगन्धो[2] विवक्षितः। गन्धवान् इभो गन्धेभः, मत्तगज इत्यर्थः। शिखण्डं मुकुटम्[3]। गभस्तिस्तबकेन किरणपुञ्जेन। अदृश्यमान-

---

१. 'हारं हारमणिं मुक्ताफलम्', २. 'सुरभिर्मदगन्धो', ३. 'मु'–क.

मण्डलेनेव अविरहितललाटाम्, आपादतलाच्चन्द्रातपधवलेन चन्दनेनादिराजयशसेव धवलीकृतां, धरणितलचुम्बिनीभिः कण्ठकुसुममालाभिः सरिद्भिरिव सागरादिष्टाभिरधिष्ठितां, मृणालकोमलैरवयवैः कमलसम्भवत्वमनक्षरमाचक्षाणां स्त्रियमपश्यत्। असम्भ्रान्तश्च पप्रच्छ तां—'भद्रे! कासि। किमर्थं वा दर्शनपथमागतासि' इति। सा तु स्त्रीजनविरुद्धेनावष्टम्भेनाभिभवन्तीव राजानमाबभाषे— 'वीर! विद्धि मां नारायणोरःस्थलीलीलाविहारहरिणीं पृथुभरतभगीरथादिराजवंशपताकां सुभटभुजजयस्तम्भविलाससालभञ्जिकां, रणरुधिरतरङ्गिणीतरङ्गक्रीडादोहलदुर्ललितराजहंसीं, सितनृपच्छत्रवनषण्डशिखण्डिनीम्, अतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीम्, असिधाराजलकमलिनीं श्रियम्। आहूतास्मि तवामुना सुकृतेन शौर्यरसेन। याचस्व, ददामि ते वरमभिलषितम्' इति।

धीराणां चापुनरुक्ताः परोपकाराः। यतो राजा प्रणम्य तां स्वार्थविमुखो भैरवाचार्यस्य सिद्धिं ययाचे। लक्ष्मीस्तु देवी प्रसन्नतरहृदया विस्तीर्यमाणेन चक्षुषा क्षीरोदेनेवोपरि पर्यस्तेनाभिषिञ्चन्ती भूपालम् 'एवमस्तु' इत्यब्रवीत्। अवादीच्च पुनः 'अनेन सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या चासाधारणया भुवि भवान् सूर्याचन्द्रमसोस्तृतीय इवाविच्छिन्नस्य प्रतिदिनमुपचीयमानवृद्धेः शुचिसुभगसत्यत्यागशौर्यशौण्डपुरुषप्रकाण्डप्रायस्य महतो राजवंशस्य कर्ता भविष्यति,

---

च्छत्रच्छाया अदृश्यमानस्य छत्रस्य छाया। अवष्टम्भेन औद्धत्येन। हरिणी मृगी। वंशः अन्वयः, वेणुदण्ड इति च। सालभञ्जिका स्तम्भादिषूत्कीर्णा प्रतिकृतिम्। 'पाञ्चालिका तु वस्त्रादिपुत्रिका सालभञ्ज्यपि' इति वैजयन्ती। तरङ्गिणी नदी। दोहलं श्रद्धा। कमलिनी पद्मम्।

धीराणां विदुषाम्। अपुनरुक्ता अपूर्ववच्छ्रद्धेया इत्यर्थः। पर्यस्तेन क्षिप्तेन। सत्त्वोत्कर्षेण धैर्योत्कर्षेण। अविच्छिन्नस्य सन्ततस्य उपचीयमानवृद्धेः वर्धमानाभ्युदयस्य। शुचिसुभगसत्यत्यागशौर्यशौण्डपुरुषप्रकाण्डप्रायस्य शुचीनां

यस्मिन्नुत्पत्स्यते सप्तद्वीपान्तराणां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्ती । यस्त्रिभुवनविजिगीषोः मान्धातुर्द्वितीयः, यस्येयं श्रीः स्वयमेव कमलमपहाय ग्रहीष्यति चामरम्' इति वचसोऽन्ते तिरोबभूव ।

भूपालस्तु तदाकर्ण्य हृदयेनातिमात्रम् अप्रीयत । भैरवाचार्योऽपि तस्या देव्यास्तेन वचसा कर्मणा च सम्यगुपपादितेन सद्य एव कुन्तली किरीटी हारी केयूरी मेखली खड्गी कवची च भूत्वा विद्याधरत्वमवाप । प्रोवाच च राजानम्— 'अदूरव्यापिनः फल्गुचेतसाम् अलसा मनोरथाः । सतां तु विस्तारवत्यः स्वभावेनैवोपकृतयः । कः क्षमेऽप्यसम्भावितामिमां दक्षिणां दातुं क्षमोऽन्यो भवन्तमपहाय । सम्पत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिरुन्नतिमायाति । त्वदीयैस्तु गुणैरुपकरणीकृतस्य त्वत्त एव लब्धात्मलाभस्य निर्लज्जतेयम् अस्य मूढहृदयस्य । तदिच्छामि येन केनचित् कार्यलवोपपादनोपयोगेन स्मारयितुमात्मानम्' इति । प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भाः । यतस्तं राजा 'भवत्सिद्ध्यैव परिसमाप्तकृत्योऽस्मि । साधयतु मान्यो यथासमीहितं स्थानम्' इति प्रत्याचचक्षे ।

---

सुभगानां सत्यत्यागशौर्यैः शौण्डानाम् उत्कटानां पुरुषाणां प्रकाण्डैः श्रेष्ठैः प्रायस्य बहुलस्य । अत्र अमरसिंहः— 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इति । अत्र अविच्छिन्नस्य अभग्नस्य उपचीयमानवृद्धेः प्रकाण्डप्रायस्य स्कन्धप्रदेशोक्तस्य(?) महतो वंशस्य; वेणोरिति च ध्वन्यते । द्वितीयः तुल्य इत्यर्थः । इयं श्रीरिति आत्मानमेव इयंशब्देन निर्दिशति । अन्यत्राप्येवंविधा वाक्यवृत्तिरस्ति— 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति ।

मेखली, कटिषु बध्यमान आभरणविशेषो मेखला । अदूरव्यापिनः अल्पाः । फल्गुचेतसां क्षुद्रहृदयानाम् । अलसाः मन्दाः । तुला मानदण्डम् । लघुप्रकृतिः क्षुद्रस्वभावः, अगुरुस्वभावश्च । उन्नतिम् उद्धतिम्, उन्नमनं च । साधयतु गच्छतु । यथासमीहितं यथाभिलाषितम् ।

तथोक्तश्च भूभुजा जिगमिषुः सुचिरमालिङ्ग्य टिट्टिभादीन्, कुवलयवनेनेव अवश्यायशीकरस्राविणा चक्षुषा सास्रेण वीक्षमाणः, क्षितिपतिं पुनरुवाच—'तात! किं ब्रवीमि, यामीति न स्नेहसदृशम्। त्वदीयाः प्राणा इति पुनरुक्तम्। गृह्यतामिदं शरीरमिति व्यतिरेककरणम्। तिलशः क्रीता वयमिति नोपकारानुरूपम्। बान्धवोऽसीति दूरीकरणम्। त्वयि स्थितं हृदयमिति अप्रत्यक्षम्। त्वद्विरहकारिणी कारणेयं न सिद्धिरिति अश्रद्धेयम्। निष्कारणास्तवोपकारा इति अनुवादः। स्मर्तव्या वयमिति आज्ञा। सर्वथा कृतघ्नालापेषु असज्जनकथासु च चेतसि कर्तव्योऽयं स्वार्थनिष्ठुरो जनः' इति। समुत्पपात च वेगविच्छिन्नहारोच्चलितमुक्ताफलनिकरताडिततारागणं गगनतलम्। सीमन्तितग्रहग्रामः सिद्धयुचितं धाम ययौ। श्रीकण्ठोऽपि 'स्वामिन्! पराक्रमक्रीतः कर्तव्येषु नियोगेनानुग्राह्यो ग्राहितविनयोऽयं परिजनः' इत्यभिधाय राज्ञानुमतो यत उदितस्तत एव भूयो भुवो विवरं विवेश।

नरपतिरपि क्षीणभूयिष्ठायां क्षपायां, प्रवातुमारब्धे प्रबुद्ध्यमानपद्मिनीनिःश्वाससुरभौ वनदेवताकुचांशुकहरणपरिश्रमस्वेदिनीव सावश्यायशीकरे परिमलाकृष्टमधुकृति कुमुदनिद्राबाहिनि निशापरिणतिजडे तुषारलेशिनि वनानिले, विरहविधुरचक्रवाकचक्रनिःश्वसितसन्तापितायामिव अपरजलनिधिम् अवतरन्त्यां त्रियामायां, साक्षादागतलक्ष्मीविलोकनकुतूहलिनीष्विव समुन्मिषन्तीषु नलिनीषु, उन्निद्रपक्षिणि क्षरति कुसुमविसरमिव तुहिनकणनिकरं मृदुपवनलासितलते कानने, कमललक्ष्मीप्रबोध-

---

अवश्यायः हिमम्। व्यतिरेककरणम् आवयोः प्रतिगृहीतृप्रतिदातृभेदेनोपन्यासेनान्यत्वकरणम्। कारणा यातना। 'कारणा तु यातना तीव्रवेदना' इत्यमरः। उच्चलितम् उत्पतितम्। नियोगेन निदेशेन।

आवाहिनि आनेतरि। जडे शिशिरे। विधुरं विषण्णम्। अपरजलनिधिम् अवतरन्त्यां सन्तापयापनार्थमिति भावः। उन्निद्रः प्रबुद्धः। लासितं

मङ्गलशङ्खशब्देष्विव रसत्सु अन्तर्बद्धध्वनन्मधुकरेषु मुकुलायमानेषु कुमुदवनेषु, उज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रोत्सार्यमाणास्विव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामालताकलिकासु तारकासु, मन्दरशिखराश्रयिणि मन्दानिलविलुलितकल्पलतावनकुसुमधूलिविच्छुरित इव धूसरीभवति सप्तर्षिमण्डले, सुरवारणाङ्कुश इव च्युते गलति तारामये मृगे, त्रीनपि टिट्टिभादीन् गृहीत्वा नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाळ्याङ्गानि नगरं विवेश। अन्यस्मिन्नहनि तेषाम् आत्मशरीरानन्तरस्नानभोजनाच्छादनादिना प्रीतिमकरोत्।

कतिपयदिवसापगमे च परिव्राड् भूभुजा वार्यमाणोऽपि वनं ययौ। पाताळस्वामिकर्णताळौ तु शौर्यानुरक्तौ तमेव स्वामिनं सिषेवाते। सम्पादितमनोरथातिरिक्तविभवौ च सुभटमण्डलमध्ये निकृष्टमण्डलाग्रौ समरमुखेषु प्रथममुपयुज्यमानौ कथान्तरेषु चान्तरान्तरा राज्ञा समादिष्टौ विचित्राणि भैरवाचार्यचरितानि शैशववृत्तानि च कथयन्तौ तेनैव सार्धं जरां जग्मतुः।

॥ इति श्रीहर्षचरिते राजवंशावतारो नाम तृतीय उच्छ्वासः ॥

---

च्छलितम्। रसत्सु शब्दायमानेषु। उज्जिहानः उद्यन्। प्रोथपवनैः नासिकारन्ध्रवायुभिः। श्यामालताकलिकासु श्यामा रात्रिः; श्यामाख्यलतायाः कलिकाभूतासु। मृगे मृगशीर्षे। व्यतिकरः वृत्तान्तः। वापी दीर्घिका। अनन्तरं निर्विशेषम्।

निकृष्टमण्डलाग्रौ आकृष्टखड्गौ।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने तृतीय उच्छ्वासः।

# अथ चतुर्थ उच्छ्वासः ।

योगं समेऽपि नेच्छन्ति कुर्वते न करग्रहम् ।
महान्तो नाममात्रेण भवन्ति पतयो भुवः ॥
सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥

अथ तस्मात् पुष्यभूतेः द्विजवरस्वेच्छागृहीतकोशो नाभिपद्म इव पुण्डरीकेक्षणात्, लक्ष्मीपुरःसरो रत्नसञ्चय इव रत्नाकराद्, गुरुबुधकविकलावत्तेजस्विभूनन्दनप्रायो ग्रहगण इव उदयस्थानात्, महाभारवहनयोग्यः

---

अथ पुष्यभूतेरनन्तराणां राज्यवर्धनान्तानां राज्ञां सम्भवः, तैश्च भूमेः सौराज्यं, तेभ्योऽपि गुणवत्तरस्य हर्षस्य सम्भवश्चेति चतुर्थोच्छ्वासार्थः । तदेतद् द्वाभ्यां पद्याभ्यां सङ्गृह्णाह— योगमिति । योगम् उपायं, संयोगमिति च । नेच्छन्ति कृतकृत्यत्वादिति भावः । करग्रहं बलिग्रहं, पाणिग्रहणमिति च । नाममात्रेण भवन्ति पतयो भुवः । राज्ययोगस्तु सर्वेषां साधारण इति भावः ।

महीभृत्कम्पकृद् राज्ञां भयकारी । अन्यत्र वप्राघातैः पर्वतानां चलनकारी । विपुले महति, विशाले च । पृथुप्रतिमः पृथुनाम्ना राज्ञा तुल्यः । अन्यत्र पृथुर्विशालः प्रतिमा सिंहमुखाकारो दन्तेषु बद्धः प्रतिकृतिविशेषो यस्य इति ।

अथेत्यादि । द्विजवरः ब्राह्मणश्रेष्ठः, ब्रह्मा च । कोशः अर्थसमूहः, कुड्मलश्च । पुण्डरीकेक्षणात् पद्मतुल्यनयनाद्, विष्णोश्च । लक्ष्मीः सम्पत्, श्रीश्च । रत्नालयाद् रत्नानां स्थानभूतात्, समुद्राच्च । गुर्वित्यादि । गुरुः गौरवयुक्तः, बृहस्पतिश्च । बुधः विद्वान्, सोमसुतश्च । कविः काव्यकृत्, शुक्रश्च । कलावान् चतुःषष्टिकलावित्, चन्द्रश्च । तेजस्वी महातेजाः, सूर्यश्च । भूनन्दनः भूतलवासिनामानन्दकरः, अङ्गारकश्च । उदयस्थानाद् ऐश्वर्यस्थानभूताद्, उदयपर्वतस्थानाच्च । महाभारवहनयोग्यः भारशब्देन राज्यधूर्विवक्षिता॥

सागर इव सगरप्रभवात्, दुर्जयबलसनाथो हरिवंश इव शूराज्जिगमिषु राजवंशः। यस्मादविनष्टधर्मधवलाः प्रजासर्गा इव कृतमुखात्, प्रतापाक्रान्तभुवनाः किरणा इव तेजोनिधेः, महाविग्रहव्याप्तदिङ्मुखाः गिरय इव भूभृत्प्रभवाद्, धरणीधारणक्षमा दिग्गजा इव ब्रह्मकराद्, उदधीन् पातुमुद्यता जलधरा इव घनागमाद्, इच्छाफलप्रदायिनः

---

महाभारस्य निर्वहणयोग्यः। अन्यत्र महाभाराः समुद्रान्तर्गता दैत्यपर्वतबाडवादयः; तेषां वहनस्य योग्यः। उक्तं च— 'इतः स्वपिति केशवः कुलमितस्तदीयद्विषामितोऽपि शरणार्थिनः शिखरिपत्त्रिणः शेरते। इतोऽपि बडवानलः सह समस्तसंवर्तकैरहो विततमूर्जितं भरसहं च सिन्धोर्वपुः॥' इति। अथवा महाभाराणां महाभारयुक्तानां वहनानां यानपात्राणां योग्यः योगार्हः सम्बन्धार्हः। सगरप्रभवात् सगरतुल्यविक्रमात्। अन्यत्र सगरः प्रभवो जन्मकारणं यस्य। सगरपुत्रादित्यर्थः। *'प्रभवः स्यादपां मूले विक्रमे जन्मकारणे' इति वैजयन्ती। दुर्जयबलसनाथः दुर्जयेन जेतुमशक्येन। बलेन सामर्थ्येन सैन्येन वा युक्तः। अन्यत्र दुर्जयः कश्चिद् यादवः बलः बलभद्रः। शूराद् वीरात्। अन्यत्र शूरनाम्नो यादवात्। अविनष्टधर्मधवलाः अविनष्टधर्मतया धवलाः शुद्धाः। उभयत्र समानम्। कृतमुखात् कुशलात्। 'वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि' इत्यमरः। अन्यत्र कृतयुगस्य मुखादारम्भात्। प्रतापः पौरुषम्, आतपश्च। तेजोनिधेः तेजसां निधेः, सूर्याच्च। विग्रहव्याप्तं युद्धेन विशेषतो लब्धम्। अन्यत्र शरीरेण परिस्तृतम्। भूभृत्प्रभवात् राजप्रभवात्, पर्वतोत्पत्तिस्थानाच्च। धारणं रक्षणं, वहनं च। ब्रह्मकराद् वेदस्थितिकराद्, ब्रह्मणो हस्ताच्च। 'ब्रह्मणो हस्ताद् दिग्गजो जातः' इति प्रसिद्धिः। उक्तं च पालकाप्ये— 'सूर्यस्याण्डकपालेऽसौ समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत॥ गायतो ब्रह्मणो हस्तात् समुत्पेतुर्मतङ्गजाः॥' इति। पातुं रक्षितुं, पानं कर्तुम् इति च। घनागमात् स्थिरश्रुतात्, प्रावृषश्च। इच्छाफलप्रदायिनः

---

*'प्रभावः स्यात् पादमूले' इति मातृकायाम्।

कल्पद्रुमा इव नन्दनात्, सर्वभूताश्रया विश्वरूपविकारा इव श्रीधराद् अजायन्त राजानः।

तेषु चैवमुत्पद्यमानेषु क्रमेणोदपादि हूणहरिणकेसरी सिन्धुराजज्वरो गुर्जरप्रजागरो गान्धाराधिपगन्धद्विपपाकलो लाटमालवलक्ष्मीलतापरशुः प्रतापशील इति प्रथितापरनामा प्रभाकरवर्धनो नाम राजाधिराजः। यो राज्याङ्गसङ्गीनि अभिषिच्यमान एव मलानीव मुमोच धनानि। यः परकीयेनापि कातरजनवल्लभेन रणमुखे तृणेनेव धृतेनालज्जत जीवितेन। यः करधूतधौतासिप्रतिबिम्बितेनात्मनापि अदूयत समितिषु सहायेन। यो रिपूणां पुरः प्रधनेषु धनुषापि नमता मानी मानसेनाखिद्यत। यश्च अन्तर्गतापरिमितरिपुशरशतशल्य-

---

उभयत्र समानम्। श्रीधरात् लक्ष्मीधराद्, विष्णोश्च।

उदपादि उत्पन्नः। हूणादयः तत्तद्देशनाम्ना व्यपदिश्यमानाः केचन राजानः। प्रजागरः निद्रासौख्यविघातको व्याधिविशेषः। पाकलः गजानां शिरोज्वरः। परशुः कुठारः। राज्याङ्गं, 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्याङ्गानि' इत्यमरः। अङ्गशब्देनावयवश्च धन्यते। अभिषिच्यमानः राजत्वे क्रियमाणाभिषेकः। अन्यत्र क्रियमाणस्नानः। परकीयेन अन्यदीयेन। परशब्दात् 'कुग् जनस्य परस्य च' (ग० सू० ४. १. १३८.) इति शैषिकः छप्रत्ययः कुगागमश्च। कातरजनवल्लभेन क्लीबजनबहुमतेन। कातरा नवजीवितप्रियाः न तु शूरा इति भावः। तृणस्य कातरवल्लभत्वं रणेषु प्रहर्तुमुद्यतानां प्रतिभटवीराणाम् अग्रतः शस्त्रं परित्यज्य स्वमोचनार्थं गोत्वं प्रदर्शयद्भिः कातरैः भक्ष्यमाणत्वादिति बोद्धव्यम्। समितिषु शौर्यरसेन स्वयं जीवितनिःस्पृहो जीवितप्रियमन्यं दृष्ट्वा अतीवालज्जतेति। समितिषु युद्धेषु। यो रिपूणामित्यादि। पुरः सन्निधौ, अग्रतश्च। नमता आनमता, मह्वीभवतेति च। यो रिपूणां पुरो नमता धनुषापि हेतुना मानसेनाखिद्यत। स्वधनुर्नमनेऽपि खिन्नमना अभवदित्यर्थः। शल्यं शराग्रेषु अयो-

शङ्कुकीलितामिव निश्चलामुवाह राजलक्ष्मीम् । यश्च सर्वासु दिक्षु समीकृत-सरित्तटावटविटपाटवीतरुतृणगुल्मवल्लीवल्मीकगिरिगहनैः दण्डयात्रापथैः पृथुभिः भृत्योपभोगाय व्यभजतेव बहुधा वसुधाम् । यं चालब्ध-युद्धदोहलमात्मीयोऽपि सकलरिपुसमूहसमुत्सारकः परकीय इव तताप प्रतापः । यस्य च वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुतमयः श्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमयः शून्यतासु, पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामन्तान्तःपुरेषु प्रतापः । यस्य चाप्तेषु भृत्यवर्गेषु प्रतिबिम्बितेव तुल्यरूपा समालक्ष्यत लक्ष्मीः । तथा च यस्य प्रतापाग्निना भूतिः, शौर्योष्मणा सिद्धिः, असिधाराजलेन वृद्धिः, शस्त्रव्रणमुखैः पुरुषकारोक्तिः, धनुर्गुणकिणेन करगृहीतिरभवत् । यश्च वैरम् उपायनं, विग्रहमनुग्रहं, समरागमं महोत्सवं, शत्रुलाभं निधिदर्शनम्, अरिबाहुल्यम् अभ्युदयम्, आहवाह्वानं वरप्रसादनम्, अवस्कन्दपातं

---

निर्मितोंऽशः । शङ्कुः कीलः (२११२°) । कीलितं बद्धम् । समीकृतं सम-स्थलीकृतम् । अवटः निम्नप्रदेशः । विटपः वृक्षशाखा । वल्मीकः वामलूरः (२१०१°) । दण्डयात्रा सेनाप्रयाणम् । युद्धदोहलं युद्धाभिनिवेशः । समुत्सारकः समुत्क्षेपकः । शून्यतासु इष्टवियोगजन्मसु । अन्यत्र भावशून्यता । प्रतापाग्निना भस्माभवदिति विस्मयश्च गम्यते । शौर्योष्मणा सिद्धिः शौर्यतीव्रतया इष्टार्थलाभः । शौर्योष्मणा पाकोऽभवदिति च । सिद्धिशब्दः पाकवाची । वैजयन्त्यां 'पक्वं तु रन्धितं सिद्धम्' इति सिद्धशब्दस्य पक्ववाचकत्वदर्शनात् । असिधाराजलेन वृद्धिः । धारापीतजलेनासिना इत्यर्थः । वृद्धिः ऐश्वर्योपचयोऽभवत् । असिधाराजलेन वर्धनमिति च तरुसमाधिरत्र विवक्षितः । शस्त्रव्रणमुखैः पुरुषकारोक्तिः अरिशस्त्रकृतानां व्रणानां रन्ध्रैः पौरुषोक्तिरभवत् । धनुर्गुणकिणेन करगृहीतिः मौर्व्याघातसमुद्भूतेन किणेन बलिग्रहणम् अभवत् । स्वविषये धनुषा परचक्रपीडा-रक्षणात् परविषये परप्रहृत्या च बलिग्रहणमस्याभवदित्यर्थः । धनुर्गुणकिणे-नैवास्य हस्तग्रहणं नान्येनेति च । आहवाह्वानं युद्धार्थमाह्वानम् । अवस्कन्दपातं

दिष्टिवृद्धिं, शस्त्रप्रहारपतनं वसुधारामिवामन्यत। यस्मिंश्च राजनि निरन्तरैः यूपनिकरैः अङ्कुरितमिव कृतयुगेन, दिङ्मुखविसर्पिभिः अध्वरधूमैः पलायितमिव कलिना, ससुरैः सुरालयैरवतीर्णमिव स्वर्गेण, सुरालयशिखरोद्धूयमानैः धवलध्वजैः पल्लवितमिव धर्मेण, बहिरुपरचितविकटसभासत्रप्रपाप्राग्वंशमण्डपैः प्रसूतमिव ग्रामैः, काञ्चनमयसर्वोपकरणैर्विभवैः विकीर्णमिव मेरुणा, द्विजदीयमानैः रक्षाकलशैः फलितमिव प्रजाभाग्यसम्पदा।

तस्य च जन्मान्तरेऽपि सती पार्वतीव शङ्करस्य, गृहीतहृदया लक्ष्मीरिव लोकगुरोः, स्फुरत्तरलतारका रोहिणीव कलावतः, सर्वजनजननी बुद्धिरिव प्रजापतेः, महाभूभृत्कुलोद्गता गङ्गेव वाहिनीनायकस्य,

---

सौप्तिकागमनम् (ഞെരാക്കിള്ളു[1])। 'अवस्कन्दः प्रपातश्च सौप्तिकश्च निगद्यते' इति हलायुधः। दिष्टिवृद्धिः सुखोपचयः। 'दिष्टिः सुखे च दाने च' इति वैजयन्ती। अथ दिष्ट्या दैवेन कृतां वृद्धिं सुखम्। 'वृद्धिः सुखेऽपि' इति वैजयन्ती। ससुरैः प्रतिमारूपदेवसहितैः। सभा शालाविशेषः (ചാല)। सत्रं सदा दानम्। प्रपा पानीयशाला विवक्षिता। दीयमानैः गृह्यमाणैः।

सती पतिव्रता। अन्यत्र सतीति दक्षकन्यावस्थायां देव्या नाम। 'आर्या दाक्षायणी सती' इति अमरशेषः। शङ्करस्य सुखकरस्य। 'शम्' इत्यव्ययपूर्वात् करोतेः पचाद्यचि रूपम्। न तु 'शमि धातोः संज्ञायाम्' (पा० सू० ३. २. १४.) इत्यच्प्रत्यये, तस्य संज्ञाविषयत्वादिहाप्रसक्तेः। अन्यत्र महादेवस्य। अस्मिन् पक्षे 'शमि धातोः संज्ञायाम्' इत्यनेनैव अच् प्रत्ययः। गृहीतहृदया वशीकृतचित्ता। अन्यत्र स्थानतो गृहीतवक्षःस्थला। लोकगुरोः लोकस्वामिनः, विष्णोश्च। तारका अक्षिकनीनिका, नक्षत्रं च। कलावतः चतुष्षष्टिकलावतः, चन्द्रस्य च। जननी माता, सृष्टिश्च। प्रजापतेः प्रजानामधिपस्य, ब्रह्मणश्च। महाभूभृत् महाराजः, हिमवांश्च। वाहिनीनायकस्य

---

१. ഞൊറുക്കിക്കിഞ്ഞു.

मानसानुवर्तनचतुरा हंसीव राजहंसस्य, सकललोकार्चितचरणा त्रयीव धर्मस्य, दिवानिशममुक्तपार्श्वस्थितिः अरुन्धतीव महामुनेः, हंसमयीव गतिषु, परपुष्टमयीव आलापेषु, चक्रवाकमयीव पतिप्रेम्णि, प्रावृण्मयीव पयोधरोन्नतौ, मदिरामयीव विलासेषु, निधिमयीव अर्थसञ्चयेषु, वसुधारामयीव प्रसादेषु, कमलमयीव कोशसङ्ग्रहेषु, कुसुममयीव फलदानेषु, सन्ध्यामयीव वन्द्यत्वे, चन्द्रमयीव निरूष्मत्वे, दर्पणमयीव प्रतिप्राणिग्रहणेषु, सामुद्रमयीव परचित्तज्ञानेषु, परमात्ममयीव व्याप्तिषु, स्मृतिमयीव पुण्यवृत्तिषु, मधुमयीव सम्भाषणेषु, अमृतमयीव तृष्यत्सु, वृत्तिमयीव भृत्येषु, निर्वृतिमयीव सखीषु, वेतसमयीव गुरुषु, गोत्रवृद्धिरिव विलासानां,

---

सेनापतेः, समुद्रस्य च । मानसं मनः, मानससरश्च । राजहंसस्य राजश्रेष्ठस्य, हंसविशेषस्य च । अर्चितचरणा पूजितपादा, अर्चितानुष्ठाना च । धर्मस्य धर्मभूतस्य, धर्मवत इति वा । अर्शआदित्वाद् अच्प्रत्ययः । महामुनेः महामुनिभूतस्य, वसिष्ठस्य च । पयोधरोन्नतौ स्तनतुङ्गत्वे, मेघोद्गतौ च । विलासेषु विभ्रमेषु । अन्यत्र अतीव मधुरविलासेष्वित्यर्थः । निधिः शङ्खनिधिः । वसुधारा मन्त्रविशेषः, देवता वा । प्रसादेषु प्रसाददानेषु । कोशः अर्थसमूहः, कुड्मलश्च । फलं धनं, बीजं च । निरूष्मत्वे मृदुस्वभावतायाम्, शिशिरस्वभावत्वे च । प्रतिप्राणिग्रहणेषु प्रतिजनं हृदयग्रहणेषु । अन्यत्र प्रतिप्राणिनां ग्रहणेषु । सामुद्रं शरीरलक्षणग्रन्थः । परचित्तज्ञानेषु परेषां चित्तगताभिलषितज्ञानेषु । अन्यत्र शरीरगतलक्षणैः चित्तं ज्ञायत इति भावः । व्याप्तिषु विशेषेणार्थादीनां लाभेषु ; अथवा व्याप्तिः विशेषेण बान्धवम् । अन्यत्र व्याप्तिः सर्वगतत्वम् । पुण्यवृत्तिषु पुण्यकरणेषु । अन्यत्र कूपतटाकारामादिपुण्यकरणप्रवर्तकेषु । तृष्यत्सु अर्थकामुकेषु, पिपासितेषु च । 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः । वेतसमयी आनुकूल्येन नम्रतयेति भावः । 'आनुकूल्यं हि वैतसी वृत्तिः' । तथा रघुवंशे— 'अनम्राणां समुद्धर्तुस्तस्मात् सिन्धुरयादिव । आत्मा संरक्षितः सर्वैर्वृत्तिमाश्रित्य वेतसीम् ॥' वेतसः वानीरः (വഞ്ഞി) ।

---

१. ഭീവുഞ്ഞി—क.

प्रायश्चित्तवृत्तिरिव स्त्रीत्वस्य, आज्ञासिद्धिरिव मकरध्वजस्य, व्युत्थानबुद्धिरिव रूपस्य, दिष्टिवृद्धिरिव रतेः, मनोरथसमृद्धिरिव रामणीयकस्य, दैवसम्पत्तिरिव लावण्यस्य, वंशोत्पत्तिरिव अनुरागस्य, वरप्राप्तिरिव कान्तेः, सर्गसमाप्तिरिव सौन्दर्यस्य, आयतिरिव यौवनस्य, अनभ्रवृष्टिरिव वैदग्ध्यस्य, अयशःप्रमृष्टिरिव लक्ष्म्याः, यशःपुष्टिरिव चारित्रस्य, हृदयतुष्टिरिव धर्मस्य, सौभाग्यपरमाणुसृष्टिरिव प्रजापतेः, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, आभिजात्यस्यापि अभिजातिरिव, संयमस्यापि संयतिरिव, धैर्यस्यापि धृतिरिव, विभ्रमस्यापि विभ्रान्तिरिव, यशोवतीति नाम्ना महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत्। या अस्य वक्षसि नरकजितो लक्ष्मीरिव ललास।

निसर्गत एव स नृपतिः आदित्यभक्तो बभूव। प्रतिदिनमुदये स्नातः सितदुकूलधारी धवलकर्पटप्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डले सवितुः पवित्रपद्मरागपात्रनिहितेन स्वहृदयेनेव सूर्यानुरक्तेन रक्तकमलमण्डलेनार्घं ददौ। अजपच्च जप्यचरितः प्रत्युषसि मध्यन्दिने दिनान्ते चापत्यहेतो रहस्यं प्राध्वं प्रयतेन

---

प्रायश्चित्तवृत्तिरिव स्त्रीत्वस्य अनावृतत्वाद् बहुदोषोपहतस्य स्त्रीत्वस्य प्रायश्चित्तवृत्तिरिवेत्यर्थः। स्त्रीजातिप्रयुक्तदोषरहितेति यावत्। व्युत्थानबुद्धिः स्वतन्त्रवृत्तियुक्ता बुद्धिः। 'स्वतन्त्रवृत्तिर्व्युत्थानम्' इति वैजयन्ती। प्रतिरोधबुद्धिरिति केचित्। आत्मग्राहकस्य चक्षुरिन्द्रियस्यान्यस्मिन् व्यापारनिवर्तकबुद्धिरित्यर्थः। उद्रेकबुद्धिरित्यन्ये। रूपस्य सौन्दर्यस्य। यशोवतीति, अत्र मतुप्, तन्मकारस्य वकारादेशश्च क्रियमाणः संज्ञाशब्दतया सोढव्यः। वक्षसि हृदये, उरःस्थले च। नरकजितः रौरवादिनरकजितः, विष्णोश्च। ललास सक्ता बभूव, दीप्ता च।

उदये उदयकाले[3]। कर्पटः वस्त्रशकलम्। सूर्यानुरक्तेन सूर्यवदरुणेन, सूर्यभक्तियुक्तेन च। मण्डलेन समूहेन। प्राध्वम् आनुकूल्यार्थद्योतकम् अव्ययमिदम्।

---

१. 'भवन्तिरिति'. २. 'दिग्पर्वेनरक' ३. 'ले अजपदिति सम्बन्धः'—क.

मनसा जञ्जपूको मन्त्रम् आदित्यहृदयम् ।

भक्तजनानुरोधविधेयानि हि भवन्ति दैवतानां मनांसि । यतः स राजा कदाचिद् ग्रीष्मसमये यदृच्छया सितसुधाधाररम्ये हर्म्यपृष्ठे सुष्वाप । वामपार्श्वे चास्य द्वितीयशयनीये देवी यशोवती शिश्ये । परिणतप्रायायां तु शर्वर्याम् आसन्नप्रभातवेलाविलुप्यमानलावण्ये लिलम्बिषमाणे सीदत्तेजसि तारकेश्वरे, कराग्रस्पृष्टकुमुदिनीप्रमोदजन्मनि शशधरप्रस्वेद इव गलत्यतिशीतलेऽवश्यायपयसि, मधुमदमत्तसुप्तसीमन्तिनीनिःश्वासाहतेषु सङ्क्रान्तमदेष्विव घूर्णमानेषु अन्तःपुरप्रदीपेषु, राजनि च रजनिकररुचिरविमलनखप्रतिबिम्बिताभिः संवाह्यमानचरण इव तारकाभिः, विस्रब्धप्रसारितैः दिगङ्गनानामिव अर्पितैरङ्गैः मधुसुगन्धिभिः स्वहस्तकमलतालवृन्तवातैरिव निःश्वसितैः मुखश्रिया वीज्यमाने, विमलकपोलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकचग्रहालम्बितेन प्रतिमाशशिबिम्बेन विराजिते स्वपति, देवी यशोवती सहसैव 'आर्यपुत्र !

---

'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः । अनुकूलभूतेन इत्यर्थः । जञ्जपूकः भृशं जपशीलः । जपि धातोः 'लुपसद' (पा० सू० ३. १. २४.) इत्यादिसूत्रेण यङ्प्रत्यये, ततो 'यजजपदशां यङः' (पा० सू० ३. २. १६६.) इत्यूकप्रत्यये च कृते जञ्जपूक इति रूपम् । यद्यपि जपिधातोर्भावगर्हायामेव प्रवृत्तिनिमित्ते यङो विधानं तथाप्यत्र तन्न विवक्षन्ति विद्वांसः । आदित्यहृदयं सौराष्टाक्षरमन्त्रम् ।

कराग्रेत्यादि । कराग्रेण किरणाग्रेण स्पृष्टकुमुदिनीप्रमोदजन्मनि स्पृष्टकुमुदिनीकतयोत्पन्नेन हर्षेण सम्भूते । कराग्रेत्युक्ते[1] हस्ताग्रमिति च गम्यते[2] । सङ्क्रान्तमदेषु सीमन्तिनीभ्य इति शेषः । संवाह्यमानं मृद्यमानम् । दिगङ्गनानामिवार्पितैः दिगङ्गनार्थं दत्तैरिवाङ्गैरुपलक्षितः । मधुसुगन्धिभिः मधुना सुगन्धिभिश्च । निःश्वसितैः मुखश्रिया वीज्यमाने निःश्वसितैः करणैः मुखश्रिया कर्त्र्या वीज्यमाने । आर्यपुत्र, एतत् पतीनां नाम । 'पतिस्त्वार्य आर्यपुत्रः' इति वैजयन्ती ।

---

१. 'कराग्रेणेत्युक्ते', २ 'ग्रेणेति ध्वन्यते'-क.

आर्यपुत्र! परित्रायस्व' इति भाषमाणा भूषणरवेण व्याहरन्तीव परिजनमुत्कम्पमानाङ्गयष्टिरुदतिष्ठत्।

अथ स तेन सर्वस्यां पृथिव्यामपि अश्रुतपूर्वेण किमुत देवीमुखे परित्रायस्वेति ध्वनिना दग्ध इव श्रवणयोरेकपद एव निद्रां तत्याज राजा। शिरोभागाच्च कोपकम्पमानदक्षिणकराकृष्टेन कर्णोत्पलादिव निर्गच्छताच्छधारेण धौतासिना सीमन्तयन्निव दिशामन्तरालं व्यवधायकमाकाशमिव उत्तरीयांशुकं विक्षिपन्, वामकरपल्लवेन करविक्षेपवेगगलितेन हृदयेनेव भयनिमित्तान्वेषणाय भ्रमता दिक्षु वलयेन सत्वरावतारितवामचरणाक्रान्तिकम्पितप्रासादः पुरःपतितेन असिधारागोचरगतेन शशिमयूखमण्डलेनेव खण्डितेन हारेण विराजमानः, लक्ष्मीचुम्बनताम्बूलरसरञ्जिताभ्यामिव निद्रया कोपेन चातिलोहिताभ्यां लोचनाभ्याम् आपाटलयन्निव दिक्पर्यन्तान्, आबद्धान्धकारया त्रिपताकया भ्रुकुट्या पुनरपि त्रियामां परिवर्तयन्निव 'देवि! न भेतव्यं, न भेतव्यम्' इति अभिदधानो वेगेनोत्पपात। सर्वासु च दिक्षु विक्षिप्तचक्षुः यदा नाद्राक्षीत् किञ्चिदपि तदा पप्रच्छ तां भयकारणम्।

अथ गृहदेवतास्विव प्रधावितासु यामिकविलासिनीषु, प्रतिबुद्धे च समीपशायिनि परिजने, शान्ते च हृदयोत्कम्पकारिणि साध्वसे सा समभाषत— 'आर्यपुत्र! जानामि स्वप्ने भगवतः सवितुर्मण्डलान्निर्गत्य द्वौ कुमारकौ तेजोमयौ बालातपेनेव पूरयन्तौ दिग्भागान्, वैद्युतमयमिव

---

ध्वनिना शब्देन। एकपदे तत्क्षणे। सीमन्तयन् भिन्दन्। व्यवधायकं तिरोधायकम्। वलयेन उपलक्षितः। त्रिपताकया— 'परसम्बद्धाकुञ्चितानामिकाङ्गुष्ठमङ्गुलित्रयं त्रिपताके'ति केचित्। तथा च वैजयन्ती— 'पताकः कुञ्चिताङ्गुष्ठे संश्लिष्टप्रसृताङ्गुलौ' इति। ऊर्ध्वीभूतपताकरूपसिरात्रययुक्तयेत्यर्थः।

प्रधावितासु शीघ्रमागतासु। यामिकः यामे नियुक्तः। जानामि स्मरामि

जीवलोकं कुर्वाणौ मकुटिनौ कुण्डलिनौ कवचिनौ अङ्गदिनौ गृहीतशस्त्रौ इन्द्रगोपकरुचा रुधिरेण स्नातौ उन्मुखोत्तमाङ्गेन घटमानाञ्जलिना जगता निखिलेन प्रणम्यमानौ कन्यकयैकया चन्द्रसूर्याविव सुषुम्नादीधित्या निर्गतयानुगम्यमानौ क्षितितलमवतीर्णौ । तौ च मे बलाद् विलपन्त्याः शस्त्रेणोदरं विदार्य प्रवेष्टुमारब्धौ । प्रबुद्धा चास्मि आर्यपुत्र विक्रोशन्ती वेपमानहृदया ' इति ।

एतस्मिन्नेव क्रमे लक्ष्म्याः प्रथमालापः प्रथयन्निव तं स्वप्नफलम् उपतोरणं रराण प्रभातशङ्खः । भाविनीं भूतिमभिदधाना इव दध्वनुः अमन्दं दुन्दुभयः । चक्काण च कोणाहतानन्दादिव प्रत्यूषनान्दी । जय जीवेति प्रबोधमङ्गलपाठकानाम् उच्चैर्वाचो विचेरुः । पुरुषश्च वल्लभतुरङ्गमन्दुरामन्दिरे मन्दं मन्दं सुप्तोत्थितः सप्तीनां कृतमधुरहेषारवाणां पुरश्च्योततुषारशीकरसलिलं विकिरन् मरकतहरितं यवसं वङ्कापरवङ्के पपाठ ।

'निधिस्तरुविकारेण सन्मणिः स्फुरता धाम्ना ।
शुभागमो निमित्तेन स्पष्टमाख्यायते लोके ॥

---

इत्यर्थः । स्वप्ने स्वप्नदर्शने । इन्द्रगोपः वर्षकालसम्भूतो रक्तवर्णः कृमिविशेषः । रुधिरेण स्नातौ एतेन जनिष्यमाणयोः कुमारयोः शत्रूणां रुधिरेण विलेपनं भविष्यतीति सूच्यते । विक्रोशन्ती आह्वयन्ती । 'क्रुश आह्वाने' इति धातुः ।

क्रमे अवसरे । प्रथमालापः प्रथमालापभूतः । उपतोरणं बहिर्द्वारसमीपे । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । रराण शब्दितवान् । चक्काण 'क्वण शब्दार्थे' । कोणः वादनदण्डः । आनन्दात् हर्षात् । नान्दी राज्ञां प्रबोधतूर्यम् (പള്ളിയെ ഴുന്നെള്ളിക്കൊട്ടു) । वल्लभतुरङ्गः राज्ञो बहुमताश्वः । सप्तीनाम् अश्वानाम् । श्च्योतत् स्रवत् ।

तरुविकारेण तरुः निधियुक्तप्रदेशरूढोऽत्र विवक्षितः । 'बहुत्वं वा बृहत्त्वं वा फलानामथवा गुणाः । सर्ववृक्षातिशायिन्यो विकाराः शाखिनां मताः ॥' इति ।

अरुण इव पुरस्सरो रविं पवन इवातिजडो जलागमम्।
शुभमशुभमथापि वा नृणां प्रथयति पूर्वनिदर्शनोदयः ॥'

नरपतिस्तु तच्छ्रुत्वा प्रीयमाणेनान्तःकरणेन ताम् अवादीत्—देवि! मुदोऽवसरे किं विषीदसि। समृद्धास्ते गुरुजनाशिषः। पूर्णा नो मनोरथाः। परिगृहीतासि कुलदेवताभिः। प्रसन्नस्ते भगवानंशुमाली। अचिरेणैव कालेन गुणवदपत्यत्रयलाभेन आनन्दयिष्यति' इति। अवतीर्य च यथाक्रियमाणाः क्रियाश्चकार। यशोवत्यपि तेन भर्तृभाषितेन सुतरां ननन्द।

ततः समतिक्रान्ते कस्मिंश्चित्काले देव्यां यशोवत्यां देवो राज्यवर्धनः प्रथमं सम्बभूव गर्भे। गर्भस्थस्यैव यस्य यशसेव पाण्डुताम् अधत्त जननी। गुणगौरवाक्रान्तेव गात्रमुद्वोढुं न शशाक। अमृतरसतृप्तेव चाहारं प्रति पराङ्मुखी बभूव। शनैःशनैः उपचीयमानगर्भभरालसा च गुरुभिः वारितापि वन्दनाय कथमपि सखीभिः हस्तावलम्बेन आनीयत। विश्राम्यन्ती सा सालभञ्जिकेव समीपगतस्तम्भे तस्तम्भे। कमललोभनिलीनैः अलिकुलैरिव धृतावुद्धर्तुं न शशाक चरणौ। मृणालधवलचरणनखमयूखलग्नैः भवनकलहंसैरिव सञ्चार्यमाणा मन्दं मन्दं बभ्राम। मणिभित्तिनिपातिनीषु प्रतिमास्वपि हस्तावलम्बलोभेन प्रसारयामास करतलं, किमुत सखीषु। माणिक्यस्तम्भदीधितीरपि आलम्बितुम् आचकाङ्क्षे, किमुत पुनर्भवनलताः। समादेष्टुमपि असमर्था आसीत्, कैव कथा गृहकार्याणि पुनः कर्तुम्। आस्तां नूपुरभारखेदितं चरणयुगलं, मनसापि नासहत सौधमारोढुम्। अङ्गान्यपि न अशक्नत् धारयितुं, दूरे भूषणानि। चिन्तयित्वापि क्रीडापर्वतकारोहणम् उत्कम्पितस्तनी तत्रास।

---

अतिजडः अतिशीतलः। निदर्शनं लिङ्गम्। आनन्दयिष्यति अंशुमालीति शेषः। आनन्दयिष्यति भवतीमिति केषुचित् कोशेषु पाठः।

गर्भे उदरे। तस्तम्भे स्तब्धा आसीत्। 'ष्टभि प्रतिबन्ध' इति धातुः। धृतौ गृहीतौ। समादेष्टुं नियोक्तुम्। तत्रास त्रस्ताभूत्।

प्रत्युत्थानेषु उभयजानुशिखरविनिहितकरकिसलयापि गर्वादिव गर्भेण अवार्यत । दिवसमधोमुखी स्तनपृष्ठसङ्क्रान्तेन अपत्यदर्शनौत्सुक्याद् अन्तःप्रविष्टेनेव मुखकमलेन प्रीयमाणा ददर्श गर्भम् । उदरे तनयेन मनसि च भर्त्राधिष्ठिता द्विगुणमिव लक्ष्मीमुवाह । पत्युरुत्सङ्गमुक्तशरीरा च शरीरपरिचारिकाणामङ्केषु सपत्नीनां शिरस्सु च पादौ चकार । अवतीर्णे च दशमे मासि सर्वोर्वीभृत्पक्षपाताय वज्रपरमाणुभिरिव निर्मितं त्रिभुवनभारवहनसमर्थं शेषफणामण्डलैरिव कल्पितं सकल-भूभृत्कम्पकारिणं दिग्गजावयवैरिव विहितमसूत देवी देवं राज्यवर्धनम् । यस्मिंश्च जाते जातप्रमोदा नृत्तमय्य इवाजायन्त प्रजाः । पूरितासङ्ख्य-शङ्खरवमुखरं, प्रहतपटहशतपटुरवगम्भीरं, भेरीनिनादनिर्भरभरितभुवनं, प्रमोदमत्तमर्त्यमनोहरं, मासमेकं एकदिवसमिव महोत्सवमकरोन्नरपतिः ।

अथ तथापरस्मिन्नतिक्रान्ते कस्मिंश्चित् काले कन्दलिनि मुकुलित-कदम्बतरौ रूढतरुणतृणस्तम्बे स्तिमिततामरसे विकसितचातकचेतसि मूकमानसौकसि नभसि देव्या देवक्या इव चक्रपाणिः यशोवत्या हृदये

---

* [गर्वादिव गर्भेणावार्यत गर्भस्थवीरस्यान्यदर्शने प्रत्युत्थानादेरनिष्टत्वादिति भावः । पत्युरुत्सङ्ग इति पाठः । सपत्नीनां शिरस्सु पादौ चकार— पत्युरुत्सङ्गे शरीरमोचनेन सपत्नीनां शिरःस्वपि पादौ कृताविवेति भावः ।] उर्वीभृत्पक्षपाताय राजबलविनाशाय । अन्यत्र पर्वतपक्षविनाशाय । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । त्रिभुवनभारवहनं त्रिभुवन-कार्यनिर्वाहः । अन्यत्र त्रिभुवनाख्यभारधारणम् । भूभृत्कम्पः राज्ञां भयम्, पर्वतचलनं च । निर्भरभरितम् अतिमात्रपूरितम् । प्रमोदः हर्षः ।

कन्दलिनि सिलिन्ध्रवति । तृणस्तम्बः तृणगुच्छः (പുൽമുതൽ) । 'पुञ्जिलस्तु तृणस्तम्बः' इति वैजयन्ती । मूकमानसौकसि निःशब्दहंसे । हंसास्तु श्वेतगरुतः चक्राङ्गा मानसौकसः' इत्यमरः । नभसि नभोमासे, (ശ്രാവണിമാസം) । 'श्रावणस्तु स्यान्नभाः श्रावणिकश्च सः' इति सिंहः ।

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

गर्भे च सममेव सम्बभूव देवो हर्षः। शनैः शनैश्चास्याः सर्वप्रजा-पुण्यैरिव परिगृहीता भूयोऽपि पाण्डुताम् अङ्गयष्टिर्जगाम। गर्भारम्भेण श्यामायमानचारुचूचुकचूलिकौ चक्रवर्तिनः पातुं मुद्रिताविव पयोधर-कलशौ बभार। स्तन्यार्थमाननिहिता दुग्धनदीव दीर्घस्निग्धधवला माधुर्यम् आधत्त दृष्टिः। सकलमङ्गलगणाधिष्ठितगात्रगरिम्णेव गतिः अमन्दायत। मन्दमन्दं सञ्चरन्त्या निर्मलमणिकुट्टिमलग्नप्रतिबिम्बनिभेन गृहीतपादपल्लवा पूर्वसेवामिवारेभे पृथिवी। दिवसमधिशयानायाः शयनीयापाश्रयपत्रभङ्गपुत्रिकाप्रतिमा विमलकपोलोदरगता प्रसवसमयं प्रति-पालयन्ती लक्ष्मीरिवालक्ष्यत। क्षपासु सौधाग्रगताया गर्भोन्माथ-मुक्तांशुके स्तनमण्डले सङ्क्रान्तमुडुपतिमण्डलमुपरि गर्भस्य श्वेतातपत्रमिव केनापि धार्यमाणमदृश्यत। सुप्ताया वासभवनभित्तिचित्रचामरग्राहिण्यो-ऽपि चामराणि चालयाञ्चक्रुः। स्वप्नेषु करधृतकमलिनीपलाशपुटसलिलैः चतुर्भिरपि दिक्करिभिरक्रियताभिषेकः। प्रतिबुद्ध्यमानायाश्च चन्द्रशालिका-सालभञ्जिकाजनोऽपि जयशब्दम् असकृदजनयत्। परिजनाह्वानेषु आज्ञापयेत्यशरीरा वाचो विचेरुः। क्रीडयापि नासहत आज्ञाभङ्गम्।

---

हर्षः प्रीतिः, हर्षराजश्च। चूचुकचूलिका चूचुकं कुचाग्रेषु कृष्णः प्रदेशः। चूलिक-शब्देन अग्रग्रन्थिर्विवक्षितः। मुद्रिता मुद्रया बद्धा। पयोधरकलशौ स्तनकुम्भौ, सजलजलधरघटाविति च। माधुर्यं सरसतां, स्वादुतां च। कुट्टिमं मणिबद्धभूमिः। पूर्वसेवाम् अन्यसेवकेभ्यः पूर्वमेव परिचर्याम्। अपाश्रयः मत्तवारणं(ചാരുമണ)[1]। 'अपाश्रयो मत्तवारणम्' इत्यासनप्रकरणे वैजयन्ती। अत्र अपाश्रयगतमुपधानं लक्ष्यते। पत्रभङ्गपुत्रिकाप्रतिमा पत्रभङ्गरूपेण तन्त्वादिभिरुत्कीर्णायाः पुत्रिकायाः प्रतिकृतिः। प्रतिपालयन्ती प्रतीक्ष्य तिष्ठन्ती। गर्भोन्माथः गर्भनिमित्तं पारवश्यम्। सुप्ताया इत्यादिषु पञ्चसु वाक्येषु चामरग्राहिण्यादीनां च चामरचालनादीनि तद्गर्भो-दरे चक्रवर्तिनो निवासात् सम्भूतानीत्यनुसन्धेयम्। चन्द्रशालिका शिरोभवनम्।

---

१. ക്രിമഞ്ഞ–क.

अपि च, चतुर्णामप्यर्णवानामेकीकृतेनाम्भसा स्नातुं वाञ्छा बभूव। वेलावनलतागृहोदरपुलिनपरिसरेषु पर्यटितुं हृदयमभिललाष। आत्ययिकेष्वपि कार्येषु सविभ्रमं भ्रूलता चचाल। सन्निहितेष्वपि मणिदर्पणेषु मुखमुत्खाते खड्गपट्टे वीक्षितुं व्यसनमासीत्। उत्सारितवीणाः स्त्रीजनविरुद्धा धनुर्ध्वनय एव श्रुतावसुखायन्त। पञ्जरकेसरिषु चक्षुररमत। गुरुप्रणामेष्वपि स्तम्भितमिव शिरः कथमपि ननाम। सख्यश्चास्याः प्रमोदविस्फारितैर्लोचनपुटैः आसन्नमहोत्सवधियेव धवलयन्त्यो भवनं विकचकुमुदकमलकुवलयपलाशवृष्टिमयं रक्षाबलिमिवानवरतं विदधाना दिक्षु क्षणमपि न मुमुचुः पार्श्वम्। आत्मोचितस्थाननिषण्णाश्च महान्तो विविधौषधिधरा भिषजो भूधरा इव भुवो भृतिं प्रचक्रुः। पयोनिधीनां हृदयानीव लक्ष्म्या सहागतानि ग्रीवासूत्रग्रन्थिषु प्रशस्तरत्नान्याबध्यन्त।

ततश्च प्राप्ते ज्यैष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्याम्

---

चतुर्णामित्यादिषु सप्तसु वाक्येषु गर्भस्थवीरतदात्मतया तस्या अपि वीरोचिता एतेऽर्था बभूवुरिति कथ्यते। अयं प्रकारो रघुवंशे महाकविना दर्शितः—'दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः। अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान् विलङ्घ्य सा॥' इति। वेला समुद्रतीरम्। आत्ययिकेषु आत्यन्तिकेषु सद्यः प्रतिकर्तव्येषु इत्यर्थः। व्यसनं तात्पर्यम्। सख्य इत्यादि। अत्रोत्सवसमये सुधादिभिर्भवनानि धवलयन्तीनां समाधिर्विवाक्षतः। विस्फारितैः विकसितैः। पलाशं दलम्। आत्मोचितेत्यादि। अनेन बालचिकित्सां भिषजः कृतवन्त इति सूचितम्। तथा रघुवंशे च—'कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि।' इति। ओषधिः, ओषधिशब्देन ओषधीनां प्रकृतिद्रव्यमभिधीयते। अन्यत्र ओषधिर्वृक्षः। भृतिं रक्षां, धारणं च।

ज्यैष्ठामूलीये मासि ज्येष्ठा च मूलं च ज्येष्ठामूले, तेन युक्ता च पौर्णमासीति 'द्वन्द्वाच्छः' (पा० सू० ४. २. ६.) इति छः। ततो ज्यैष्ठामूलीया

---

१. 'अक्षन्तेषु'—क.

अतीते प्रदोषसमये समारुरुक्षति क्षपां यौवने सहसैवान्तःपुरे समुदपादि महान् कोलाहलः स्त्रीजनस्य। निर्गत्य च ससम्भ्रमं यशोवत्याः स्वसेव हृदयनिर्विशेषा धात्र्याः सुता सुयात्रेति नाम्ना राज्ञः पादयोर्निपत्य 'देव! दिष्ट्या वर्धसे द्वितीयसुतजन्मना' इति व्याहरन्ती पूर्णपात्रं जहार।

अस्मिन्नेव च भागे राज्ञः परमसम्मतः शतशः सम्पादितातीन्द्रियादेशदर्शितप्रभावः सङ्कलिती ज्यौतिषे, सर्वासां ग्रहसंहितानां पारदृश्वा, सकलगणकगणमध्ये महितो हितश्च त्रिकालज्ञानभाग् भोजकस्तारको नाम गणकः समुपसृत्य विज्ञापितवान्— 'देव! श्रूयते मान्धाता किलैवंविधे

---

पौर्णमास्यस्मिन्निति 'सास्मिन् पौर्णमासीति' (पा० सू० ४. २. २१.) इति संज्ञायामण्। अणो णित्त्वादादिवृद्धिः। ततो ज्यैष्ठामूलीयमिति रूपम्। शुक्रमास इत्यर्थः (ആനി മാസം)। यथा सहस्यादिमासानां पुष्यादिनक्षत्रयुक्तपौर्णमासीयोगात् पौषादीनि नामानि भवन्ति एवं शुक्रमासस्यापि ज्येष्ठामूलयुक्तपौर्णमासीयोगात् ज्यैष्ठामूलीय इति नाम। बहुलासु कृत्तिकासु। नक्षत्राणां बहुत्वाद् बहुवचनप्रयोगः कृतो न तु शब्दस्वाभाव्यात्। बहुलपक्षः कृष्णपक्षः। 'बहुलः कृष्णपक्षेऽग्नौ पुमांस्त्रिष्वासिते बहौ। स्त्री स्यात् पृथिव्यामुस्रायामेलायां कृत्तिकासु च॥' इति वैजयन्ती। समारुरुक्षति क्षपां यौवने क्षपायां याममात्रेऽतीत इत्यर्थः। पूर्णपात्रम्— उत्सवेऽभ्युदयवादिभिः जनैराच्छिद्य गृह्यमाणं वस्तु। अत्र वैजयन्ती— 'उत्सवेषु सुहृद्भिर्यद् बलादाकृष्य गृह्यते। वस्त्रमाल्यादि तत् पूर्णपात्रं पूर्णानकं च तत्॥' इति।

भागे अंशेऽवसरे इत्यर्थः। सम्पादितम् अव्यभिचरितफलम्। अतीन्द्रियादेशः अप्रत्यक्षार्थकथनम्। सङ्कलिती ज्यौतिषे ज्योतिश्शास्त्रे सङ्कलितयुक्तः सम्यग्गणनायुक्त इत्यर्थः। सङ्कलितशब्दात् सङ्कलितमनेनेति 'इष्टादिभ्यश्च' (पा० सू० ५. २. ८८.) इति इनिप्रत्ययः। ज्यौतिषशब्दात् 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' (वा० २. ३. ३६.) इति कर्मणि सप्तमी। ग्रहसंहितानां होरादीनां ग्रहणशास्त्राणाम्। गणकः ज्यौतिषिकः। हितः हितकारी। भोजकः

व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि सर्वेषूच्चस्थानस्थितेषु ग्रहेष्वीदृशि लग्ने लेभे जन्म। अर्वाक् ततोऽस्मिन्नन्तराळे पुनरेवंविधे योगे चक्रवर्तिजनने नाजनि जगति कश्चिदपरः। सप्तानां चक्रवर्तिनाम् अग्रणीः, सप्तानां चक्रवर्तिचिह्नानां समाश्रयः, सप्तानां सागराणां पालयिता, सप्तमहारत्नानां भाजनं, सप्ततन्तूनां सर्वेषां प्रवर्तयिता, सप्तसप्तिसमः सुतोऽयं देवस्य जातः' इति।

---

इति वैजयन्ती। व्यतीपातः दानव्यतिरिक्तेषु सर्वकर्मसु निषिद्धोऽशुभः कश्चिद् योगः। अभिषङ्गः सम्बन्धः। सर्वेषु, सर्वशब्देन येषामुच्चस्थानस्थितिः सम्भवति ते विवक्षिताः। न तु समग्रा ग्रहाः। समस्तग्रहाणां युगपदुच्चस्थितेरसम्भवात्। उच्चस्थानस्थितेषु उच्चस्थानात्युच्चस्थानभागगतेषु। तानि च होरायामुक्तानि—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः॥' इति। एतेनास्य दिव्यांशत्वं दर्शितम्। उक्तं च—'सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः। एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः॥' इति। एकद्वित्रिचतुर्भिरुच्चस्थितैर्ग्रहैः सुख्यादयो भवन्ति। पञ्चादिभिर्ग्रहैरुच्चस्थितैः दिव्या भवन्तीत्यस्य श्लोकस्यार्थः। लग्ने राश्युदये। अर्वाग् अपरकालसूचकमव्ययमिदम् (ஐ௨௰௰௮)। अन्तराले हर्षमान्धात्रोर्मध्ये। सप्तानामित्यादीनि पदानि सुतस्य विशेषणानि। चक्रवर्तिनाम्—'भरतेक्ष्वाकुमान्धातृनलजह्नुययातयः। नहुषश्चेति कथिताः सप्तैते चक्रवर्तिनः॥' इति। अग्रणीः श्रेष्ठः। चक्रवर्तिचिह्नानाम्—'दण्डाङ्कुशौ चक्रचापौ श्रीवत्सः कुलिशं तथा। मत्स्यश्चैतानि चिह्नानि कथ्यन्ते चक्रवर्तिनाम्॥' इति। सागराणाम्—'लवणोदः सुरोदश्च क्षीरोदश्च घृतोदकः। इक्षूदश्च जलोदश्च दध्योदः सप्त सागराः॥' इति। महारत्नानाम्—'अश्वो गजः स्त्री पुरुषः खड्गश्च गृहतन्त्रकम्। मन्त्री चैतानि रत्नानि कथ्यन्ते चक्रवर्तिनाम्॥' सप्ततन्तूनां यागानाम्। प्रवर्तयिता कर्ता।

---

१. 'सर्वग्र'-क. २. 'शकत्वं दर्शयति'-ख, ग. ३. 'मणिश्च'-क.

अत्रान्तरे स्वयमेवानाध्माता अपि तारमधुरं शङ्खा विरेसुः। अताडितोऽपि दिक्षु क्षुभितजलनिधिजलध्वनिधीरं जुगुञ्जाभिषेकदुन्दुभिः। अनाहतान्यपि मङ्गलतूर्याणि रेणुः। सर्वभुवनविजयघोषणापटह इव दिगन्तरेषु बभ्राम तूर्यप्रतिशब्दः। विधुतकेसरसटाश्च साटोपं गृहीतहरितदूर्वापल्लवकबलप्रशस्तैः मुखपुटैः समम् अहेषन्त हृष्टा वाजिनः। सलीलम् उत्क्षिप्तैर्हस्तपल्लवैर्नृत्यन्त इव श्रवणसुभगं जगर्जुर्गजाः। ववौ चिराच्च चक्रायुधमुत्सृजन्त्याः श्रियो निःश्वास इव सुरकुसुमामोदसुरभिर्दिव्यानलः। यज्वनां मन्दिरेषु प्रदक्षिणशिखाकलापेन कथितकल्याणागमाः प्रजज्वलुः अनिन्धना वैतानवह्नयः। भुवस्तलात् तपनीयशृङ्खलाबन्धबन्धुरकलशकोशाः समुद्गमन् महानिधयः। प्रहतमङ्गलतूर्यप्रतिशब्दनिभेन दिक्पालैरपि प्रमोदादक्रियतेव दिष्टिवृद्धिकलकलः। तत्क्षण एव शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातयः। साक्षाद्धर्म इव शान्त्युदकहस्तः प्रादुरभूत् पुरोधाः। पुरातन्यः स्थितय इवादृश्यन्त आगता बान्धववृद्धाः। प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्ककायानि विनश्यतः कलिकालस्य बान्धवकुलानीवाकुलान्यधावन्त मुक्तानि बन्धनानि। तत्कालापक्रान्तस्याधर्मस्य शिबिरश्रेणय इवालक्ष्यन्त लोकलुण्टिता विपणिवीथ्यः। विलसदुन्मुखवामनवृन्दवेष्टिताः साक्षाज्जातमातृदेवता इव बहुबालव्याकुला ननृतुर्वृद्धधात्र्यः।

---

अनाध्माताः मुखानिलेनापूरिताः। विरेसुः ध्वनयन्ते स्म। जुगुञ्ज शब्दितवान्। अहेषन्त हेषाशब्दं कुर्वन्ति स्म। जगर्जुः बृंहितवन्तः। सुरकुसुमामोदसुरभिरिति पाठः। अनिन्धना अकाष्ठापेक्षाः। वैतानवह्नयः गार्हपत्यादयः। तपनीयशृङ्खला स्वर्णरज्जुः। कलशकोशाः कलशधनसमूहाः। ब्रह्ममुखाः वेदवदनाः, विधातृप्रमुखाश्च। पुरातन्यः स्थितयः कलिकालत्वाद् विनष्टाः कृतयुगसम्बन्धिन्यो मर्यादाः। बन्धनानि कारागृहबन्धाः। लुण्टिताः यथेष्टं विलुप्ताः। विपणिवीथ्यः पण्यवीथिकामार्गाः। जातमातृदेवताः

प्रावर्तत च विगतराजकुलस्थितिः अपहृतप्रतीहारायतिरपनीतवेत्रिवेत्रो निर्दोषान्तःपुरप्रवेशः समस्वामिपरिजनो निर्विशेषबालवृद्धः समानशिष्टाशिष्टजनो दुर्विज्ञानमत्तामत्तप्रविभागः तुल्यकुलयुवतिवेश्याबलाविलासः प्रनृत्तसकलकटकजनः पुत्रजन्मोत्सवो महान् ।

अपरेद्युरारभ्य सर्वाभ्यो दिग्भ्यः स्त्रीराज्यानीव आवर्जितानि, असुरविवराणीव अपावृतानि, नारायणावरोधनानीव प्रचलितानि, अप्सरसामिव अवनिमवतीर्णानि कुलानि, परिजनेन पृथुकरण्डकपरिगृहीतस्नानीयचूर्णावकीर्णसुमनसः स्फटिकशिलाशकलशुक्लकर्पूरपूरिताः पात्रीः कुङ्कुमवासभाञ्जि भाजनानि च मणिमयानि सहकारतैलतिम्यत्तनुखदिरकेसरजटिलानि, चन्दनधवलपूगफलपालीदन्तुरदन्तशफरुकाणि कूजन्मधुकरकुलपीयमानपारिजातकपरिमलानि पटलकानि सिन्दूरपात्राणि पिष्टातकपात्राणि च लतालम्बमानविकटवीटिकांश्च

---

षष्ठीदेवीप्रभृतयो मातृदेवताविशेषाः। आयतिः प्रभावः। कटकजनः पुरवासिजनः।

अपरेद्युरारभ्य सर्वाभ्यो दिग्भ्यो राजकुलमागच्छन्ति सामन्तान्तःपुराण्यदृश्यन्तेत्यन्वयः । आवर्जितानि आनीतानि । असुरविवराणि असुरासनस्थानरन्ध्राणि । अनेन तत्रस्थाः स्त्रियो लक्ष्यन्ते । नारायणावरोधनानि षोडशस्त्रीसहस्राणि । परिजनेत्यादि । अत्रोच्यमाना अर्थाः साकल्येन श्रीभागवतपुराणे द्रष्टव्याः । करण्डकपरिगृहीताः पात्रविशेषनिक्षिप्ताः । स्नानीयं स्नानयोग्यम् । अवकीर्णसुमनसः मिश्रितपुष्पाः । पात्रीः भाजनानि । वासः गन्धसंस्कारः । तिम्यद् आर्द्रीभवत् । खदिरकेसरं केसरशब्देन चूर्णं लक्ष्यते । खदिर(वैर?)चूर्णमित्यर्थः । पूगफलपालिः क्रमुकफलसमूहः । दन्तशफरुकाणि दन्तमयशफरुकाणि । शफरुकम् ചെല്ലം[1] । पटलकानि भाजनविशेषान् (പടലിക) । सिन्दूरपात्राणि सिन्दूरनिधानपात्राणि । पिष्टातकः वस्त्रादीनां वासनचूर्णः । 'पिष्टातः पटवासकः' इत्यमरः । लता शाखा । वीटिका

---

1. പാടലിക്കെ.

ताम्बूलीवृक्षकान् बिभ्राणेनानुगम्यमानानि चरणनिकुट्टनरणितनूपुरमुखरितदिङ्मुखानि नृत्यन्ति राजकुलमागच्छन्ति समन्तात् सामन्तान्तःपुरसहस्राण्यदृश्यन्त।

शनैःशनैः व्यजृम्भत च क्वचित् नृत्तानुचितचिरन्तनशालीनकुलपुत्रलोकलास्यप्रथितपार्थिवानुरागः, क्वचिदन्तःस्मितक्षितिपालावेक्षितक्षीवक्षुद्रदासीकृष्यमाणराजवल्लभः, क्वचित् मत्तकटककुट्टिनीकण्ठलग्नवृद्धार्यसामन्तनृत्तनिर्भरहसितनरपतिः, क्वचित् क्षितिपाक्षिसंज्ञानिर्दिष्टदुष्टदासेरकगीतिसूच्यमानसचिवचौर्यरतप्रपञ्चः, क्वचित् मदोत्कटकुटहारिकापरिष्वज्यमानजरत्प्रव्रजितजनितजनहासः, क्वचिद् अन्योन्यस्पर्धोद्धुरविटपेटकारब्धावाच्यवचनयुद्धः, क्वचिन्नृपावलाबलात्कारनर्त्यमाननृत्तानभिज्ञान्तःपुरपालभावितभुजिष्यः, सपर्वत इव कुसुमराशिभिः, सधारागृह इव सीधुप्रपाभिः, सनन्दनवन इव पारिजातामोदैः, सनीहार इव

---

ताम्बूलपत्रबन्धः (൭൨൦൦ിലച്ചുരം)। ताम्बूलीवृक्षकान् ताम्बूलवल्लीपरिणद्धवृक्षकान्। निकुट्टनं ताडनम्। नृत्यन्ति नर्तनं कुर्वाणानि। आगच्छन्ति आगमनं कुर्वाणानि।

व्यजृम्भत वर्धते स्म। अनुचितः अयोग्यः। शालीनः लज्जितः। क्षितिपालावेक्षित इति पाठः। क्षीबक्षुद्रा दासी मत्तवेश्या दासी। 'क्षुद्रा व्यङ्गा नटी वेश्या' इत्यमरः। कुट्टिनी दासी। कण्ठलग्नः कण्ठे कृतालिङ्गनः। आर्यः कुलीनः। 'आर्यः कौलेयको जात्यः कुलीनः कुलजोऽभिजः' इति वैजयन्ती। निर्भरम् अत्यर्थम्। अक्षिसंज्ञा अक्ष्णा सूचनम्। दासेरकः दासः। 'भृत्ये दासेरदासेयदासगोप्यकचेटकाः' इत्यमरः। चौर्यरतप्रपञ्चः चौर्यकृतसुरतविस्तारः। मदोत्कटः मदाधिकः। कुटहारिका कुम्भदासी। 'पोटा चेटा तथा दासी चेटी स्यात् कुटहारिका' इति हलायुधः। प्रव्रजितः सन्न्यासी। विटपेटकः धूर्तसमूहः। अवाच्यवचनयुद्धः असभ्यभाषणनिमित्तकलहः। भावितः हृष्टचित्तः। पारिजातं जातीफलम्, कल्पकवृक्षश्च।

---

१. 'द्रान् कृत्रिमवृक्षान्'–क.

कर्पूररेणुभिः, साट्टहास इव पटुपटहशतैः, सामृतमथन इव कलकलैः, सावर्त इव रासमण्डलैः, सरोमाञ्च इव भूषणमणिकिरणनिकरैः, सपङ्क इव चन्दनललाटिकाभिः, सप्रसव इव प्रतिशब्दकैः, सप्ररोह-प्रसाददानैरुत्सवप्रमोदः ।

स्कन्धावलम्बिकेसरमालाः काम्बोजवाजिन इव आस्कन्दन्तः, तरलतारका हरिणा इव उड्डीयमानाः, सगरसुता इव खनित्रैः निर्दयैश्चरणाभिघातैः दारयन्तो भुवम्, अनेकसहस्रसङ्ख्याश्चिक्रीडुः युवानः । कथमपि तालावचरचारणचरणक्षोभं चक्षमे क्ष्मा । क्षितिपालकुमाराणां च खेलताम् अन्योन्यास्फालितैः आभरणेषु मुक्ताफलानि फेलुः । सिन्दूररेणुना पुनरुत्पन्नहिरण्यगर्भगर्भशोणितशोणाशमिव ब्रह्माण्डकपालमभवत् ।

---

रासः नृत्तविशेषः (കോലടിക്കളി[1]) ।

केसरमाला बकुलमाला । अन्यत्र अश्वस्कन्धदेशरोममाला । आस्कन्दन्तः नृत्यन्तः, आस्कन्दिताख्यगत्या गच्छन्तश्च । तरलतारका भास्वरमौक्तिका, चञ्चलाक्षिकनीनिका च । 'तारस्तु मुक्ताशुद्धौ सुमौक्तिके' इति वैजयन्ती । खनित्रैः खननहेतुभिः कुद्दालादिखननसाधनैः । तालावचरः— 'करांस्तु तालं कृत्वा ये गीतं नृत्तं च कुर्वते । ते तालावचराः प्रोक्ता गीतिशास्त्रविशारदैः ॥' इति । चारणः कुशीलवः । चक्षमे सेहे । खेलतां क्रीडताम् । आस्फालनैः सङ्घट्टनैः । फेलुः विशीर्णानि । 'ञि फला विशरणे' इति धातुः । गर्भशोणितम् उदरनिर्गतं रक्तम् । शोणाशं शोणदिक्कम् । ब्रह्माण्डकपालं, ब्रह्माण्डशब्देन स्वर्गभूम्योर्मध्यो लक्ष्यते । कपालशब्देन ब्रह्माण्डस्य कपालभूतत्वात् स्वर्गभूमी उच्येते । स्वर्गभूमिमध्यवर्ति सर्वमित्यर्थः । अत्र मनुः— 'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् ब्रह्मा स्वयं जज्ञे सर्वलोकपितामहः ॥ तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् । स्वयमेवात्मनो

---

[1] കോലടിക്കളി.

पटवासपांसुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभस्तलम्। विकीर्यमाणपिष्टातकपरागपिञ्जरितातपा भुवनक्षोभविशीर्णपितामहकमल-किञ्जल्कराजिरञ्जिता इव रेजुर्दिवसाः। सङ्घट्टविघट्टितहारपतितमुक्ताफलपटलेषु चस्खाल लोकः।

स्थानस्थानेषु च मन्दमन्दमास्फाल्यमानालिङ्ग्यकेन शिञ्जानमञ्जुवेणुना झणझणायमानझल्लरीकेण ताडयमानतन्त्रीपटहेन वाद्यमानानुत्तालालाबुवीणेन झणत्कांस्यकोशीकलितकाहलेन समकालदीयमानोत्तरलतालकेन आतोद्येनानुगम्यमानाः, पदे पदे झणज्झणरणित-

---

ध्यानात् तदण्डमकरोद् द्विधा ॥ ताभ्यां स शकलाभ्यां तु दिवं भूमिं च निर्ममे। मध्ये व्योम दिशश्चाष्टौ अपां स्थानं च शाश्वतम् ॥' इति। पटवासपांसुः पटवासानां सुगन्धीकरणचूर्णम्। अत्र चन्दनादिपांसुर्विवक्षितः। पिष्टातकपरागः अत्र कुङ्कुमादिः। सङ्घट्टविघट्टितं परस्परविमर्दभिन्नम्। चस्खाल 'स्खल चलने' इति धातुः।

स्थानस्थानेषु प्रानृत्यन्निति सम्बन्धः। आस्फाल्यमानः आहन्यमानः। आलिङ्ग्यः आलिङ्ग्य वादनीयो मुरजविशेषः। 'मृदङ्गा मुरजा भेदास्त्वङ्क्याालिङ्ग्योर्ध्वकास्त्रयः' इत्यमरः। वेणुः वंशः (குழல்)। झल्लरी वाद्यविशेषः(காளம்)[1]। तन्त्रीपटहः तन्त्रीयुक्तः पटहः (உடுக்கை)[3]। अनुत्ताला मृदुः। अलाबुवीणा अलाबुकर्परयुक्ता वीणा। (अलाबुः சுரைக்குடுக்கை)। झणत् झणदिति शब्दायमानम्। कांस्यकोशी[4] कांस्यलोहकृता कोशी। काहलः காளம்। दीयमानं सम्पाद्यमानम्। उत्तरलम् अव्यवस्थितम्। तालं नालम् (?)। आतोद्येन वीणादिना चतुर्विधेन वाद्येन। अत्रातोद्यं साकल्येन दर्शितम्। तथाहि— आलिङ्ग्यः झल्लरी तन्त्रीपटहः आनद्धं, वेणुः कांस्यकोशी काहलः सुषिरं, वीणा ततं, तालकं घनमिति। अत्र भरतः— 'ततं चैवावनद्धं च घनं सुषिरमेव च। चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥' इति। पदे पदे प्रतिचरणविक्षेपम्। झणज्झणरणित-

---

१. 'णार्थं चू', २. झल्लरी=காடி, ३. இடக்கை (டக்கா),
४. कांस्यकोशी=வெண்கலக்கொம்பு-க.

भूषणैरपि सहृदयैरिव अनुवर्त्यमानलयाः, कोकिला इव मदकलकाकलीकोमलालापिन्यः, विटानां कर्णामृतानि अश्लीलरासकपदानि गीतकानि गायन्त्यः, समुण्डमालिकाः सकर्णपल्लवाः सचन्दनतिलकाः समुच्छ्रिताभिः वलयावलिवाचालाभिः बाहुलतिकाभिः सवितारमिवाह्वयन्त्यः, कुङ्कुमप्रमृष्टरुचिरकायाः किशोर्य इव वल्गन्त्यः, नितम्बलम्बिविकटकुरण्डकशेखराः प्रदीप्ता इव रागाग्निना, सिन्दूरच्छटाच्छुरितमुखमुद्राः शासनपटीपङ्क्तय इव अप्रतिहतशासनस्य कन्दर्पस्य, मुष्टिप्रकीर्यमाणकर्पूरपटवासपांसुला मनोरथसञ्चरणरथ्या इव यौवनस्य, उद्दामकुसुमदामताडिततरुणजनाः प्रतिहार्य इव महोत्सवस्य, प्रचलितपत्रकुण्डला ललन्त्यो लता इव आनन्दनन्दनवनस्य, ललितपदहंसकरवमुखराः समुल्लसन्त्यो वीचय इव शृङ्गाररससागरस्य, वाच्यावाच्यविवेकशून्या बालक्रीडा इव

---

भूषणैः झणज्झणरणितैः भूषणैः। लयः नृत्तगीतवाद्यानाम् एकतालता। कोकिलाः कोकिलस्त्रियः। मदकलकाकलीकोमलालापिन्यः मदेन कलः मधुरः काकली कलसूक्ष्मः कोमलः सरसश्च आलापः यासाम्। उभयत्र समानम्। उक्तं च— 'पुष्पसाधारणे काले पिकः कूजति पञ्चमम्' इति। अश्लीलरासकपदानि अश्लीलानि ग्राम्याणि रासकानि रासकाख्यनृत्ययोग्यानि (पदानि) वाक्यानि येषाम्। गीतकानि गेयानि। समुच्छ्रिताभिः ऊर्ध्वधृताभिः। प्रमृष्टं चर्चितम्। किशोर्यः अश्वानां स्त्रीपोताः। वल्गन्त्यः नृत्यन्त्यः, वल्गिताख्यगत्या गच्छन्त्यश्च। कुरण्डकशेखराः कुरण्डकपुष्पकृतशिरोमालाः। कुरण्डकः अम्लानः (വാടാകുറിഞ്ഞി)। सिन्दूरच्छटाच्छुरितमुखमुद्राः सिन्दूरचूर्णसमूहरचितमुखतिलकाः। अन्यत्र चिह्नत्वेन सिन्दूरच्छायाच्छुरितमुखप्रदेशमुद्रा यासाम्। शासनपटीपङ्क्तयः निर्देशार्थाः पटीपङ्क्तयः। पत्रकुण्डलं तालीपत्रदलादिभिर्विरचितं कर्णाभरणम्। अन्यत्र पत्रं दलं तदेव कुण्डलम्। ललन्त्यः नृत्यन्त्यः। ललितपदहंसकरवमुखराः ललितैः पदहंसकानां चरणकटकानां रवैः मुखराः। 'हंसकः पादकटकः' इत्यमरः। अन्यत्र ललितपदानां ललितपादन्यासानां हंसानां रवैः मुखराः। समुल्लसन्त्यः

---

१. 'मत्तविशेषयो'—क.

सौभाग्यस्य, घनपटहरवोत्कण्टकितगात्रयष्टयः केतक्य इव कुसुमधूलिम् उत्किरन्त्यः, कमलिन्य इव दिवसमुत्फुल्लाननकमलाः, कुमुदिन्य इव रात्रावनुपजातनिद्राः, आविष्टा इव नरेन्द्रवृन्दपरिगृहीताः, प्रीतय इव हृदयम् अपहरन्त्यः, गीतमय्य इव रागमुद्दीपयन्त्यः, परपुष्टा इव उन्मादमानयन्त्यः, मदमपि मदयन्त्य इव, रागमपि रञ्जयन्त्य इव, आनन्दमप्यानन्दयन्त्य इव, नृत्तमपि नर्तयमाना इव, औत्सुक्यमप्युत्सुकयन्त्य इव, कटाक्षेक्षितेषु पिबन्त्य इव अपाङ्गशुक्तिभिः, तर्जनेषु संयमयन्त्य इव नखमयूखपाशैः, कोपाभिनयेषु ताडयन्त्य इव भ्रूलताविभागैः, प्रणयसम्भाषणेषु वर्षयन्त्य इव सर्वरसान्, चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारान् पण्यविलासिन्यः प्रानृत्यन् ।

अन्यत्र वेत्रिवेत्रवित्रासितजनदत्तान्तरालाः, ध्रियमाणधवलातपत्रवना वनदेवता इव कल्पतरुतलचारिण्यः, काश्चित् स्कन्धोभयपालिलम्बमानलम्बोत्तरीयलग्नहस्ता लीलादोलाधिरूढा इव प्रेङ्खन्त्यः, काश्चित् कनककेयूरकोटिपाटयमानपट्टांशुकतरङ्गाः तरङ्गिण्य इव तरच्चक्रवाक-

---

हर्षमाणाः, चलन्त्यश्च । घनपटहरवोत्कण्टकितगात्रयष्टयः महापटहध्वनिश्रवणाद् अतिपुलकिताङ्गयष्टयः । अन्यत्र मेघाख्यपटहध्वनिश्रवणात् सूचियुक्तदण्डाः । केतका मेघध्वनिश्रवणेन पुष्पिता भवन्तीति प्रसिद्धिः । उत्किरन्त्यः उपरि विक्षिपन्त्यः । दिवसं, दिवसशब्दः अहोरात्रस्योपलक्षणम् । अन्यत्र दिनवाची । उत्फुल्लाननकमलाः विकसितमुखकमलाः । अन्यत्र विकसितानन भूतकमलाः । निद्रा स्वापः, मुकुलीभावश्च । आविष्टाः भूतगृहीताः । नरेन्द्रः राजा, मन्त्रवादी च । रागं कामरागं स्वरमाधुर्यं च । उद्दीपयन्त्यः वर्धयन्त्यः, मूर्च्छयन्त्यश्च । उन्मादम् उद्रिक्तहर्षं, *[चित्तविभ्रमं च । संयमयन्त्यः बध्नन्त्यः । सर्वरसान् शृङ्गारादीन्, जलादीनि च । चङ्क्रमणेषु भ्रमणेषु । पण्यविलासिन्यः वेश्याः ।

अन्यत्रेत्यादिषु वाक्येषु न सन्ति श्लेषाः । उभयपालिः उभयप्रदेशः ।

सीमन्त्यमानस्रोतसः, काश्चिद् अवलूनमानचामरसटालम्बत्रिकण्टकपाली-वलितविकटकटाक्षाः सरस्य इव हंसाकृष्यमाणनीलोत्पलवनाः, काश्चित् चलच्चरणच्युतालक्तकरसारुणस्वेदशीकरसिच्यमानभवनकलहंसाः सन्ध्यानुरागरज्यमानेन्दुबिम्बा इव कौमुदीरजन्यः, काश्चित् कण्ठनिचित-काञ्चनकाञ्चीगुणाञ्चितकञ्चुकिविकाराकुञ्चितभ्रुवः कामवागुरा इव प्रसारित-बाहुपाशाः राजमहिष्यः प्रारब्धनृत्ता विलेसुः।

सर्वतश्च नृत्यतः स्त्रैणस्य गलद्भिः पादालक्तकैररुणिता रागमयीव शुशोण क्षोणी। समुल्लसद्भिः स्तनमण्डलैः मङ्गलकलशमय इवाभवन्महोत्सवः। भुजलतानां विक्षेपैः मृणालमय इव अराजत जीवलोकः। समुल्लसद्भिः विलासस्मितैः स्तटिन्मय इव अक्रियत कालः। चञ्चतां चक्षुषामंशुभिः कृष्णसारमया इव आसन् वासराः। समुच्चलद्भिः शिरीषस्तबककर्णपूरैः शुकपिञ्छमय इव हरितच्छायोऽभूद् आतपः। स्रंसमानैः धम्मिल्लबन्धैः कज्जलमयमिव अलक्ष्यतान्तरिक्षम्। उत्क्षिप्तैः हस्तकिसलयैः कमलमय्य इव बभासिरे ककुभः। माणिक्येन्द्रायुधानाम् अर्चिषा चापमया इव चकाशिरे रविमरीचयः। रणतामाभरणानां प्रतिशब्दैः किङ्किणीमय्य इव शिशिञ्जिरे दिशः। जरत्योऽप्युन्मादिन्य इव रमण्यो रेमिरे। वर्षीयांसोऽपि ग्रहगृहीता इव नापत्रेपिरे। विद्वांसोऽपि

---

'पालिरश्रिः प्रदेशोऽङ्के' इति वैजयन्ती। लम्बः लम्बमानः। चामरसटा चामरस्थं रोम। त्रिकण्टकं त्रिकण्टकाकारं कर्णाभरणम्। अञ्चितं आकृष्टम्। अवाञ्चितमिति च पाठः। आकुञ्चितं चलितम्। वागुराः रज्जुमयजालिकाः। विलेसुः विरेजुः।

स्त्रैणस्य स्त्रीसमूहस्य। शुशोण शोणवर्णा अभवत्। 'शोणृ वर्णे' इति धातुः। चञ्चतां चलताम्। कृष्णसारोऽपि नानावर्ण इति भावः। पिञ्छं पत्रम्। 'पिञ्छं बर्हे खगच्छदे' इति वैजयन्ती। हरितच्छायः हरितदीप्तिः। धम्मिल्ल-बन्धैः केशबन्धैः। माणिक्येन्द्रायुधानां इन्द्रायुधशब्देन सर्वरत्नानां प्रभानानात्वम् उच्यते। 'इन्द्रायुधद्योतिततोरणाङ्कम्' इतिवत्। अर्चिषा प्रकाशेन। रेमिरे क्रीडन्ति स्म। वर्षीयांसः वृद्धाः। ग्रहः पिशाचादिः। नापत्रेपिरे

मत्ता इव आत्मानं विसस्मरुः। निनर्तिषया मुनीनामपि मनांसि पुस्फुरुः। सर्वस्वं च ददौ नरपतिः। दिशि दिशि कुबेरकोशा इव अलुप्यन्त लोकेन द्रविणराशयः।

एवं च प्रवृत्ते तस्मिन् महोत्सवे शनैश्शनैः पुनरतिक्रामति काले, देवे च उत्तमाङ्गनिहितरक्षासर्षपकणे, समुन्मिषितप्रतापाग्निस्फुलिङ्ग इव गोरोचनापिञ्जरितवपुषि, समभिव्यज्यमानसहजसत्त्वतेजसीव हाटकबन्धविकटव्याघ्रनखपङ्क्तिमण्डितग्रीवके, हृदयोद्भिद्यमानदर्पाङ्कुर इव प्रथमाव्यक्तजल्पितेन सत्यस्य शनैरोङ्कारमिव कुर्वाणे, मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि लोकहृदयान्याकर्षति, जननीपयोधरकलशपयःशीकरसेकादिव जायमानैः विलासहसिताङ्कुरैर्दशनकैरपि अलङ्क्रियमाणमुखकमलके, चारित्र इवान्तःपुरेण परिपाल्यमाने, मन्त्र इव सचिवमण्डलेन रक्ष्यमाणे, वृत्त इव कुलपुत्रलोकेनानुन्मुच्यमाने, यशःप्रवाह इवात्मवंशेन संवर्ध्यमाने, मृगपतिपोत इव रक्षापुरुषशस्त्रपञ्जरगते, धात्रीकराङ्गुलिलग्नः पञ्चषाणि पदानि प्रयच्छति देवे हर्षे, देवे च षष्ठं वर्षमवतरति राज्यवर्धने, देवी यशोवती तृतीयेन गर्भेणाधत्त नारायणमूर्तिरिव वसुधादेवीं राज्यश्रियम्।

---

परनिमित्तं न लज्जिताः। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः' इत्यमरः। निनर्तिषया नर्तनं कर्तुमिच्छया।

सर्षपकणे सर्षपलेशे। व्याघ्रनखम् आभरणविशेषः। उद्भिद्यमानं प्ररोहत्। सत्यस्य सत्यवचनस्य। ओङ्कारम्, अनेनात्रारम्भो लक्ष्यते। एतस्य सत्यवचनं तैस्तैर्गुणैः वेदवाक्यकल्पमित्यभिप्रेत्य वेदपठनारम्भे क्रियमाणस्यास्य प्रयोगः। मुग्धस्मितैः सौम्यस्मितैः। पयः क्षीरं, जलमिति च। दशनकैः अल्पदन्तैः। चारित्रे आचारे। मन्त्रे रहस्ये। रक्ष्यमाणे पाल्यमाने, गोप्यमाने इति च। शस्त्रपञ्जरं शस्त्राख्यपञ्जरम्। पञ्चषाणि पञ्च वा षड् वा। पञ्चषशब्दयोः 'सङ्ख्ययाव्ययासन्ना —' (पा० सू० २. २. २५.) इत्यादिना

पूर्णेषु च प्रसवदिवसेषु दीर्घानुरक्तदलनेत्राम् उत्पलिनीमिव सरसी, हंसमधुरस्वनां शरदमिव प्रावृट्, कुसुमसुकुमारावयवां वनराजिमिव मही, कनकावदातां वसुधारामिव द्यौः, प्रभावर्षिणीं रत्नजातिमिव वेला, सकलजनानन्दकारिणीं चन्द्रकलामिव प्रतिपत्, सहस्रनेत्रदर्शनयोग्यां जयन्तीमिव शची, सर्वभूभृदभ्यर्हितां गौरीमिव मेना, प्रसूतवती दुहितरम्। यया द्वयोः सुतयोरुपरि स्तनयोरिव एकावलीलतया नितराम् अराजत जननी।

अस्मिन्नेव च काले देव्या यशोवत्याः भ्राता स्वतनयम् अष्टवर्षकल्पम् उद्धूयमानकुटिलशिखण्डं खण्डपरशुहुङ्कारधूमलेखानुबद्धमूर्धानं मकरध्वजमिव पुनर्जातम्, एकेन इन्द्रनीलकुण्डलांशुश्यामलेन शरीरार्धेन

---

बहुव्रीहिसमासः। 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' (पा० सू० ५. ४. ७३.) इति डच्प्रत्ययः।

नेत्रं लोचनं, मूलं च। उत्पलिनीं पद्मस्तबकम्। हंसमधुरस्वनां हंसवन्मधुरस्वनाम्। अन्यत्र हंसानां मधुरस्वनवतीम्। कुसुमसुकुमारां .... .... कोमलां च। कनकावदातां कनकवद् गौरवर्णां, कनकैः गौरवर्णां च। वसुधाराम् अर्थधाराम्। प्रभा शोभा, दीप्तिश्च। वेला समुद्रतीरम्। सहस्रनेत्रदर्शनम् अनेकनेत्रेण इन्द्रेण .... .... मिन्द्रसुताम् । 'सुतो जयो जयन्तश्च जयदत्तोऽप्यथो] सुता। जयन्ती' इति वैजयन्ती। भूभृद् राजा, पर्वतश्च।

कुटिलशिखण्डं कुटिलकाकपक्षम्। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः। कुटिलकाकपक्षशिखण्डकमित्यपपाठः। प्रथमं कोशेषु केषुचित् शिखण्डकपदस्य विवरणत्वेनाधोभागे कैश्चिल्लिखितं काकपक्षपदमपि अज्ञैः पश्चादेकग्रन्थभ्रान्त्या काकपक्षशिखण्डकमित्येक(पद)त्वेन लिखितं, तथैवेदानीमपि पारम्पर्येणाविमृशद्भिः लोकैः लिख्यते। एवं बहुषु प्रदेशेष्वधिकपाठाः सन्ति। ते चापि तत्र तत्र दर्शयिष्यन्ते। हुङ्कारधूमलेखा हुङ्कारशब्देन

**इतरेण च त्रिकण्टकपालिकामुक्ताफलालोकधवलितेन सम्पृक्तावतारमिव हरिहलधरयोः दर्शयन्तं, पीनप्रकोष्ठपृष्ठप्रतिष्ठितपुष्यलोहवलयं परशुराममिव क्षत्रक्षपणक्षीणपरशुपाशचिह्नितं बालतां गतं, कर्णसूत्रग्रथितभङ्गुरप्रवालाङ्कुरं हिरण्यकशिपुमिव उरःकाठिन्यखण्डितनरसिंहनखरखण्डं पुनर्गृहीतजन्मान्तरं, शैशवेऽपि सावष्टम्भं, बीजमिव वीर्यद्रुमस्य, भण्डिनामानम् अनुचरं कुमारयोरर्पितवान्।**

**अवनिपतेस्तु तस्योपरि पुत्रयोस्तृतीयस्य नेत्रयोरिव ईश्वरस्य तुल्यं दर्शनमासीत्। राजपुत्रावपि सकलजीवलोकहृदयानन्ददायिनौ तेन प्रकृतिदक्षिणेन मधुमाधवाविव मलयमारुतेनोपेतावतितरां रेजतुः। क्रमेण च अपरेणेव भ्रात्रा प्रजानन्देन सह संवर्धमानौ यौवनमवतेरतुः। स्थिरोरुस्तम्भौ**

---

हुङ्कारानुबद्धोऽग्निर्विवक्षितः । तस्य धूमलेखा । ईश्वरस्य कामदहनसमये हुङ्कारेण सह नयनाद् अग्निर्निर्गत इति प्रसिद्धिः। पीनं पीवरम् । पुष्यलोहवलयं पुष्यरागरत्नयुक्तं लोहवलयम् । लोहवलयधारणं तु पिशाचाद्यनभिभवार्थम् । क्षत्रक्षपणक्षीणेन क्षत्रियाणां क्षपणस्य पुनः पुनः करणात् क्षीणेन कृशीभूतेन परशुपाशेन पाशाकारेण परशुना चिह्नितं विहितमित्यर्थः । परशुपाशः[1] परशोर्वलयमिति केचित् । भङ्गुरं कुटिलम् । नखरखण्डं नखशकलम् । अवष्टम्भः सौष्ठवविशेषः[2] ([illegible]) ।

अवनिपतेरित्यादि । अवनिपतेः पुत्रयोस्तृतीयस्य तस्य भण्डेरुपरि दर्शनं तुल्यमासीत् । तमपि पुत्रनिर्विशेषं दृष्टवानित्यर्थः । यथा ईश्वरस्य नेत्रयोस्तृतीयस्य ललाटनेत्रस्योपरि निर्विशेषं दर्शनं भवति तथेति। दर्शनशब्दः निरीक्षणे निरीक्षणशक्तौ च प्रवर्तते । सकलेत्यादि उभयत्र समानम् । प्रकृतिदक्षिणेन स्वभावसरलेन । अन्यत्र प्रकृत्या दाक्षिणत्यः प्रवृत्तेन दक्षिणेन पवनेन स(म्भृ?हि)तमिति । अपरेण स्वस्मात् पर उत्कृष्टो यस्य नास्ति सोऽपरः । उत्तमभूतेनेत्यर्थः, अन्येनेति च । स्थिरोरुस्तम्भौ स्थिर ऊर्वाख्यः स्तम्भो ययोः ।

---

1. परशुपाशः= [illegible]   2. अवष्टम्भः= [illegible]

**पृथुप्रकोष्ठौ दीर्घभुजार्गलौ विकटोरःकवाटौ प्रांशुसालाभिरामौ महानगरसन्निवेशाविव सर्वलोकाश्रयक्षमौ बभूवतुः ।**

**अथ चन्द्रसूर्याविव स्फुरद्यशःप्रतापाक्रान्तभुवनावभिरामदुर्निरीक्षौ, अग्निमारुताविव समभिव्यक्ततेजोबलावेकीभूतौ, शिलाकठिनकायबन्धौ हिमवद्विन्ध्याविवाचलौ, महावृषाविव कृतयुगयोग्यौ, अरुणगरुडाविव हरिवाहनविभक्तशरीरौ, इन्द्रोपेन्द्राविव गजेन्द्रगमनौ, कर्णार्जुनाविव**

---

नगरसन्निवेशपक्षे स्थिरः उरुः महान् स्तम्भो ययोः । प्रकोष्ठः कूर्पराधोभागः, गृहकक्ष्याप्रदेशश्च । दीर्घभुजार्गलौ दीर्घभुजाख्यार्गलौ । विकटोरःकवाटौ विकटोरःस्थलाख्यकवाटौ । अन्यत्र विकटकवाटौ । प्रांशुसालाभिरामौ तुङ्गसालवृक्षवद् अभिरामौ । सालः अर्जुनवृक्षः (மருது) । अन्यत्र प्रांशुना सालेन प्राकारेण अभिरामौ । सर्वलोकाश्रयक्षमौ उभयत्र समानम् ।

यशःप्रतापाक्रान्तभुवनौ कीर्तिपौरुषाभ्यामाक्रान्तलोकौ । अन्यत्र यशःशब्देन यशसः शैत्यगुणयोगात् तद्गतं शैत्यं लक्ष्यते । यशसः शैत्यगुणयोगश्च कविसमयसिद्धः । तथा कादम्बर्याम्—'शिशिरस्यापि रिपुनृपकुलसन्तापकारिणः, स्थिरस्यापि अनवरतं भ्रमतः, निर्मलस्यापि मलिनीकृतारातिवनितामुखकमलद्युतेः, अतिधवलस्यापि सर्वजनानुरागकारिणः सुधासूतेरिव जलनिधिरुद्भवो यशसः' इति । प्रतापः उष्णम् । अभिरामदुर्निरीक्षौ कान्तैर्भीमैश्च नृपगुणैरिति भावः । तेजोबलौ पराक्रमशक्ती । अन्यत्र दीप्तिवेगौ । एकीभूतौ अवियुक्तौ । उभयत्र समानम् । शिलाकठिनं शिलावत् कठिनं, शिलाभिः कठिनं च । अचलौ निश्चलौ । उभयत्र समानम् । कृतयुगयोग्यौ कृतयुगकालोचितौ । अन्यत्र कृता शिक्षिता युगेन अङ्गेन योग्यः अभ्यासः ययोः । 'अभ्यासः कथ्यते योग्यः' इति **हलायुधः** । हरिवाहनविभक्तशरीरौ हरयोऽश्वास्तेषां *[वाहनेन आरुह्य नयनेन विभक्तशरीरौ । अश्वारोहणेन क्षीणमेदस्कतया विस्पष्टावयवौ इत्यर्थः । अन्यत्र अरुणपक्षे हरयः आदित्याश्च विवक्षिताः । तेषां] वाहनः वाहकः तेन विभक्तशरीरश्च ऊरुप्रदेशेन पृथक्कृतशरीरश्च । गरुडपक्षे हरिवाहनं विष्णोर्वाहनभूतम् । विभक्तं

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

कुण्डलकिरीटधरौ, पूर्वापरदिग्विभागाविव सर्वतेजस्विनामुदयास्तमय-सम्पादनसमर्थौ, अमान्ताविवाभिमानेन आसन्नवेलार्गलानिरोधसङ्कटे भ्रुकुटीकुटीरके, तेजःपराङ्मुखीं छायामपि जुगुप्समानौ, स्वप्रतिबिम्बेनापि पादनखलग्नेन लज्जमानौ, शिरोरुहाणामप्यायतिभङ्गेन दुःखमवतिष्ठमानौ, चूडामणिसङ्क्रान्तेनापि द्वितीयातपत्रेणापत्रपमाणौ, भगवति षण्मुखेऽपि स्वामिशब्देनासुखायमानश्रवणौ, दर्पणदृष्टेनापि प्रतिपुरुषेण दूयमाननयनौ, सन्ध्याञ्जलिघटनेष्वपि शूलायमानोत्तमाङ्गौ, जलधरधृतेनापि धनुषा दूयमानहृदयौ, आलेख्यक्षितिपतिभिरपि अप्रणमद्भिः सन्तप्यमानचरणौ, परिमितमण्डलसन्तुष्टतेजसः सवितुरप्यबहुमन्यमानौ,

---

पक्षिसेवितं च शरीरं यस्य। गजेन्द्रगमनौ गजेन्द्रतुल्यगमनौ। अन्यत्र इन्द्रपक्षे गजेन्द्रेण ऐरावतेन गमनं यस्य। उपेन्द्रपक्षे गजेन्द्रः ग्राहगृहीतगजः, तं प्रति गमनं यस्य। कुण्डलकिरीटधरौ स्पष्टोऽर्थः। अन्यत्र कर्णः कुण्डलधरः। कर्णस्य खलु सहजं कुण्डलमस्ति। अर्जुनः किरीटी। अर्जुनेन इन्द्रात् किरीटं लब्धमिति कथा। तेजस्विनां बलवतां, सूर्यादिग्रहाणां च। उदयास्तमयसम्पादनम् अभ्युदयविपदोः सम्पादनम्। अन्यत्र उद्गमनादर्शनयोः सम्पादनम्। अमान्तौ अनवकाशीभवन्तौ। भ्रुकुटीकुटीरकं भ्रुकुटिरेव कुटीरं (കുടില്), कुत्सितकुटीरमिति च। तेजःपराङ्मुखीं छायाम्। अन्यत्र छायादयः स्वकीया एव विवक्षिताः। आदित्यादितेजसां पराङ्मुखीभूता छाया तेजसामनुकूलं न वर्तते इति भावः। जुगुप्समानौ बीभत्समानौ। भङ्गेन, एतेन कुटिलतोच्यते; अपजयश्च ध्वन्यते। 'भङ्गः पराजये' इत्यजयः। दुःखं दुःखयुक्तम्। स्वामिशब्देन स्वामीति षण्मुखस्य नामान्तरम्। 'स्कन्दः स्वामी तारकारिः कुमारः' इति हलायुधः। स्वामिशब्देन प्रभुश्च ध्वन्यते। असुखायमानं सुखरहितायमानम्। प्रतिपुरुषशब्देन शत्रुश्च ध्वन्यते। शूलायमानं सव्यथायमानम्। शूलं व्यथा अस्यास्तीति 'अर्श आदिभ्योऽच्' (पा० सू० ५. २. १२७.)। तस्मात् 'लोहितादि—' (पा०सू० ३. १. १३.) इति सूत्रेण क्यषि कृते शूलायमानमिति रूपम्। परिमितमण्डलसन्तुष्टतेजसः परिमिते परिच्छिन्ने मण्डले बिम्बे सन्तुष्टं पर्याप्तिबुद्धियुक्तं तेजो यस्य : परिमितराष्ट्रैकदेशलाभेन सन्तुष्टप्रभावस्येति च। सवितुरप्यबहुमन्यमानौ

**भूभृदपहृतलक्ष्मीकं सागरमप्यपहसन्तौ, बलवन्तम् अनधिगतविग्रह-अनभिलक्ष्यं मारुतमपि निन्दन्तौ, हिमवतोऽपि चमरीबालव्यजनजीवितेन दह्यमानौ, जलनिधीनामपि शङ्खैः खिद्यमानौ, चतुःसमुद्राधिपतिं प्रचेतसमप्यसहमानौ, अनपहृतच्छत्रानपि निश्छायानवनिपालान् कुर्वाणौ, साधुषु असेवितप्रसन्नौ, मुखेन मधु क्षरन्तौ, दुष्टराजवंशान् ऊष्मणा दूर-स्थितानपि म्लानिमुपनयन्तौ, प्रतिदिवसं शस्त्राभ्यासश्यामिकाकलङ्कितम् अशेषराजकप्रतापाग्निनिर्वापणमषीमलिनमिव करतलमुद्वहन्तौ, योग्या-कालेषु अतिधीरैः धनुर्ध्वनिभिः अभ्यर्णोपभोगाय दिग्वधूरिव आलपन्तौ, राज्यवर्धन इति हर्षवर्धन इति सर्वस्यामेव पृथिव्याम् आविर्भूतशब्दम्**

---

सवितुरपि बहुमानं न कुर्वन्तौ। 'अनुकरोति भगवतो नारायणस्य' इत्यादि-ष्विव सम्बन्धमात्रे षष्ठी। 'सवितुरपि उदयम् अबहुमन्यमानौ' इति केषुचित् कोशेषु पाठः। भूभृदपहृतलक्ष्मीकं मन्दरपर्वतात्तश्रीकं, राजान्तराद् अपहृत-राज्यसम्पदमिति च। बलवन्तं शक्तिमन्तं, सेनावन्तमिति च; अतिधीर-चित्तमित्यर्थः। अनधिगतविग्रहम् अलब्धरूपम्, अलब्धयुद्धमिति च। अनभिलक्ष्यम् अप्रत्यक्षम्, अप्रसिद्धमिति च। [श .... ङ्खैः.... प्राधान्यसूचक इति .... ....। चतुस्समुद्राधिपतिं चतुर्णामर्णवानामधिपतिं, समुद्रान्तर्भूत-देशाधिपतिमिति च]। निश्छायान् निश्शोभान्, निर्गतातपपर्यायान् इति च। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः। असेवितप्रसन्नौ असेवितावपि प्रसादयुक्तौ; निष्कारणप्रसन्नौ इत्यर्थः। मुखेन मधु क्षरन्तौ मधुशब्देन मधुवत् मधुरं वचनं लक्ष्यते, 'प्रियं वदन्तौ इत्यर्थः। अन्यत्र असेवितप्रसन्नौ अपीतसुरौ मुखेन मधु सुरां क्षरन्तौ इति विरोधश्च गम्यते। राजवंशान् ऊष्मणा म्लानिमुपनयन्तौ राजकुलानि प्रतापेन म्लानिमुपनयन्तौ। वंशान् वेणून् ऊष्मणा उष्णेन म्लानिमुपनयन्तौ इति च। निर्वापणं शमनम्। मषी अङ्गारः (കരി)। योग्या धनुःशिक्षा। अभ्यर्णम् आसन्नमिति च। राज्यवर्धन इति एवंप्रकारो राज्यवर्धनः। इतिशब्दः प्रकारवाची। वाक्यत्वेन

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

१. 'प्रियंवदावि', २. 'म्लानयन्तावि'—क.

प्रादुर्भावौ अल्पीयसैव कालेन द्वीपान्तरेष्वपि प्रकाशतां जग्मतुः।

एकदा तावाहूय भुक्तवानभ्यन्तरगतः पिता सस्नेहमवादीत्—

'वत्सौ! प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः। प्रायेण परमाणव इव समवायेषु अनुगुणीभूय द्रव्यं कुर्वन्ति पार्थिवं क्षुद्राः। क्रीडारसेन नर्तयन्तो मयूरतां नयन्ति बालिशाः। दर्पणमिव अनुप्रविश्यात्मीयां प्रकृतिं सङ्क्रामयन्ति पल्लवकाः। स्वप्ना इव मिथ्यादर्शनैः सद्बुद्धिं जनयन्ति विप्रलम्भकाः।

---

प्रयोगादव्ययीभावो न दर्शितः। प्रकाशतां सिद्धताम्।

प्रायेणेति पदम् उत्तरैर्नवभिः प्रत्येकं सम्बध्यते। प्रायेण दुर्लभा इति पूर्वेण वाक्येन सह केचित् सम्बध्नन्ति। परमाणव इत्यादि। गुणानामेवाश्रयभूतेनापि द्रव्यशब्देनात्र आश्रयत्वमात्रं लक्ष्यते। क्षुद्राः निकृष्टाः पुरुषाः। समवायेषु सङ्घेषु अनुगुणीभूय परस्परमनुकूलीभूय। पार्थिवं राजानम्। द्रव्यम् आश्रयं स्वाश्रयभूतं कुर्वन्ति। 'क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः' इति वैजयन्ती। केचिद् द्रव्यं कुर्वन्ति द्रव्यमात्रं कुर्वन्ति सत्तामात्रं कुर्वन्तीति व्याचक्षते। यथा क्षुद्रा अल्पाः परमाणवः समवायेषु अनुगुणीभूय समवायाख्यसम्बन्धेषु अनुगुणीभूय अनुबन्धीभूय पार्थिवं पृथिवीसम्बद्धं मृद्विकारं द्रव्यं घटकात्मकं वस्तु कुर्वन्ति तथेति। क्रीडेत्यादि। बालिशाः मूर्खाः पुरुषाः क्रीडारसेन क्रीडाश्रद्धया नर्तयन्तो भूत्वा राजानं मयूरतां नयन्ति। 'प्रकाश्य गोप्यस्थानानि मयूरा इव ये विटाः। नृत्तं कुर्वन्ति सततं ते मयूरा इति स्मृताः॥' इति। दर्पणमित्यादि। पल्लवकाः राजानमनुप्रविश्य अन्तरवकाशं लब्ध्वा आत्मीयां प्रकृतिं स्वभावं सङ्क्रामयन्ति। 'स्वगतं रागमन्येषु ये सङ्क्रामयितुं क्षमाः। पल्लवा इव ते रागमयाः पल्लवकाः स्मृताः॥' इति। यथा पल्लवकाः किसलयानि दर्पणम् अनुप्रविश्य आत्मीयां प्रकृतिं रूपं सङ्क्रामयन्ति तथेति। स्वप्ना इत्यादि। विप्रलम्भकाः वञ्चकाः पुरुषाः। मिथ्यादर्शनैः असत्यार्थोपदर्शनैः। राज्ञां सद्बुद्धिं जनयन्ति साधुरिति ज्ञानं जनयन्ति। यथा विप्रलम्भकाः विसंवादकाः, स्वप्ना निद्रासमयदर्शनानि, मिथ्यादर्शनैः [illegible] मिथ्यादर्शनैः सद्बुद्धिरस्तीति ज्ञानं जनयन्ति तथेति।

गीतनृत्तहसितैः उन्मत्ततम् आपादयन्ति उपेक्षिता विकारा इव वातिकाः। चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः। मानसे मीनमिव स्फुरन्तमेव अभिप्रायं गृह्णन्ति जालिकाः। यमपटिका इवाम्बरे चित्रम् आलिखन्ति उद्गीतकाः। शल्यं हृदये निक्षिपन्ति मार्गणाः। यतः

---

गीतेत्यादि। उपेक्षिताः अस्माकमेतैः कोऽनर्थ इत्यवधीरिताः। वातिकाः भ्रामकाः पुरुषाः राज्ञां गीतनृत्तहसितैः उन्मत्ततां परवशताम् आपादयन्ति नयन्ति। यथा उपेक्षिता अचिकित्सिता वातिका वातसम्बन्धिनो विकाराः भ्रमाः पुरुषं नृत्तगीतसहितैः उन्मत्ततां भ्रान्तचित्तताम् आपादयन्ति तथेति। चातका इत्यादि। तृष्णावन्तः धनाभिनिविष्टाः। अकुलीनाः असद्वंश्याः। राजभिर्ग्रहीतुं सम्यग् ज्ञातुं न शक्यन्ते। यथा तृष्णावन्तः पिपासायुक्ता अकुलीनाः अभूमिलीनाः चातकाः सर्वैरपि ग्रहीतुं हस्तेनादातुं न शक्यन्ते तथेति। 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः। मानसे इत्यादि। जालिकाः कापटिकाः। राज्ञां मानसे मनसि स्फुरन्तम् उन्मिषन्तं अभिप्रायं गृह्णन्ति। यथा जालिकाः कैवर्तकाः मानसे मानससरसि स्फुरन्तमेव मीनं गृह्णन्ति तथेति। जालेन जीवन्ति जालिकाः। 'वेतनादिभ्यो जीवति' (पा० सू० ४. ४. १२.) इति ठक्। जालशब्देन कपट आनायश्च उच्यते। यमपटिकेत्यादि। उद्गीतकाः प्रशंसकाः अम्बरे आकाशे चित्रमालिखन्ति। निरवलम्बनेऽप्यर्थे आश्चर्यमापादयन्तीत्यर्थः। यथा उद्गीतका गायका यमपटिका अम्बरे वस्त्रे चित्रमालेख्यं लिखन्ति तथेति। यमयुक्तः पटः यमपटः; सोऽस्यास्तीति यमपटिकः। एतदुक्तं भवति— यः पटे यमं, तेन दण्ड्यमानानां प्राणिनां पापिनां यातनाप्रकारं च लिखित्वा तत् प्रकाश्य लोकं धर्मशासनाय प्रशास्ति स यमपटिक इति। अयमर्थ उत्तरत्र कविनैव वक्ष्यते— 'भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोक-व्यतिकरमितरकरकलितेन शरकाण्डेन कथयन्तं यमपटिकं ददर्श' इति। शल्यमित्यादि। शल्यशब्देन शल्यवद् अरुन्तुदं व्यसनं लक्ष्यते। मार्गणाः याचकाः। राज्ञां हृदये मनसि शल्यं निक्षिपन्ति। एतदुक्तं भवति— प्रथमम् अभिलषितं शोभनं स्त्र्यादिकं विषयमुपस्थाप्य तदर्थं दुस्त्यजस्य द्रव्यस्य प्रदानाय

---

१. 'व्यसनं'-क.

**प्रादुर्भावौ अल्पीयसैव कालेन द्वीपान्तरेष्वपि प्रकाशतां जग्मतुः।**

**एकदा तावाहूय भुक्तवानभ्यन्तरगतः पिता सस्नेहमवादीत्— 'वत्सौ! प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः। प्रायेण परमाणव इव समवायेषु अनुगुणीभूय द्रव्यं कुर्वन्ति पार्थिवं क्षुद्राः। क्रीडारसेन नर्तयन्तो मयूरतां नयन्ति बालिशाः। दर्पणमिव अनुप्रविश्यात्मीयां प्रकृतिं सङ्क्रामयन्ति पल्लवकाः। स्वप्ना इव मिथ्यादर्शनैः सद्बुद्धिं जनयन्ति विप्रलम्भकाः।**

---

प्रयोगादव्ययीभावो न दर्शितः। प्रकाशतां सिद्धताम्।

प्रायेणेति पदम् उत्तरैर्नवभिः प्रत्येकं सम्बध्यते। प्रायेण दुर्लभा इति पूर्वेण वाक्येन सह केचित् सम्बध्नन्ति। परमाणव इत्यादि। गुणानामेवाश्रयभूतेनापि द्रव्यशब्देनात्र आश्रयत्वमात्रं लक्ष्यते। क्षुद्राः निकृष्टाः पुरुषाः। समवायेषु सङ्घेषु अनुगुणीभूय परस्परमनुकूलीभूय। पार्थिवं राजानम्। द्रव्यम् आश्रयं स्वाश्रयभूतं कुर्वन्ति। 'क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः' इति वैजयन्ती। केचिद् द्रव्यं कुर्वन्ति द्रव्यमात्रं कुर्वन्ति सत्तामात्रं कुर्वन्तीति व्याचक्षते। यथा क्षुद्रा अल्पाः परमाणवः समवायेषु अनुगुणीभूय समवायाख्यसम्बन्धेषु अनुगुणीभूय अनुबन्धीभूय पार्थिवं पृथिवीसम्बद्धं मृद्विकारं द्रव्यं घटकात्मकं वस्तु कुर्वन्ति तथेति। क्रीडेत्यादि। बालिशाः मूर्खाः पुरुषाः क्रीडारसेन क्रीडाश्रद्धया नर्तयन्तो भूत्वा राजानं मयूरतां नयन्ति। 'प्रकाश्य गोप्यस्थानानि मयूरा इव ये विटाः। नृत्तं कुर्वन्ति सततं ते मयूरा इति स्मृताः॥' इति। दर्पणमित्यादि। पल्लवकाः राजानमनुप्रविश्य अन्तरवकाशं लब्ध्वा आत्मीयां प्रकृतिं स्वभावं सङ्क्रामयन्ति। 'स्वगतं रागमन्येषु ये सङ्क्रामयितुं क्षमाः। पल्लवा इव ते रागमयाः पल्लवकाः स्मृताः॥' इति। यथा पल्लवकाः किसलयानि दर्पणम् अनुप्रविश्य आत्मीयां प्रकृतिं रूपं सङ्क्रामयन्ति तथेति। स्वप्ना इत्यादि। विप्रलम्भकाःवञ्चकाः पुरुषाः। मिथ्यादर्शनैः असत्यार्थोपदर्शनैः। राज्ञां सद्बुद्धिं जनयन्ति साधुरिति ज्ञानं जनयन्ति। यथा विप्रलम्भकाः विसंवादकाः, स्वप्ना निद्रासमयदर्शनानि, मिथ्यादर्शनैः गजस्कन्धारोहणादिमिथ्यादर्शनैः सद्बुद्धिरस्तीति ज्ञानं जनयन्ति तथेति।

गीतनृत्तहसितैः उन्मत्तताम् आपादयन्ति उपेक्षिता विकारा इव वातिकाः । चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः । मानसे मीनमिव स्फुरन्तमेव अभिप्रायं गृह्णन्ति जालिकाः । यमपटिका इवाम्बरे चित्रम् आलिखन्ति उद्गीतकाः । शल्यं हृदये निक्षिपन्ति मार्गणाः । यतः

---

गीतेत्यादि । उपेक्षिताः अस्माकमेतैः कोऽनर्थ इत्यवधीरिताः । वातिकाः भ्रामकाः पुरुषाः राज्ञां गीतनृत्तहसितैः उन्मत्ततां परवशताम् आपादयन्ति नयन्ति । यथा उपेक्षिता अचिकित्सिता वातिका वातसम्बन्धिनो विकाराः भ्रमाः पुरुषं नृत्तगीतसहितैः उन्मत्ततां भ्रान्तचित्तताम् आपादयन्ति तथेति । चातका इत्यादि । तृष्णावन्तः धनाभिनिविष्टाः । अकुलीनाः असद्वंश्याः । राजभिर्ग्रहीतुं सम्यग् ज्ञातुं न शक्यन्ते । यथा तृष्णावन्तः पिपासायुक्ता अकुलीनाः अभूमिलीनाः चातकाः सर्वैरपि ग्रहीतुं हस्तेनादातुं न शक्यन्ते तथेति । 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः । मानसे इत्यादि । जालिकाः कापटिकाः । राज्ञां मानसे मनसि स्फुरन्तम् उन्मिषन्तं अभिप्रायं गृह्णन्ति । यथा जालिकाः कैवर्तकाः मानसे मानससरसि स्फुरन्तमेव मीनं गृह्णन्ति तथेति । जालेन जीवन्ति जालिकाः । 'वेतनादिभ्यो जीवति' (पा० सू० ४. ४. १२.) इति ठक् । जालशब्देन कपट आनायश्च उच्यते । यमपटिकेत्यादि । उद्गीतकाः प्रशंसकाः अम्बरे आकाशे चित्रमालिखन्ति । निरवलम्बनेऽप्यर्थे आश्चर्यमापादयन्तीत्यर्थः । यथा उद्गीतका गायका यमपटिका अम्बरे वस्त्रे चित्रमालेख्यं लिखन्ति तथेति । यमयुक्तः पटः यमपटः ; सोऽस्यास्तीति यमपटिकः । एतदुक्तं भवति— यः पटे यमं, तेन दण्ड्यमानानां प्राणिनां पापिनां यातनाप्रकारं च लिखित्वा तत् प्रकाश्य लोकं धर्मशासनाय प्रशास्ति स यमपटिक इति । अयमर्थ उत्तरत्र कविनैव वक्ष्यते— 'भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोक-व्यतिकरमितरकरकलितेन शरकाण्डेन कथयन्तं यमपटिकं ददर्श' इति । शल्यमित्यादि । शल्यशब्देन शल्यवद् अरुन्तुदं व्यसनं लक्ष्यते । मार्गणाः याचकाः । राज्ञां हृदये मनसि शल्यं निक्षिपन्ति । एतदुक्तं भवति— प्रथमम् अभिलषितं शोभनं स्त्र्यादिकं विषयमुपस्थाप्य तदर्थं दुस्त्यजस्य द्रव्यस्य प्रदानाय

---

1. 'व्यसनं'-क.

सर्वैरेव एभिर्दोषानुषङ्गैरसङ्गतौ, बहुधा उपधाभिः परीक्षितौ, शुची, विनीतौ, विक्रान्तौ, अभिरूपौ, माळवराजपुत्रौ, भुजाविव मे शरीराद् अव्यतिरिक्तौ, कुमारगुप्तमाधवगुप्तनामानौ, अस्माभिः भवतोरनुचरावुचितौ, चिन्तितौ। तयोरुपरि युवाभ्यामपि नान्यपरिजनसामान्याभ्यां भवितव्यम् इत्युक्त्वा तयोराह्वानाय प्रतीहारम् आदिदेश।

अचिराच्च द्वारदेशविनिवेशितलोचनौ राज्यवर्धनहर्षवर्धनौ प्रतीहारेण सह प्रविशन्तम् अग्रतो ज्येष्ठम् अष्टादशवर्षदेशीयं, नात्युच्चं, नातिखर्वम् अतिगुरुभिः पदन्यासैः अनेकनरपतिसञ्चरणचलां निश्चलीकुर्वाणमिवोर्वीम् अनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुराद् ऊरुद्वयान्निष्पतितेनेव अनुल्बणजानुग्रन्थिप्रसूतेन तनुना जङ्घाकाण्डयुगलेन भासमानम्, उल्लिखितपार्श्वप्रकाशितकृशिम्ना मध्येन मन्दरमिव सुरासुरहस्तसरभसभ्रमितवासुकीकर्षणक्षीणेन लक्ष्यमाणम्, अतिविस्तीर्णेन उरसा स्वामिसम्भावनानाम् अपरिमितानामवकाशमिव प्रयच्छन्तं, प्रलम्बस्य भुजयुगलस्य निभृतललितैर्विक्षेपैः अतिदुस्तरं तरन्तमिव यौवनोदधिं, वामकरकटकमाणिक्यमरीचिमञ्जरीजालिन्या समुद्भिद्यमानप्रतापानल-

---

चोदयन्तः तस्य विषयस्योपेक्षणे तस्य द्रव्यस्य प्रदाने च अशक्तस्य राज्ञो हृदये च अरुन्तुदं व्यसनं निक्षिपन्ति। अन्यत्र मार्गणाः शराः, शल्यं शराग्रगतम् आयसांशं हृदये वक्षसि निक्षिपन्तीति च गम्यते[1]। यतः, क्षुद्रादय एवं कुर्वन्ति इति, यतः, अत एभिः सर्वैर्दोषानुषङ्गैः असङ्गतौ माळवराजपुत्रौ भवतोरनुचरौ चिन्तितौ इत्यन्वयः। दोषानुषङ्गैः दोषसम्बन्धैः। उपाधिभिः धर्मादिपरीक्षाभिः। 'उपधा धर्माद्यैर्यत् परीक्षणम्' इत्यमरः। परीक्षितौ परिज्ञातशौचौ। विक्रान्तौ वीरौ[2]। अभिरूपौ विद्वांसौ। 'वृद्धो विद्वान् प्राप्तरूपोऽभिरूप' इति हलायुधः[3]।

नातिखर्वं नातिह्रस्वं। लङ्घनम् उत्प्लवनम्। मेदुरात् पीवरात्। अनुल्बणम् अनुद्धतम्। जानुग्रन्थिः जानुबन्धः। ग्रन्थिशब्देन वृक्षाणां पर्व च गम्यते। काण्डशब्देन नाळं च। उल्लिखितं तनूकृतम्। मध्येनेति। सुरासुरेत्यादिवाक्ये[4] कटकं वलयम्।

---

१. 'ध्वन्यते', २. 'शूरौ', ३. 'विज्ञो'–क. ४. अत्र किञ्चित् लुप्तमिव भाति.

शिखापल्लवयेव चापकिणलेखयाङ्कितप्रकोष्ठम्, आलोहिनीमुष्टांसतटावलम्बिनीम् अस्त्रग्रहणव्रतविधृतां रौरवीमिव त्वचं कर्णाभरणमणेरुचं बिभ्राणम्, उत्कोटिकेयूरपत्रभङ्गपुत्तिकाप्रतिबिम्बगर्भकपोलं मुखं चन्द्रमसमिव हृदयस्थरोहिणीकम् उद्वहन्तम्, अचपलस्तिमिततारकेण अधोमुखेन चक्षुषा शिक्षयन्तमिव लक्ष्मीलाभोत्तानितमुखानि पङ्कजानि विनयं, स्वाम्यनुरागमिव उत्तंसीकृतमम्लानं शिरसा धारयन्तं, निर्दयाकर्षणभङ्गभीतसकलकार्मुकार्पितामिव नम्रतां प्रकाशयन्तं, शैशव एव निर्जितैः इन्द्रियैररिभिरिव संयतैः शोभमानं, प्रणयिनीमिव विश्वासभूमिं कुलपुत्रताम् अनुवर्तमानं, तेजस्विनमपि शीलेनाह्लादकेन सवितारमिव शशिनान्तर्गतेन विराजमानम्, अचलानामपि कायकार्कश्येन गन्धनमिव आचरन्तं, दर्शनक्रीतमानन्दहस्ते विक्रीणानमिव जनं सौभाग्येन कुमारगुप्तं, पृष्ठतश्च तस्य कनीयांसम् अतिप्रांशुतया गौरतया च मनःशिलाशैलमिव सञ्चरन्तम्, अनुल्बणमालतीशेखरनिभेन निर्जिगमिषता गुरुणा शिरसि चुम्बितमिव

---

अस्त्रग्रहणव्रतविधृतां रौरवीमिव त्वचं, धनुःशिक्षायां क्षत्रियकुमाराणां रुरुचर्मधारणं विहितम् । यथाह मनुः— 'कृष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥' इति । तथा रघुवंशे— 'त्वचं च मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवेद् ।' इति । पत्रभङ्गपुत्तिका पत्रभङ्गरूपा पुत्तिका । उत्तानितम् उन्मुखीकृतम् । अम्लानं करण्डविशेषः(വാടാക്കുറിഞ്ഞി)। उत्तंसीकृतं शेखरीकृतम् । संयतैः नियमितैः, बद्धैश्च । विश्वासभूमिम् उभयत्र समानम्। तेजस्विनं प्रभाववन्तम्, उष्णवन्तमिति च। गन्धनम् अङ्गनिपातादिना नाशाद् दोषसूचनम्(?)। 'गन्धनं तु प्रकाशने (सूचनेऽपि च हिंसायां)' इति वैजयन्ती । दर्शनेत्यादि । सौभाग्येन हेतुना दर्शनक्रीतं स्वदर्शनमूल्यं दत्त्वा क्रीतं जनं पुनरानन्दहस्ते आनन्दस्य करे विक्रीणानमिव । एतदुक्तं भवति— स्वदर्शनहर्षवशीकृतं जनम् आनन्दपरवशं कुर्वन्तमिति । गौरतया पीतवर्णतया । गुरुणा अलघुना । गुरुशब्देन गुरुस्थानीयश्च गम्यते ।

---

१. 'कार्ष्णं', २. 'वित्'-क.

यशसा परस्परविरुद्धयोः विनययौवनयोः चिरात् प्रथमसङ्गमचिह्नमिव भ्रूसङ्गतकेन कथयन्तम्, अतिधीरतया हृदयनिवेशितां स्वामिभक्तिमिव निश्चलां दृष्टिं धारयन्तम्, अच्छाच्छचन्दनरसानुलेपनशीतलं सन्निहित-हारोपधानं वक्षस्थलम् अनन्तसामन्तसङ्क्रान्तिविश्रान्तायाः श्रियः विशालं विश्रमभूमिशयनशिलातलमिव आचक्षाणं, चक्षुः कुरङ्गकैः, घोणावंशं वराहैः, स्कन्धपीठं महिषैः, प्रकोष्ठबन्धं व्याघ्रैः, पराक्रमं केसरिभिः, गतं मतङ्गगजैः, मृगयाक्षपितशेषैः भीतैः उत्कोचमिव दत्तं दर्शयन्तं माधवगुप्तं ददृशतुः।

प्रविश्य च तौ दूरादेव चतुर्भिरङ्गैः उत्तमाङ्गेन च गां स्पृशन्तौ नमश्चक्रतुः। स्निग्धनरेन्द्रदृष्टिनिर्दिष्टामुचितां भूमिं[1] भेजाते। मुहूर्तं च स्थित्वा भूपतिरादिदेश तौ—'अद्य प्रभृति भवद्भ्यां निदेशवर्तिभ्याम् अहर्निशमपास्तापरव्यापाराभ्यां प्रतिबिम्बकाभ्यामिव अङ्गभूताभ्याम् अनयोः कुमारयोः चरतोस्तिष्ठतोः स्वपतोर्जाग्रतोश्चान्तिकं क्षणमपि न मोक्तव्यम्। एवमचिरात् सकलसङ्कल्पाः कल्पतरव इव अभिमतसकल-सम्पत्प्रकारविशेषप्रदा भविष्यन्ति' इति। तदाकर्ण्य 'यथाज्ञापयति देवः' इति मेदिनीडोलायमानमौलिभ्यां युगपदभिहिताभ्यामुत्थाय सह राज्यवर्धनहर्षवर्धनौ पितरं प्रणेमतुः। तावादाय च निर्जग्मतुः। ततश्चारभ्य क्षणमपि निमेषोन्मेषाविव चक्षुर्गोचरादनपयान्तौ, उच्छ्वास-निश्वासाविव नक्तन्दिवमाभिमुखस्थितौ, भुजाविव सततपार्श्ववर्तिनौ कुमारयोस्तौ बभूवतुः।

---

भ्रूसङ्गतकेन भ्रूसङ्गत्या। हृदयं वक्षः, मनश्च। उत्कोचं लम्बां (കൈക്കൂലി)।

चतुर्भिरङ्गैः भुजाभ्यां जानुभ्यां च। उचितां भूमिं भूतिसमुचितस्थानम्। अङ्गभूताभ्यां हस्ताद्यङ्गवद् विधेयभूताभ्यामित्यर्थः। निमेषोन्मेषौ उन्मीलन-निमीलने। 'उन्मीलनं स्यादुन्मेषो निमेषस्तु निमीलनम्' इति वैजयन्ती। अभिमुखस्थितौ अग्रतः स्थितौ। अन्यत्र मुखाभिमुखं स्थितौ। पार्श्वं समीपम्, उभयभागश्च।

---

१. 'मिं स्वभूमिसमुचितं स्थानं'—क.

अथ राज्यश्रीरपि नृत्तगीतादिषु विदग्धासु सखीषु कलासु च प्रतिदिनमुपचीयमानपरिचया शनैश्शनैरवर्धत। परिमितैरेव दिवसैः यौवनमारुरोह। निपेतुरेकस्यां तस्यां शरा इव लक्ष्यभुवि भूभुजां सर्वेषां लाभाभिलाषाः। दूतसम्प्रेषणादिभिश्च तां ययाचिरे राजानः।

कदाचित्तु राजा अन्तःपुरप्रासादावस्थितो बाह्यकक्षावस्थितेन पुरुषेण स्वप्रस्तावागतां गीयमानामार्यामशृणोत्—

'उद्वेगमहावर्ते पातयति पयोधरोद्गमनकाले।
सरिदिव तटमनुवर्षं विवर्धमाना सुता पितरम्॥'

तां च श्रुत्वा पार्श्वस्थितां महादेवीं समुत्सारितपरिजनो जगाद— 'देवि! तरुणीभूता वत्सा राज्यश्रीः। एतदीया गुणवत्तेव क्षणमपि हृदयान्नापयाति मे चिन्ता। यौवनारम्भे कन्यकानाम् इन्धनीभवन्ति पितरः सन्तापानलस्य। हृदयमन्धकारयति मे दिवसमिव पयोधरोन्नतिरस्याः। केनापि कृतानभिमता स्थितिरियं जगति। यद् अङ्गसम्भूतानि अङ्कलालितान्यपत्यानि अकाण्ड एवागत्य असंस्तुतैः नीयन्ते। एतानि तानि खलु अङ्कनस्थानानि संसारस्य। सेऽयं सर्वाभितापिनः शोकाग्नेः दाहशक्तिः। एतच्चदपत्यत्वे समानेऽपि जातायां दुहितरि दूयन्ते सन्तः।

---

विदग्धाः निपुणाः। लक्ष्यभुवि शरव्यस्थाने।

प्रस्तावः प्रसङ्गः। उद्वेगमहावर्ते उद्वेगः विषादः, उद्वेगाख्ये महावर्ते। अन्यत्र उद्धृतवेगे महावर्ते। पातयति क्षिपति, भ्रंशयति च। पयोधरोद्गमनं स्तनोद्भेदः, मेघोन्नतिश्च। अनुवर्षम् अनुवत्सरम्, अनुवृष्टिञ्च। विवर्धमाना परिणता भवन्तीति, अन्यत्र वर्धमानजला। महादेवीं महिषीम्। अन्धकारयति कर्तव्यमूढं करोति। अन्यत्र अन्धकारयुक्तं करोति। पयोधरोन्नतिः स्तनवृद्धिः, मेघोद्गतिरिति च। केनापि कृता, प्रसिद्धस्यापि स्रष्टुः अनभिमततादृशस्थितिकरार्णां नामग्रहणमपि अनिच्छन्नेवं प्रयुक्तवान्। अनभिमता अनिष्टा स्थितिः मर्यादा। अकाण्डे अनभिमते काले। अङ्कनम् अपवादः। अपत्यत्वे समाने सुतदुहित्रोरिति शेषः।

एतदर्थं जन्मकाल एव कन्यकाभ्यः सलिलमश्रुबिन्दुभिः प्रयच्छन्ति साधवः। एतद्भयाद् अकृतदारपरिग्रहाः परिहृतगृहवसतयः शून्यानि अरण्यान्यधिशेरते मुनयः। को हि नाम चेतनः सहेत विरहमपत्यानाम्। यथा यथा समापतन्ति दूता वरणाय वराणां वराकी लज्जमानेव चिन्ता तथा तथा नितरां प्रविशति नो हृदयम्। किं क्रियते? तथापि गृहगतैरनुगन्तव्या एव लोकवृत्तयः। प्रायेण सत्स्वपि अनेकेषु वरगुणेषु अभिजन एव रज्यन्ते धीमन्तः। धरणीभृतां च मूर्ध्नि स्थितो महेश्वर-पादन्यास इव सकलभुवननमस्कृतो मौखरो वंशः। तत्रापि तिलकभूतस्य अवन्तिवर्मणः सूनुरग्रजो ग्रहवर्मनामा ग्रहपतिरिव गां गतः पितुरन्यूनो गुणैरेनां प्रार्थयते। यदि भवत्या अपि मतिरनुमन्यते ततस्तस्मै दातुम् इच्छामि' इत्युक्तवति भर्तरि दुहितृस्नेहकातरहृदया सास्रलोचना महादेवी प्रत्युवाच— 'आर्यपुत्र! संवर्धनमात्रोपयोगिन्यो धात्रीनिर्विशेषाः खलु भवन्ति मातरः कन्यकानाम्। दाने तु प्रमाणमासां पितरः। केवलं कृपाकृतविशेषः तनयस्नेहात् सुदूरेणातिरिच्यते दुहितृस्नेहः। यथा न यावज्जीवमावयोराधितां प्रतिपद्यते तथा आर्यपुत्र एव जानाति' इति।

राजा तु जातनिश्चयो दुहितृदानं प्रति समाहूय सुतावपि विदितार्थौ

---

एतदर्थम् एतस्माद्धेतोः। अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्यम्[1]। अर्थशब्दो हेतुवचनः। 'अर्थः स्याद् विषये मोक्षे शब्दवाच्ये प्रयोजने। व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु॥' इति वैजयन्ती। वरणाय प्रार्थनाय। वराणां जामातॄणाम्। वराकी साधुः। *[हृदयम्, एतेन अन्तर्ध्यानयोर्मं विजनस्थानं च विवक्षितम्। 'यस्तया सह प्रविवेश चन्द्रापीडहृदयम्' इतिवत्। गृहगतैः गृहस्थैः।] वरगुणेषु 'बन्धुशीललक्षणसम्पन्नश्रुतवानरोगः' इति वरसम्पत्। अभिजने वंशे। धरणीभृतां राज्ञां, पर्वतानां च। मूर्ध्नि शिरसि, शेखरे च। मौखरः मुखरो नाम राजा। ग्रहपतिः सूर्यः। प्रमाणं निर्णायकः। सुदूरेण अतिमात्रमित्यर्थः। आधितां मनोदुःखताम्। प्रतिपद्यते इयमिति शेषः।

---

१. 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' (वा० २. १. ३६.) सि० कौ०

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

अकार्षीत् । शोभने च दिवसे ग्रहवर्मणा प्रार्थयितुं प्रेषितस्य पूर्वागतस्यैव प्रधानपुरुषस्य दूतस्य करे सर्वराजकसमक्षं दुहितृदानं प्रति जलमपातयत् । जातमुदि कृतार्थे च गते तस्मिन्, आसन्नेषु विवाहदिवसेषु उद्दामदीयमानताम्बूलपटवासकुङ्कुमकुसुमं, प्रसाधितसर्वलोकं, सर्वदेशादिश्यमानशिल्पिसार्थोपगमनम्, अवनिपालपुरुषगृहीतसमग्रग्रामीणोपदीयमानोपकरणसम्भारं, राजदौवारिकोपनीयमानानेकनृपोपायनम्, उपनिमन्त्रितोपगतबन्धुवर्गसंवर्गणव्यग्रराजवल्लभं, लब्धमधुमदप्रचण्डचर्मकारककरपुटोल्लासितकोणपट्टुविघट्टनरटन्मङ्गलपटहं*, पिष्टपञ्चाङ्गुलमण्ड्यमानोलूखलमुसलशिलाद्युपकरणम्, अशेषाशामुखावर्जितचारणपरम्परापूर्यमाणप्रकोष्ठप्रतिष्ठाप्यमानेन्द्राणीदैवतं, सितकुसुमविलेपनवसनसत्कृतैः सूत्रधारैः आधीयमानविवाहवेदीसूत्रपातम्, उत्कूर्चिकरैश्च वर्णसुधाकर्परस्कन्धैः अधिरोहणीसमारूढैर्धवैः धवलीक्रियमाणप्रासादप्रतोलीप्राकारशिखरं, क्षुण्णक्षाल्यमानकुसुम्भसम्भारारम्भः-

उद्दामं प्रभूतम् । सर्वलोकं सर्वजनम् । शिल्पी कारुः (ശില്പികൾ) । ग्रामीणः ग्रामजातजनः । उपनिमन्त्रितः कल्याणार्थमाहूतः । संवर्गणं पूजा । प्रचण्डः उद्धतः । चर्मकारकः पटहताडकः (ഉവച്ചൻ) । (उल्लासितः) परिवर्तनेन प्रहृतः । कोणः वादनदण्डः । पट्टुविघट्टितम् अमन्दताडितम् । शिला दृषत् (അമ്മി) । 'शिला माता दृषत्समा' इति वैजयन्ती । आवर्जितः आनीतः । प्रकोष्ठं कक्ष्यान्तरम् (മുകപ്പ്) । इन्द्राणीदैवतम् इन्द्राण्याख्यदैवतम् । सूत्रधारैः तक्षभिः । सूत्रपातं सूत्रस्थानम् । उत्कूर्चिकरैः उद्धतकूर्चयुक्तकरैः । कूर्चिः लेखनसाधनविशेषः । 'तूलिका कूर्चिः' इति वैजयन्ती । वर्णसुधाकर्परस्कन्धैः वर्णोऽनुलेपनं; वर्णार्थसुधापूर्णकपालस्कन्धैः । अधिरोहणी निश्रेणिः । 'निश्रेणिस्त्वधिरोहणी' इत्यमरः । धवैः धव इति सुधादिभिः गृहादीनां लेपक उच्यते । इदं 'धावु गतिशुद्ध्योः' इति धातो रूपम् । उपधाह्रस्वस्तु भोजदेवेनोक्तः । प्रतोली रथ्या । प्राकारः सालः । क्षुण्णं मृदितम् ।

* 'विघट्टिते'ति व्याख्यानुसारी 1. 'लेपन', 2. निश्रेणिः=കോണി-क.

प्लवरज्यमानजनपदपादपल्लवं, निरूप्यमाणयौतकयोग्यमातङ्गतुरङ्गतरङ्गिताङ्गणं, गणनाभियुक्तगणकगणगृह्यमाणलग्नगुणं, गन्धोदकवाहिमकरमुखमहाप्रणालापूर्यमाणक्रीडावापीसमूहं, हेमकारचक्रप्रक्रान्तहाटकघट्टनटङ्कारवाचालितालिन्दकम्, उत्थापिताभिनवभवनभित्तिपात्यमानबहलवालुकाकरण्डकलेपाकुलक्लेपककुललोकं, चतुरचित्रकारचक्रवालकलिख्यमानमङ्गल्यालेख्यं, लेप्यकारकदम्बकक्रियमाणमृन्मयमीनकूर्ममकरनालिकेरकदलीपूगवृक्षकं, क्षितिपालैश्च स्वयमाबद्धकक्ष्यैः स्वाम्यर्पितकर्मशोभासम्पादनाकुलैः सिन्दूरकुट्टिमभूमिं च मसृणयद्भिः विहितसरसार्पणहस्तविन्यस्तालक्तकपाटलांश्च चूताशोकपल्लवलाञ्छितशिखरान् उद्वाहवितर्दिकास्तम्भान् उत्तम्भयद्भिः प्रारब्धविविधव्यापारम्, आसूर्योदयाच्च प्रविष्टाभिः सतीभिः सुभगाभिः सुरूपाभिः सुवेषाभिरविधवाभिः सिन्दूररजोराजिरञ्जितललाटाभिः वधूगोत्रग्रहणगर्भाणि श्रुतिसुभगानि

---

जनपदः जनः। 'देशे जने जनपदः' इति वैजयन्ती। यौतकं स्त्रीधनम्। 'कन्यादाने धनं दत्तं यौतकं यौतकं च तत्' इति वैजयन्ती। अभियुक्तः कुशलः। गणकः मौहूर्तिकः। प्रणालः जलप्रवाहनालिः (ഓവ്)। घट्टनम् आहतिः। अलिन्दः बाह्यद्वारप्रकोष्ठः (കല്പടി)। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः। उत्थापितं स्थापितं (എടുക്കപ്പെട്ടതു്)। वालुकाकरण्डकलेपः वालुकाशब्देन वालुकाप्रकृतिः श्लक्ष्णपिष्टा सुधोच्यते। करण्डकं पात्रम्। यथा अञ्जलिमितं जलं जलाञ्जलिमित्युच्यते तद्वत् करण्डकमिता वालुका वालुकाकरण्डकमित्युच्यते। लेपः लेपनम्। लेपकः पलगण्डः (ചാന്തിടുവാൻ)। मङ्गल्यालेख्यं पूर्णकुम्भकल्पद्रुमशङ्खनिध्यादिकं मङ्गल्यचित्रम्। लेप्यं मृदादिभिः प्रतिकृतिरचना। आबद्धकक्ष्यैः आबद्धवस्त्रबन्धैरित्यर्थः। मसृणयद्भिः मसृणं कुर्वद्भिः। मसृणं മെഴുത്തതു്। विहितेत्यादि। विहितसरसार्पणं यथा तथा हस्तैः विन्यस्तेन अलक्तकेन पाटलान्। [2]अर्पणं തേച്ചിടൽ। आतर्पणमित्यपपाठः। उद्वाहवितर्दिका विवाहवेदिका। उत्तम्भयद्भिः स्थापयद्भिः। आसूर्योदयात् सूर्योदयादारभ्य। सुवेषाभिः शोभितालङ्काराभिः। गोत्रं नाम।

---

१. 'लिरित्यु', २. अर्पणं=അപ്പുകൈ-क.

ङ्गीतकानि गायन्तीभिः बहुविधवर्णकदिग्धाङ्गुलीभिः ग्रीवासूत्राणि चित्रयन्तीभिः चित्रपत्रलतालेख्यकुशलाभिः कलशांश्च विमलाञ्छीतल-शाजि(रेपुशरावरि)श्रेणीश्च मण्डयन्तीभिः, अभिन्नपुटकार्पासतूलपल्लवान् हिककङ्कणोर्णादिसङ्ग्रहांश्च रञ्जयन्तीभिः, वर्णघृतघनीकृतकुङ्कुम-कामिश्रितांश्चाङ्गरागान् लावण्यविशेषकृन्ति मुखालेपनानि कल्पयन्तीभिः, ालिनीश्च सजातिफलाः स्फुरत्स्फीतस्फटिककर्पूरशकलखचितान्तरैला-ङ्कमालाश्च रचयन्तीभिः, समन्तात् सामन्तसीमन्तिनीभिः व्याप्तं, ेषभक्तिनिर्माणनिपुणपुराणपौरपुरन्ध्रीबद्ध्यमानैः बद्धैश्च आचार-ान्तःपुरजरतीजनजनितपूजाविराजमानरजकरज्यमानैश्च रक्तैश्च उभय-ान्तलग्नपरिजनप्रेङ्खोलितैः छायासु शोष्यमाणैः शुष्कैश्च कुटिल-रूपक्रियमाणपल्लवपरभागैः अपरैरारब्धकुङ्कुमपङ्कस्थासकच्छुरणैः ःरुद्धुजभुजिष्याभुज्यमानभङ्गुरोत्तरीयैः क्षौमैश्च बादरैश्च दुकूलैश्च

---

रञ्जनद्रव्यम्। शीतलशालाजिरं पिष्टमयशराव इत्युपदेशः (മാവുകൽ)। ाजिरो वर्धमानः (शरावः)' इति हलायुधः। अभिन्नपुटम् अविकासितोदरम्। ं(പരുത്തി)। तूलपल्लवकं पिचुस्तबकं (പഞ്ഞിക്കൊത്തു)। कङ्कणोर्णा-ान् हस्तसूत्रार्थतन्तुसमूहान्। उभयत्र वैजयन्ती—'हस्तसूत्रेऽपि कङ्कणम्। भ्रूमध्यगावर्ते तन्तौ मेषादिलोमसु' इति। वर्णघृतं लेपनघृतम् (ഓല-ധ്യം)। घनीकृतं मेदुरीकृतम्। मुखालेपनानि लोध्रचूर्णादीनि मुखालेपन-ो। स्फटिककर्पूरः स्फटिकवर्णः कर्पूरः। भक्तिः (തരം)। पुरन्ध्री ्रवती स्त्री। बद्धैः पुरन्ध्रीभिरिति शेषः। रजकः वस्त्रनिर्णेजकः। रक्तैः रेति शेषः। लग्नः कर्तरि निष्ठा। प्रेङ्खोलितैः चालितैः। कुटिलक्रम-्यमाणपल्लवपरभागैः कुटिलप्रकाररूपं यथा भवति तथा क्रियमाणः य वस्त्रान्तस्य परभागः वर्णभेदः येषाम्। आरब्धं कृतम्। स्थासकः ्भिरर्पणम्। छुरणं सम्बन्धः। भुज्यमानः कुटिलीक्रियमाणः (ഒകൂറു ക്കി)। क्षौमैः क्षोमोद्भवैः, वल्कलमयैरित्यर्थः। बादरैः कार्पासविकारैः।

---

ाक्कुഴെയ്, २. भुज्यमानः ചുരുക്കപ്പിടിക്കുക-क.

लालातन्तुजैश्च अंशुकैश्च नेत्रैश्च निर्मोकनिभैः अकठोररम्भागर्भपत्रकोमलैः निःश्वासहार्यैः स्पर्शानुमेयैश्च वासोभिः सर्वतः स्फुरद्भिः इन्द्रायुधसहस्रैरिव सञ्छादितम्, उज्ज्वलनिचोलावकुण्ठ्यमानैर्हंसतूलैः शयनीयैश्च तारतर-मुक्ताफलोपचीयमानैश्च कञ्चुकैरनेकोपयोगपाट्यमानैश्च अपरिमितैः पट्टपटी-सहस्रैः अभिनवरागकोमलदुकूलरच्यमानैश्च पटवितानैः स्तवरकनिवह-निरन्तराच्छाद्यमानसमस्तपटलैश्च मण्डपैः उच्चित्रनेत्रपटवेष्ट्यमानैश्च स्तम्भै-रुज्ज्वलं च रमणीयं च उत्सुकं च पर्याकुलं च मङ्गलं चासीद् राजकुलम्।

देवी तु यशोवती विवाहोत्सवपर्याकुलहृदया हृदयेन भर्तरि कुतूहलेन जामातरि स्नेहेन दुहितरि उपचारेण निमन्त्रितस्त्रीजनेषु आदेशेन परिजने शरीरेण सञ्चरणे चक्षुषा कृताकृतप्रत्यवेक्षणेषु आनन्देन महोत्सवे एकापि बहुधा विभक्तेवावभवत्।

भूपतिरपि उपर्युपरि विसर्जितोष्ट्रवामीशतजनितजामातृतोषः सत्यपि आज्ञासम्पादनदक्षे परिजने समं पुत्राभ्यां दुहितृस्नेहविक्लवः सर्वं स्वयमकरोत्।

एवं च तस्मिन् विभ्रममय इव भवति राजकुले, मङ्गलमय इव जायमाने जीवलोके, चारणमयेष्विव वीक्ष्यमाणेषु दिङ्मुखेषु, पटह-रवमय इव कृतेऽन्तरिक्षे, भूषणमय इव परिभ्रमति परिजने, बान्धवमय

---

लालातन्तुजैः कौशेयैः। अंशुकैः सूक्ष्मवस्त्रैः। नेत्रैः पट्टविशेषैः (ഒന്നാംതരം പട്ടു്)। रम्भा कदली। निःश्वासहार्यैः निःश्वासस्पर्शमात्रभ्रंशनीयैः। निचोलैः प्रच्छदपटः। अवकुण्ठ्यमानैः छाद्यमानैः। हंसतूलैः हंसपक्षरोममयतूलं शयनीयं हंसतूलशब्देनोच्यत इत्युपदेशः। उपचीयमानैः संवर्ध्यमानैः। उपयोगः कार्यम्। पाट्यमानैः खण्डशः क्रियमाणैः। पट्टपटी पट्टाकारपटी। रागः रञ्जनम्। पट-वितानैः पटकृतवितानैः (മേൽക്കെട്ടു്)। स्तवरकं पट्टविशेषः (തൊവാംകം)। पटलं छदिः (ഇറമ്പു്)। उत्सुकं श्रद्धेयमित्यर्थः।

निमन्त्रितस्त्रीषु आहूतस्त्रीषु।

वामी अश्वस्त्री।

---

* 'तूलैस्तरातर' इति स्याद् व्याख्यानुसारी. १. निचोलः=ഉറ क.

इव दृश्यमाने सर्गे, निर्वृतिमय इव उत्प्रेक्ष्यमाणे काले, लक्ष्मीमय इव विजृम्भमाणे महोत्सवे, निदान इव सुखस्य फल इव जन्मनः परिणाम इव पुण्यस्य यौवन इव विभूतेः नवराज्य इव प्रीतेः सिद्धिकालात्यय इव मनोरथस्य वर्तमाने काले, गण्यमान इव जनाङ्गुलीभिः आलोक्यमान इव मार्गध्वजैः प्रत्युद्गम्यमान इव मङ्गलवाद्यप्रतिशब्दकैः आहूयमान इव मौहूर्तिकैः आकृष्यमाण इव मनोरथैः परिष्वज्यमान इव वधूसखी-हृदयैराजगाम विवाहदिवसः। प्रातरेव प्रतीहारैः समुत्सारितनिखिला-निबद्धलोकं विविक्ततरमक्रियत राजकुलम् ।

अथ प्रतीहारः प्रविश्य नृपसमीपं 'देव! जामातुरन्तिकात् ताम्बूलदायकः पारिजातनामायं प्राप्तः' इत्यभिधाय स्वाकारं युवानम् अदर्शयत्। राजा तु तं दूरादेव जामातृबहुमानाद् दर्शितादरो 'भद्र! बालक! कच्चित् कुशली कुमारो गृहवर्मा' इति पप्रच्छ। असौ तु समाकर्णितनरपतिध्वनिः धावमानः कतिचित् पदान्युपसृत्य प्रसार्य बाहू राजसेवाचतुरः चिरं वसुन्धरायां निधाय मूर्धानम् उत्थाय 'देव! कुशली, यथाज्ञापयसि। अर्चयति च देवं नमस्कारेण' इति व्यज्ञापयत्। आगमनमात्रनिवेदनागतं च तं ज्ञात्वा कृतसत्कारं राजा 'अद्य यामिन्याः प्रथमे यामे विवाहः। कालात्ययकृतो यथा न भवति दोषः तथा विधीयताम्' इति सन्दिश्य प्रतीपं प्राहिणोत्।

अथ सकलकमलवनलक्ष्मीं वधूमुख इव सञ्चार्य समवसिते वासरे, विवाहदिवसश्रियः पादपल्लव इव संरज्यमाने सवितरि, वधूवरानुराग-लघूकृतप्रेमलज्जान्वितेष्विव विघटमानेषु चक्रवाकमिथुनेषु सौभाग्यध्वज

---

निदानं आदिकारणं। अनिबद्धलोकं कार्येषु सम्बन्धहीनं जनम्। विविक्तं विजनम्।

कालात्ययः कालातिक्रमः। प्रतीपं प्रतिमुखम्।

सकलेत्यादि— वासरसमवसानकाले वधूमुखमेकमेव लक्ष्मीयुक्तमिति-कृत्वैवमुक्तम्। समवसिते समाप्ते। वधूवरानुरागलघूकृतप्रेमलज्जान्वितेषु वधू-वरयोः [illegible]

इव रक्तांशुकसुकुमारवपुषि नभसि स्फुरति सन्ध्यारागे, कपोतकण्ठकर्बुरे यात्रारजसीव कलुषयति दिङ्मुखानि तिमिरे, लग्नसम्पादनसज्ज इव उज्जिहाने ज्योतिर्गणे, विवाहमङ्गलकलश इव उदयगिरिशिखरेण समुत्क्षिप्यमाणे विमलकिरणनिचयपरिष्कृतवर्धमानधवलच्छाये ताराधिपमण्डले वधूवदनलावण्यज्योत्स्नापरिपीततमसि प्रदोषे, वृथोदितमुपहसन्तीष्विव रजनिकरमुत्तानितमुखीषु कुमुदिनीषु, आजगाम मुहुर्मुहुरुल्लसितस्फारस्फुरितारुणचामरः, मनोरथैरिव उत्थितरागाग्रपल्लवैः पुरोधावमानपादातैः उत्कर्णकटकहयप्रतिहेषितदीयमानस्वागतैरिव वाजिनां वृन्दैरापूरितदिग्भागः, चलकर्णचामराणां च चामीकरमयसर्वोपकरणानां वर्णकम्बलिनां बलिनां घण्टाटङ्कारिणां करिणां घटाभिर्घटयन्निव पुनरिन्दूदयविलीनमन्धकारं, नक्षत्रमालालङ्कृतमुखीं करिणीं निशाकर इव पौरन्दरीं दिशमारूढः, प्रकटितविविधविहगविरुतैः तालावचरचारणैः वारणपुरस्सरैर्बालो वसन्त इव उपवनैः क्रियमाणकोलाहलः, गन्धतैलावसेकसुगन्धिना दीपिकाचक्रवालालोकेन कुङ्कुमपटवासपांसुजालेनेव पिञ्जरीकुर्वन् सकलजीवलोकम्, उत्फुल्लमल्लिकामुण्डमालामध्याध्यासितकुसुमशेखरेण शिरसा हसन्निव सपरिवेषक्षपाकरं कौमुदीप्रदोषम्, आत्म-

---

न्योन्यप्रेमतया लज्जितेषु इत्यर्थः। अंशुकसुकुमारम् अंशुकवत् सुकुमारम्, अंशुकेन सुकुमारं च। कपोतः पक्षिविशेषः (ഫ്ഠ൦൦വ൦)। यात्रारजसि यात्रासमयेऽश्वादिभिरुद्धूते रजसि। उज्जिहाने उद्यति। ज्योतिर्गणे नक्षत्रसमूहे। उल्लसितम् ऊर्ध्वचलितम्। स्फारस्फुरितम् अतिशोभितम्। उत्थितरागाग्रपल्लवैः उद्भूतारुणिमयुक्ताग्राणि पल्लवानि येषाम्। अन्यत्र उत्थितो राग एवाग्रपल्लवो येषाम्। पादातैः पदातिसमूहैरुपलक्षितैः। स्वागतैः स्वागतवचनैः। वर्णकम्बलं वर्ण(पिटाऽपटम्) आस्तरणकम्बलं वा। 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः। घटयन् सम्बध्नन्। नक्षत्रमाला गजगलाभरणविशेषः (ഩ൦൦൦ മ൦൭൭ല), नक्षत्रपङ्क्तिश्च। प्रकटितविविधविहगविरुतैः अनुकृतविविधचटकादिपक्षिशब्दैः। अन्यत्र प्रकाशितविविधकोकिलशब्दैः। गन्धतैलावसेकः गन्ध-

---

१. 'अवेस्थितेषु'-ख.

रूपनिर्जितमकरकेतुकरापहृतेन कार्मुकेणेव कौसुमेन दाम्ना विरचित-वैकक्ष्यकाविलासः, कुसुमगन्धसौरभभ्रमद्भ्रमरकुलकलप्रलापसुभगः, पारिजात इव जातः श्रिया सह पुनरवतारितो मेदिनीं नववधूवदनावलोकन-कुतूहलहेलाकृष्यमाणहृदयः पतन्निव सुखेन प्रत्यासन्ने लग्ने ग्रहवर्मा त्वरिततरमाजगाम।

राजा तु तमुपद्वारमागतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुतः प्रत्युज्जगाम। अवतीर्णं च कृतनमस्कारम् मन्दरमिव माधवः प्रसारितभुजो गाढमालिलिङ्ग। यथाक्रमं परिष्वक्तराज्यवर्धनहर्षवर्धनं च हस्ते गृहीत्वाभ्यन्तरं निन्ये। स्वानिर्विशेषासनदानादिना चैनमुपचारेण उपचचार।

न चिराच्च गम्भीरनामा नृपतेः प्रणयी विद्वान् द्विजन्मा तं ग्रहवर्माणम् उवाच—'तात! त्वां प्राप्य चिरात् खलु राज्यश्रिया घटितौ तेजोमयौ सकलजगद्गीयमानबुधकर्णानन्दकारिगुणगणौ सोमसूर्यवंशाविव पुष्यभूति-मुखरवंशौ। प्रथममेव कौस्तुभमणिरिव गुणैः स्थितोऽसि हृदये देवस्य। इदानीं तु शशीव शिरसा परमेश्वरेण वोढव्योऽसि जातः' इति।

एवं वदत्येव तस्मिन्नुपसृत्य मौहूर्तिकाः 'देव! समासीदति

---

वासिततैलसेचनम्। विलासः शोभा। कुसुमेत्यादि उभयत्र समानम्। जातः श्रिया सह श्रिया सह जातः; जननसमयादारभ्य श्रीमानित्यर्थः; लक्ष्म्या सहोद्भूतश्च। पुनरवतारितो मेदिनीं पूर्वं कृष्णेनाप्यवतारित इत्यभिप्रायेण पुनः-शब्दप्रयोगः।

तातेत्यादि— राज्यश्रिया राज्यश्रीनामधेयया कन्यकया। तेजः प्रभावः, दीप्तिश्च। बुधकर्णानन्दकारिगुणगणौ विद्वच्छ्रवणानन्दकारिगुणसमूहौ। अन्यत्र बुधः सोमपुत्रः, कर्णः सूर्यपुत्रः। (त्वत्सम्बन्धलाभेन पुष्यभूतिरन्यानां राज्यलक्ष्मीः सम्पादितेत्यर्थः?)। गुणैः सौशील्यादिभिः, विशिष्टतेजस्त्वादिभिश्च। हृदये वक्षसि, मनसि च। देवस्य राज्ञः, विष्णोश्च। परमेश्वरेण राज्ञा, महादेवेन च।

लग्नवेला। व्रजतु जामाता कौतुकगृहम्' इत्यूचुः। अथ नरेन्द्रेण 'गच्छ। उत्तिष्ठ' इति गदितो ग्रहवर्मा प्रविश्याभ्यन्तरं जामातृदर्शनकुतूहलिनीनां स्त्रीणां पातितानि लोचनसहस्राणि विकचनीलकुवलयवनानीव लङ्घयन्नाससाद कौतुकगृहद्वारम्। निवारितपरिजनश्च प्रविवेश।

अथ तत्र कतिपयाप्तप्रियसखीस्वजनप्रमदाप्रायपरिवाराम्, अरुणांशुकावकुण्ठितमुखीं प्रभातसन्ध्यामिव स्वप्रभया निष्प्रभान् प्रदीपान् कुर्वाणाम्, अतिसौकुमार्यशङ्कितेनेव यौवनेन नातिनिर्भरमुपगूढां, साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैः निभृतायतैः श्वसितैरपयान्तं कुमारभावमिव अनुशोचन्तीम् अत्युत्कम्पिनीं पतनभियेव त्रपया निष्पन्दं धार्यमाणां हस्तं, तामरसप्रतिपक्षम् आसन्नग्रहणं शशिनमिव रोहिणीं भयवेपमानमानसाम् आलोकयन्तीं, चन्दनधवलतनुलतां निशामिव ज्योत्स्नाधानाश्रितलावण्यात् कुमुदिनीगर्भादिव प्रसूतां, कुसुमामोद-

---

कौतुकगृहं प्रतिसरबन्धनगृहम्।

अरुणांशुकावकुण्ठितमुखीं रक्तवस्त्रावच्छादितवदनाम्। अंशुकावण्कुठनं च कन्यकानां विवाहसमयेषु क्रियमाण आचारः। एतद् रघुवंशेऽपि प्रसङ्गेन दर्शितं— 'रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः। अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव॥' इति। अन्यत्र अंशुरेवांशुकः, स्वार्थे कः। अरुणस्य सूर्यसारथेः अंशुकेनाच्छादितारम्भम्। स्वप्रभयेत्यादि उभयत्र समानम्। सौकुमार्याशङ्कितेन मार्दवातिशयादस्या दृढं मयालिङ्गने क्रियमाणे ध्रुवं म्लानिर्भविष्यतीति भीतेन। नातिनिर्भरं नातिमात्रमुपगूढां व्याप्तशरीरां कृतालिङ्गनामिति च। कुमारभावं कुमारावस्थाम्। अनुशोचन्तीं तव च मम च चिरकालसम्भूतसम्बन्धो गच्छतीति अनुशोक इत्यनुसन्धेयम्। तामरसप्रतिपक्षं कान्त्यतिशयेन तामरसशोभाहारिणमित्यर्थः। अन्यत्र तामरसानां शत्रुम्। ग्रहणं भर्त्रा ग्रहणं, उपरागश्च। चन्दनधवलं चन्दनेन धवलं, चन्दनवद् धवलं च। ज्योत्स्नाधानं ज्योत्स्नाशब्देन प्रभा लक्ष्यते। तस्याधानं सङ्क्रमः। अन्यत्र ज्योत्स्ना कौमुदी। लावण्यं— भूयिष्ठं तेज एवाद्भिः बहुलाभिर्मृदूकृतम्। चक्षुरानन्दजननं लावण्य-

निर्हारिणीं वसन्तहृदयगर्भादिव निर्गतां, निःश्वासपरिमलाकृष्टमधुकर-कुलाम् मलयमारुतादिवोत्पन्नां, कृतकन्दर्पानुमरणां रतिमिव पुन-र्जातां, प्रभाविलासलावण्यसौरभमाधुर्यैः कौस्तुभमदिराशशिपारिजाता-मृतप्रभवैः सर्वरत्नगुणैरपरामिव सुरासुररुषा रत्नाकरेण कल्पितां श्रियं, स्निग्धेन मुक्ताफलवालिकालोकेन सितसिन्दुवारकुसुममञ्जरीभिरिव कल्पितकर्णावतंसकां, कर्णाभरणमरकतप्रभाहरितशाद्वले कपोलतले विनोदयन्तीमिव हरिणीं लोचनच्छायाम् अधोमुखीं दधानां, वरकौतुका-लोकनाकुलम् मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं सखीजनहृदयं च निर्भर्त्सयन्तीं, वधूमपश्यत् ।

प्रविशन्तमेव च तं हृदयचोरं बध्वा समर्पितं जग्राह कन्दर्पः । परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यद्यत् कार्यते जामाता तत्सर्वम् अतिपेशलं चकार । कारितपरिणयानुरूपवेषपरिग्रहां च गृहीत्वा करेण

---

मिति कथ्यते ॥' इति दिवाकरः । निर्हारिणीं सुरभिगन्धिम् । 'समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणे' इति सिंहः । प्रभेत्यादि— रत्नाकरेण प्रभादिभिः सर्वगुणैः कल्पितामित्यन्वयः । वालिका श्रोत्राभरणविशेषः (வாளி)। मरकत-प्रभाहरितशाद्वले मरकतप्रभाभिः हरितशादयुक्ते । शादः शष्पमस्यास्तीति शाद्वलः । 'नडशादाड्ड्वलच्' (पा० सू० ४. २. ८८.) इति मत्वर्थीयो वलच् । 'शाद्वलः शादहरितः' इत्यमरः । हरिणीं हरितवर्णाम् । हरितवर्णत्वं च कर्णाभरणमरकतप्रभासम्बन्धादित्यनुसन्धेयम् । हरितशब्दाद् 'वर्णादनुदात्तात् तोपधात् तो नः' (पा० सू० ४. १. ३९) इति ङीपि तकारस्य नकारादेशे च कृते हरिणीति रूपम् । 'हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या' इत्यमरः । हरिणीशब्देन मृगी च ध्वन्यते । वरावलोकनकौतुकाकुलमिति च पाठः । एतदुभयत्र समानम् । कृतमुखोन्नमनप्रयत्नम् एतच्च ।

प्रविशन्तमित्यादि । अत्र कन्दर्पस्य चोराध्यक्षसमाधिरुच्यते । अयमर्थः— यथा यं कञ्चनार्थापहारकं चोरम् अपहृतधनेन पुरुषेण समर्पितं गृहीत्वा दत्तं

**वधूं निर्जगाम। जगाम च नवसुधाधवलां निमन्त्रितागतैस्तुषारशैलोपत्य-कामिव त्र्यम्बकोऽम्बिकाविवाहाहूतैः भूभृद्भिः परिवृतां, सेकसुकुमार-यवाङ्कुरदन्तैः पञ्चास्यैः कलशैरनेकवर्णिकाविचित्रैरमत्रमुखैश्च अञ्जलि-कारिकाभिः दीपपात्रैश्च मङ्गल्यफलहस्ताभिरुद्भासितपर्यन्ताम्, उपाध्या-याधीयमानेन्धनधूमायमानाशुशुक्षणिसन्धुक्षणोपदिष्टक्षणिकद्विजाम्, उप-कृशानुविनिहितानुपहतहरितकुशां, सन्निहितदृषदजिनाज्यस्रुवस्रुक्समित्-पूलनिवहां, नूतनशूर्पार्पितश्यामलशमीपलाशमिश्रलाजभासिनीं वेदिम्। आरुरोह च तां दिवमिव सज्योत्स्नः शशी। समुपससर्प च वेल्लितारुण-शिखापल्लवस्य शिखिनः कुसुमायुध इव रतिद्वितीयो रक्ताशोकस्य**

---

चोराध्यक्षो गृह्णाति, तथा हृदयचोरं बध्वा समर्पितं तं कन्दर्पो जग्राह। अन्योन्य-दर्शनेनैव वधूवरौ कन्दर्पाक्षिप्तचित्तौ बभूवतुरित्यर्थः। नवेत्यादि। नवसुधाधवलां नवसुधालेपनेन धवलाम्। अन्यत्र नवसुधावद् धवलाम्। निमन्त्रितागतैः आहूता-गतैः। तुषारशैलोपत्यकां—'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः। भूभृद्भिः राजभिः, पर्वतैश्च। अत्रायम् अन्वयप्रकारः— नवसुधाधवलां निमन्त्रितागतैः भूभृद्भिः परिवृतां वेदिं जगाम। नवसुधाधवलाम् अम्बिकाविवाहाहूतैः भूभृद्भिः परिवृतां तुषारशैलो-पत्यकां त्र्यम्बक इव। वर्णिका पिष्टादिविरचिता अल्परेखाप्रकारः। अमत्र-मुखैः पालिकाविशेषैः (വട്ടപ്പാലിക)। अञ्जलिकारिकाभिः मृदादिकृतस्त्री-प्रकृतिभिः। 'या तु लेप्यमयी नारी सा स्याद् अञ्जलिकारिका' इति **वैजयन्ती**। सन्धुक्षणं वर्धनम्। क्षणिकः क्षणवान्। क्षणव्यापृत इत्यर्थः। दृषत् शिला (അമ്മി)। पूलः (तृणपञ्जिका)। श्यामलम् अशुष्कत्वात् श्यामवर्णम्। शमीपलाशः शमीपत्रम्। लाजैः सह शमीपत्राणामपि होमः **पारस्करेण** दर्शितः। 'कुमार्या भ्राता शमीपलाशमिश्रान् लाजान् अञ्जलिना-ञ्जलावावपति' इति। 'हविः शमीपल्लवलाजगन्धि' इति **कालिदासश्च**। वेल्लितं कुटिलम्, आधूतं च। 'वेल्लितौ धूतकुञ्चितौ' इति **वैजयन्ती**। शिखापल्लवं पल्लवाकारज्वाला। अन्यत्र शिखासु शाखाग्रेषु स्थितं पल्लवम्।

समीपम् । हुते च हुतभुजि प्रदक्षिणावर्तप्रवृत्ताभिः वधूवदनावलोकन-कुतूहलिनीभिरिव ज्वालाभिरेव सह प्रदक्षिणं बभ्राम । पात्यमाने च लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्ववधूवरदर्शनविस्मयस्मेर इव अदृश्यत विभावसुः ।

अत्रान्तरे च स्वच्छकपोलोदरसङ्क्रान्तम् अनलप्रतिबिम्बमिव निर्वापयन्ती स्थूलमुक्ताफलविमलबाष्पोदबिन्दुसन्दोहदर्शितदुर्दिना निर्विकारवदनं रुरोद वधूः । उदश्रुलोचनानां च वधूनामुदपादि महान् नादः । परिसमापितवैवाहिकक्रियाकलापस्तु जामाता वध्वा समं प्रणनाम श्वशुरौ । प्रविवेश च द्वारपक्षालिखितरतिदैवतं प्रणयिभिरिव प्रथमप्रविष्टैः अलिकुलैः कृतकोलाहलम्, अलिकुलपक्षपवनप्रेङ्खोलितैश्च कर्णोत्पलप्रहार-भयप्रकम्पितैरिव मङ्गलप्रदीपैः प्रकाशितम्, एकदेशलिखितेन स्तबकित-रक्ताशोकतरुमूलभाजा*धिज्यचापेन तिर्यक्कूणितनेत्रत्रिभागेन शरमृजूकुर्वता कामदेवेनाधिष्ठितम्, एकपार्श्वन्यस्तेन काञ्चनाचमनकेन इतरपार्श्ववर्तिन्या च दन्तशफरुकधारिण्या कनकपुत्रिकया साक्षाल्लक्ष्म्येवोद्दण्डपद्महस्तया सनाथेन स्वास्तीर्णेन शयनेन शोभमानं, शयनीयशिरोभागस्थितेन

---

'शिखा ज्वाला केकिमौल्योः शिफाशाखाग्रमौलिषु' इति वैजयन्ती । प्रदक्षिणा-वर्तप्रवृत्ताभिः प्रदक्षिणभ्रमणयुक्तं प्रवृत्ताभिः । ज्वालाभिः सह प्रदक्षिणं बभ्राम । ज्वालाश्च प्रदक्षिणं भ्रान्ता इत्यर्थः । स्मेरः हसनशीलः ।

निर्वापयन्ती शमयन्ती । रुरोद वधूः— एतद् भाविनो [1]वैधव्यस्य सूचकम् । श्वशुरौ श्वश्रूश्वशुरौ । 'श्वशुरः श्वश्र्वा' (पा० सू० १. २. ७१.) इत्येकशेषः । द्वारपक्षः द्वारपार्श्वः, द्वारप्रदेशभित्तिर्वा । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । रतिदैवतं रत्याख्यदैवतम् । प्रणयिभिः स्निग्धैः । प्रकाशितं दीपितम् । एकदेशः एकप्रदेशः । मूलं मूलदेशः । कूणितं निमीलितम् । आचमनकम् आचम्यतेऽस्मिन्नित्याचमनकम्; आचमनपात्रम् । शफरुकं (ഇലത്തട്ട്) ।

---

* 'तरुमूले'ति व्याख्यानुसारी. १. 'वैभवस्य'–ख. ग.

कृतकुमुदशोभेन कुसुमायुधसहायागतेन शशिनेव निद्राकलशेन राजतेन राजमानं वासगृहम् ।

तत्र च ह्रिया नववधूकायाः पराङ्मुखप्रसुप्ताया मणिभित्तिदर्पणेषु मुखप्रतिबिम्बानि प्रथमालापाकर्णनकौतुकागतगृहदेवताननानीव मणिगवाक्षेषु वीक्षमाणः क्षणदां निन्ये । स्थित्वा च श्वशुरकुले शीतलेन शीलेनामृतमिव श्वश्रूहृदये वर्षन्नभिनवोपचारैः अपुनरुक्तानन्दमयानि दश दिनानि नीत्वा दत्त्वा च राजदौवारिकमिव राजकुले रणरणकं यौतकनिवेदितानीवादाय हृदयानि सर्वलोकस्य कथं कथमपि विसर्जितो नृपेण वध्वा सह स्वं देशमगमत् । इति ।

॥ इति श्रीहर्षचरिते चक्रवर्तिजन्म नाम चतुर्थ उच्छ्वासः ॥



---

कृतकुमुदशोभेन कुमुदकान्तिनेत्यर्थः । अन्यत्र कृता कुमुदानां शोभा कान्तिः येन । निद्राकलशेन निद्रासमयेषु स्थापनीयेन कलशेन ।

शीतलेन मृदुना । दत्त्वा निधायेत्यर्थः । रणरणकम् औत्सुक्यम् । यौतकनिवेदितानि स्त्रीधनत्वेन दत्तानि ।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने चतुर्थ उच्छ्वासः ।



# अथ पञ्चम उच्छ्वासः ।

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तटिदिव वज्रं निपातयति ॥
पातयति महापुरुषान् सममेव च बहूननादरेणैव ।
परिवर्तमान एकः कालः शैलानिवानन्तः ॥

अथ कदाचिद् राजा राज्यवर्धनं कवचहरमाहूय हूणान् हन्तुं हरिणानिव हरिः हरिणेशकिशोरकम् अपरिमितबलानुयातं चिरन्तनैः अमात्यैः प्रधानैश्च महासामन्तैः कृत्वा साभिसरमुत्तरापथं प्राहिणोत् ।

प्रयान्तं च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गमैरनुवव्राज । प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि, निवर्तमानो वर्तमानो नवे वयसि विक्रमरसानुरोधिनि, केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु *उत्कण्ठमानवनदेवताकटाक्षांशुशारितशरीरकान्तिः क्रीडन्

---

अथ प्रभाकरवर्धनादिषु अतिमहति राज्यसुखोपभोगे वर्तमानेषु, कालवशतो राज्ञो ज्वरारम्भादिः तत्तदनिष्टोपनिपाता इति पञ्चमोच्छ्वासार्थः । तदेतद् द्वाभ्यामार्याभ्यां सङ्गृह्याह— नियतिरिति । तरला अव्यवस्थिता । नियतिः दैवम् । पुंसां प्रथमं सुखं विधाय उपरि दारुणं भीषणं दुःखं निपातयति । यथा आलोकं प्रकाशं कृत्वा तरला तटित् वज्रम् अशनिं निपातयति तथेति । अनादरेण अयत्नेन । परिवर्तमान अहोरात्रादिरूपेण विवर्तमानः । विवर्तनं, वेल्लनं[1] कुर्वंश्च । अनन्तः अनवसानः, शेषश्च ।

अथेत्यादि । कवचहरं कवचग्रहणयोग्यवयसम् । हरतेर्धातोः 'वयसि च' (पा० सू० ३. २. १०.) इत्यच्प्रत्ययः । हरिणेशः सिंहः । किशोरकं पोतम् । बलं सेना । साभिसरं सानुचरम् । 'अनुप्लवश्चानुचरः सहायोऽभिसरः समाः' इत्यमरः । उत्तरापथं विन्ध्यपर्वतस्योत्तरान् देशान् । 'विन्ध्यात्तु दक्षिणो देशो दक्षिणापथसंज्ञितः' इति वैजयन्ती[2] । उत्तरापथसंज्ञा स्वतःसिद्धैव ।

(निवर्तमानः) निवृत्यागच्छन् । उत्कण्ठायमानम् उत्सुकायमानम् । शारितं

---

१. 'विवलनं', २. 'न्ती । विन्ध्याद् दक्षिणदेशानां दक्षिणापथसंज्ञाभिधानादुत्तरेषां देशानाम् उत्तरापथ'-क. *'उत्कण्ठायमाने'ति व्याख्यानुसारी.

मृगयया मृगलोचनः कतिपयान्यहानि बहिरेव व्यलम्बत। चकार चाकर्णाकृष्टभासुरभल्लवर्षी स्वल्पीयोभिरेव दिवसैः निःश्वापदान्यरण्यानि।

एकदा तु वासतेय्यास्तुरीये यामे प्रत्युषस्येव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दावहुतभुजा दह्यमानं केसरिणम् अद्राक्षीत्। तस्मिन्नेव च दावदहने समुत्सृज्य शावकान् उत्प्लुत्यात्मानं पातयन्तीं सिंहीमपश्यत्। आसीच्चास्य मनसि—'लोहेभ्यः खलु कठिनतराः स्नेहमया बन्धनपाशाः। यदाकृष्टास्तिर्यञ्चोऽपि एवमाचरन्ति' इति। प्रतिबुद्धस्यास्य मुहुर्मुहुः दक्षिणेतरमक्षि पस्पन्दे। गात्रेष्वकस्मादेव च वेपथुः विपप्रथे। निर्निमित्तमन्तर्बन्धनस्थानात् चचालेव हृदयम्। अकारणादेव चाजायत गरीयसी दुःखासिका। किमिदमिति च समुपनतविविधविकल्पविप्रथितमतिः अपगतधृतिः चिन्तावनमितवदनः तिमिततरतारकेण चक्षुषा समुद्भिद्यमानस्थलकमलिनीवनमिव चकार चकोरेक्षणः क्षणं क्षोणीम्। अह्नि च तस्मिन् शून्येनैव चेतसा चिक्रीड मृगयाम्। आरोहति च हरितहये मध्यमह्नो भवनमागत्य उभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्तः क्षितितलविततां अतिशिशिरमलयजरसधवलवपुषम् इन्दुधवलोपधानधारिणीं वेत्रपट्टिकाम् अधिशयानः साशङ्क एव तस्थौ।

---

नानावर्णीकृतम्। बहिः स्वदेशादिति शेषः।

वासतेय्याः रात्र्याः। तुरीये चतुर्थे। स्वप्न इत्यादि। एष तु स्वप्नो राज्ञो भाविनो दाहज्वरस्य, यशोवत्याः स्वात्मजान् परित्यज्य अग्निप्रवेशस्य च सूचकः। शावकान् पुत्रकान्। आसीदिति—एषा चिन्तापि स्वप्नावस्थायामेव इत्यनुसन्धेयम्। पस्पन्दे स्फुरितम्। 'स्पदि किञ्चिच्चलने' इति धातुः। गात्रेषु अवयवेषु। वेपथुः कम्पः। विपप्रथे प्रथितः, स्फुटीबभूव इत्यर्थः। 'प्रथ प्रख्याने' इति धातुः। बन्धनस्थानाद् हृदयस्थानात्। दुःखासिका सविषादस्थितिः। समुपनतम् उद्भूतम्। समुद्भिद्यमानं प्ररोहत्। हरितहये सूर्ये। संवाह्यमानं वीज्यमानम्। वेत्रपट्टिका वेत्रदलरचितमासनम्।

अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चेलचीरिकया विरचितमुण्डमालं, श्रमातपाभ्यामारोप्यमाणकायकालिमानम् अन्तर्गतेन शोकशिखिना अङ्गारतामिव नीयमानं द्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्ताश्रवणकुतूहलिन्या मेदिन्येवानुगम्यमानम्, अभिमुखपवनप्रेङ्खदुत्तरीयकर्पटप्रान्तप्रवीज्यमानोभयपार्श्वम्, अतित्वरया कृतपक्षमिवाशु परापतन्तं, प्रेर्यमाणमिव पृष्ठतः स्वाम्यादेशेन, आकृष्यमाणमिव पुरस्तादायतैः श्रमश्वासमोक्षैः, स्विद्यल्ललाटपट्टघटमानप्रतिबिम्बेन कार्यगौरवाद् अपह्रियमाणलेखमिव भास्वता, सम्भ्रमाद् भ्रष्टैरिव इन्द्रियैः शून्यीकृतशरीरं, लेखार्पितप्रयोजनगौरवादिव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तं, कालमेघशकलमिव दुर्वार्तावज्रस्य, धूमपल्लवमिव ज्वलिष्यतः शोकज्वलनस्य, बीजमिव पतिष्यतो दुष्कृतपादपस्य निमित्तभूतं, दीर्घाध्वगं कुरङ्गकनामानमायान्तमद्राक्षीत् ।

दृष्ट्वा च पूर्वानिमित्तपरम्पराविर्भावितभीतिः अभिद्यत हृदयेन । कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमम् आननलग्नं विषादम् *उपनिन्ये, पश्चाल्लेखम् । तं च देवो हर्षः स्वयमेवावाचयत् । लेखार्थेनैव च सह गृहीत्वा हृदयेन सन्तापम् आविग्नरूपोऽभ्यधात्— 'कुरङ्गक ! किं मान्द्यं तातस्य' इति । स च चक्षुषा बाष्पजलबिन्दुभिः

---

नीलीरागः नीलीरसेन रञ्जनम् । नीली (അമരി) । चीरिकया कक्ष्यकया (കച്ച) । अभिमुखेत्यादि । पवनस्याभिमुखत्वम् उत्पातसूचकम् । घटमानं सम्भवत् । कार्यं कृत्यम् । 'कार्यं कृत्यं प्रयोजनम्' इति वैजयन्ती । कालमेघधूमपल्लवबीजानि वज्रज्वलनपादपानामिव दुर्वार्ताशोकदुष्कृतानां निमित्तभूतमित्यर्थः । दुष्कृतपादपस्य अनर्थवृक्षस्य । [1]अपनिमित्तं दुर्निमित्तमिति च पाठः ।

उपानिन्ये उपहृतवान् । आविग्नं नष्टशोभम् । मान्द्यं रोगः । 'गदो मान्द्यमपाटवम्' इति हलायुधः । स चेत्यादि । चक्षुषा क्षरद्भिः बाष्पजल-

---

*'उपनिन्ये' व्याख्यानुसारी. १. 'अनि'—क.

मुखेन चाक्षरैः क्षरद्भिः युगपदाचचक्षे— 'देव! दाहज्वरो महान्' इति। तच्चाकर्ण्य सहसैव पफालास्य हृदयम्। कृताचमनश्च जनयितुरायुष्कामोऽपरिमितमणिकनकरजतजातम् आत्मपरिबर्हमशेषं ब्राह्मणसादकरोत्। अभुक्तवानेव उच्चचाल। 'दापय वाजिनः पर्याणम्' इति पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाण युवानम्। अतित्वरया च धावमानः परिवर्धकोपनीतम् आरुह्य तुरङ्गमम् एकाक्येव प्रयातुं प्रावर्तत।

अथ अकाण्डप्रयाणसंज्ञाशङ्कक्षुभितं तु सम्भ्रमात् सज्जीभूतं मुखरखुररवभरितसकलभुवनतलविवरम् आगत्यागत्य सर्वाभ्यो दिग्भ्यो धावमानम् अश्वीयमढौकत। प्रस्थितस्यास्य च दक्षिणेतरं प्रयान्तो विनाशमुपस्थितं राजसिंहस्य हरिणाः प्रकटयाम्बभूवुः। अशिशिररश्मिबिम्बाभिमुखश्च हृदयमवदारयन्निव दावशुष्के दारुणि दारुणो रेफप्रायं ररास वायसः। कज्जलमय इव बहुदिवससमुपचितबहलमलपटलमलिनिततनुः अभिमुखम् आजगाम शिखिपिञ्छलाञ्छनो नग्नाटकः। दुर्निमित्तैरेभिः अनभिनन्द्यमानगमनश्च नितरामाशङ्कत हृदयेन। पितृस्नेहाहितम्रदिम्ना च मनसा तत्तदुत्प्रेक्षमाणः तुरङ्गमस्कन्धबद्धलक्षं चक्षुरविचलं दधानः समवासित-

---

बिन्दुभिः आचचक्षे। मुखेन च क्षरद्भिरक्षरैराचचक्षे। पफाल विशीर्णम्। कृताचमनः कृतोपस्पर्शनः। परिबर्हम् अमत्राद्युपकरणम्। 'अथोपकरणं सर्वं परिबर्हं परिच्छदः' इति हलायुधः। ब्राह्मणसादकरोद् ब्राह्मणदेयं कृतवान्। 'देये त्रा च' (पा० सू० ५. ४. ५५.) इति सातिप्रत्ययः। दापय बन्धय। शिरःकृपाणं राज्ञां सुप्तिसमयेषु शयनीयशिरोभागे रक्षार्थं विधीयमानः खड्गः शिरःकृपाण इत्युच्यते। धावमानः शीघ्रमागच्छन्। परिवर्धकः अश्वग्राहकः।

सज्जीभूतं सन्नद्धम्। अश्वीयम् अश्वसमूहः। 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (पा० सू० ४. २. ४८.) इति समूहार्थे छः। अढौकत संन्नतवत्। प्रस्थितस्य प्रयातुमुपक्रान्तस्य। दारुणि स्थाणौ। रेफप्रायं रेफाक्षरप्रायम्। नग्नाटकः क्षपणकः। अविचलं निश्चलम्। समवासितं समासम्।

हसितसङ्कथः तूष्णींभूतेन भूपाललोकेनानुगम्यमानो बहुयोजनसम्मितम् अध्वानं एकेनैवाह्ना समलङ्घयत् ।

उपलब्धनरेन्द्रमान्द्यवार्ताविषण्ण इव च नष्टतेजसि अधोमुखीभवति भानुमति, भण्डिप्रमुखेन प्रणयिना राजपुत्रमण्डलेन बहुशो विज्ञाप्यमानोऽपि नाहारमकरोत् । पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च वहन्नेव निन्ये निशाम् ।

अन्यस्मिन्नहनि मध्यन्दिने विगतजनशब्दम्, अस्तमिततूर्यनादम्, उपसंहृतसङ्गीतकम्, उत्सारितोत्सवम्, अप्रचरितचारणम्, अप्रसारितापणपण्यं, स्थानस्थानेषु पवनचलनकुटिलाभिः कोटिहोमधूमलेखाभिरुल्लसन्तीभिः यममहिषविषाणकोटिभिरिव उल्लिख्यमानं, कृतान्तपाशवागुराभिरिव आवेष्ट्यमानम्, उपरि कालकालमहिषालङ्कारकालायसकिङ्किणीभिर्दिवसं वायसमण्डलीभिः कटु क्वणन्तीभिरावेद्यमानमत्यासन्नाशुभं, क्वचित् प्रतिशायितस्निग्धबान्धवाराध्यमानाहिर्बुध्न्यं, क्वचिद् दीपिकादहनदह्यमानकुलपुत्रप्रसाद्यमानमातृमण्डलं, क्वचित्

---

सङ्कथा सम्भाषणम् ।

पुरःप्रवृत्तः पुरोगतः । ग्रामीणः ग्रामजातजनः । प्रकटितं प्रदर्शितम् । प्रगुणं ऋजु । वहन् गच्छन् ।

अप्रचरितचारणम् असञ्चरितगायकम् । अप्रसारितम् अविततम् । आपणः निषद्या (കട) । पण्यं क्रयविक्रययोग्यं वस्तु । कोटिहोमः कोट्या समिद्भिः क्रियमाणः शान्तिहोमः । उल्लसन्तीभिः उद्गच्छन्तीभिः । पाशवागुराः पाशकृताः वागुराः (കയറുവല) । मण्डलीभिः समूहैः । प्रतिशायितः अभिलषितार्थसिद्ध्यै देवतास्थानेषु आशायितः (വരം കിടത്തൽ) । अहिर्बुध्न्यम् ईश्वरम् । दीपिकादहनः अङ्गुल्यादिषु प्रज्वलितदीपिकाभिः । मातृमण्डलं—' ब्राह्मी माहेश्वरी चैन्द्री वाराही नारसिंह्यपि । कौमारी वैष्णवी चेति ता एताः सप्त मातरः॥' इति वैजयन्ती ।

मुण्डोपहारहरणोद्यतद्रमिडप्रार्थ्यमानामर्दकं, क्वचिद् अन्ध्रोद्ध्रियमाण-वध्रोपयाच्यमानचण्डिकम्, अन्यत्र शिरोविधृतदहनविलीयमानगलद्गुग्गुलु-विकलनवसेवकानुमीयमानमहाकालम्, अन्यत्र निशितनिस्त्रिंशनिकृत्तात्म-मांसहोमप्रवृत्ताप्तवर्गम्, अन्यत्र प्रकाशनरपतिकुमारकक्रियमाणमहा-मांसविक्रयप्रक्रमम्, उपहतमिव श्मशानभस्मभिः, अमङ्गलैरिव परिगृहीतं, यातुधानैरिव ध्वस्तं, कलिकालेनेव कवलितं, पापपटलेनेव आच्छादितम्, अधर्मविक्षेपैरिव लुण्ठितम्, अनित्यताविकारैरिव आक्रान्तं, नियति-बलविलसितैरिव आत्मीकृतं, शून्यमिव सुप्तमिव मूर्च्छितमिव छलित-मिव मुषितमिव विलक्षितमिव स्कन्धावारमाससाद।

प्रविशन्नेव विपणिवर्त्मनि कुतूहलाकुलबहुबालकपरिवृतम् ऊर्ध्व-यष्टिविष्टम्भवितते वामहस्तवर्तिनि भीषणमहिषाधिरूढप्रेतपतिसनाथे चित्रवति पटे परलोकव्यतिकरम् इतरकरकलितेन शरकाण्डकेन कथयन्तं यमपटिकं ददर्श। तेनैव गीयमानं श्लोकमशृणोत्।

---

मुण्डोपहारहरणं मस्तकाख्योपहारप्रदानम् (ഉക തലയിട്ടകെ)। द्रमिडः द्रमिडदेशजातः[1]। द्रमिडदेशजातानां साहससहत्वात्। आमर्दकः प्रेतनगर-रुधिरदेवता रुद्रः। अन्ध्रः अन्ध्रदेशजातः। उद्ध्रियमाणम्[2] उद्धृतमाणम् (ഉഴലെക്കാറക്ക)। वध्रा शरीरवरत्रा (വറം)। उपयाच्यमानः प्रार्थ्यमानः। विलीयमानं दीपिकाग्निदाहेन द्रवत्। विकलः क्लेशी। प्रकाशः प्रख्यातः। विक्षेपैः[3] सेनानिवेशैः (തെണ്ടവിടുക)। लुण्ठितं विलुप्तम्। आत्मीकृतं स्वीकृतम्। आत्मच्छब्दस्य आत्मीयेऽपि वृत्तिरस्ति। 'सान्द्रे रजस्यात्मपरावबोधः' इति रघुवंशे यथा। आत्मीयीकृतमिति केचित् पठन्ति। छलितं वञ्चितम्।

विपणिः पण्यवीथिका (കടത്തെരുവു°)। यष्टिविष्टम्भवितते पृष्ठतो दण्डापाश्रयणेन निश्चलविसारिते। शरकाण्डकेन वेणुदण्डेन। यमपटिकः

---

१. 'जातः। द्रमिडग्रहणं द्रमिडदेश', २. उद्ध्रियमाणं–உழல கொச்சை, ३. विक्षेपः–தெண்டுவீடு–क.

'मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान् ॥'

तेन च अधिकतरमवदीर्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ । अवतीर्णश्च अभ्यन्तरान्निष्क्रामन्तम् अप्रसन्नमुखरागम् उन्मुक्तमिवेन्द्रियैः सुषेणनामानं वैद्यकुमारमप्राक्षीत्— 'सुषेण ! किमस्ति विशेषस्तातस्य' इति । सोऽवदत्— 'नास्तीदानीं यदि भवेत् कुमारं दृष्ट्वा' इति । ततो मन्दमन्दं द्वारपालैः प्रणम्यमानश्च दीयमानसर्वस्वं, पूज्यमानकुलदेवतं, प्रारब्धामृतचरुक्रियं, क्रियमाणषडाहुतिहोमं, पृषदाज्यलवलिप्तमृदुलदूर्वापल्लवं, पठ्यमानमहामायूरं, प्रवर्त्यमानग्रहशान्तिकं, निर्वर्त्यमानरक्षोभूतबलिविधानं, प्रयतविप्रप्रस्तुतसंहितारूपजपं, जप्यमानरुद्रैकादशीयशब्दायमानशिवगृहम्, अतिशुचिशैवसम्पाद्यमानविरूपाक्षक्षीरकलशसहस्रस्नपनम्, अजिरोपविष्टैश्च अनासादितस्वामिदर्शनदूयमान-

---

चतुर्थोच्छ्वासे व्याख्यातः । मातेत्यादि । अयं श्लोको महाभारते पठितः । अनेन च निरूप्यमाणे कस्यचिदपि केनापि स्थिरेतरबन्धो[1] नास्ति । सर्वोऽप्यवश्यं मरणधर्मा । अत इष्टजनमरणान्न शोचितव्यमिति प्रतिपाद्यते । सहस्राणि शतानि इति उत्तरत्र पदार्थे प्रत्युपसर्जनीभूतानामपि मातापितृपुत्रदाराणां बुद्ध्या निष्कर्षात् कस्य ते इति सर्वनाम्ना परामर्शः । कस्य ते कस्य वा भवान् ते मात्रादयः कस्य सम्बन्धिनः । न कस्यचित् । भवान् वा कस्य सम्बन्धी । न कस्यचित् । कुतस्तव प्राकृतानां मात्रादीनाम् । अवतीर्णः तुरगादिति शेषः । मुखरागः मुखशोभा । किमस्ति विशेषः । किंशब्दः प्रश्ने । सर्वस्वं सर्वधनम् । अमृतचरुः आयुष्यचरुः । षडाहुतिहोमः 'मुञ्चामि त्वा' इत्यादिभिः 'स्विष्टकृत्'सहिताभिराभिः षड्भिः क्रियमाणो होमः । पृषदाज्यं दधिमिश्रं घृतम् । 'पृषदाज्यं सदध्याज्यम्' इति सिंहः । महामायूरं बौद्धमन्त्रविशेषः । भूताः देवविशेषाः । बलिः पूजा । प्रस्तुतः आरब्धः । संहितारूपजपः पदक्रमादिकं विहाय[2] स्वरूपमात्रजपः । रुद्रैकादशीयं रुद्रप्रश्नः । शब्दायमानं घोषयुक्तायमानम् । शैवः शैवागमवित् ।

---

१. 'रसम्बन्धो', २. 'विहाय संहितायाः स्वरू'-क.

मानसैः अभ्यन्तरनिष्पतितनिकटपरिजननिवेद्यमानवार्तैः वार्तीभूतस्नान-भोजनशयनैः उज्झितात्मसंस्कारमलिनवेषैः लिखितैरिव निश्चलैर्नरपतिभिः नीयमाननक्तन्दिवं, दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेनोपांशुव्याहृतैः केनचित् चिकित्सकदोषानुद्घोषयता, केनचिद् असाध्यव्याधिलक्षणपदानि पठता, केनचिद् दुःस्वप्नानावेदयता, केनचित् पिशाचवार्तां व्यावृण्वता, केनचित् कार्तान्तिकादेशान् प्रकाशयता, केनचिद् उपलिङ्गानि गायता, अन्येनानित्यतां भावयता, संसारं च अपवदता, कलिविलसितानि निन्दता, दैवं च उपालभमानेन, अन्येन धर्माय कुप्यता, अन्येन राजकुलदेवताश्च अधिक्षिपता, अपरेण क्लिष्टकुलपुत्रभाग्यानि विगर्हता, बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश।

अविरलबाष्पपयःपरिप्लुतलोचनेन च पितृपरिजनेन वीक्ष्यमाणो विविधौषधद्रव्यद्रवगन्धगर्भम् उत्क्वथतां क्वाथानां तैलानां सर्पिषां च पच्यमानानां गन्धमाजिघ्रन्नवाप तृतीयं कक्ष्यान्तरम्।

तत्र च अतिनिःशब्दे गृहावग्रहणीग्राहितबहुवेत्रिणि, त्रिगुणित-

---

निकटपरिजनः प्रत्यासन्नपरिजनः। वार्तीभूतं वार्तामात्रावशिष्टम्। त्यक्तमित्यर्थः। प्रघणेषु बहिर्द्वारप्रकोष्ठेषु। बद्धमण्डलेन बद्धमण्डलासनेन। उपांशुव्याहृतैः अप्रकाशभाषणैः। चिकित्सकः वैद्यः। असाध्यव्याधिलक्षणपदानि असाध्यव्याधिचिह्नप्रतिपादकानि वाक्यानि। पिशाचवार्तां पिशाचविषयवार्ताम्। कार्तान्तिकादेशान् ज्यौतिषिकादिष्टार्थान्। उपलिङ्गानि अरिष्टानि। 'उपलिङ्गम् अरिष्टं स्याद्' इति हलायुधः। गायता वदता। 'कै गै शब्दे' इति धातुः। अधिक्षिपता निन्दता। भाग्यानि अन्यजन्मोपात्तानि शुभाशुभकर्माणि। 'भाग्यं कर्म शुभाशुभम्' इत्यमरः।

द्रवः रसः। उत्क्वथतां पक्वीभवताम्। 'क्वथे निष्पाके' इति धातुः। क्वाथानां कषायाणाम् (കഷായം)।

गृहावग्रहणीग्राहितबहुवेत्रिणि गृहदेहलीस्थितबहुवेत्रिणि। 'गृहावग्रहणी

तिरस्करिणीतिरोहितसुवीथीपथे, पिहितपक्षद्वारके, परिहृतकवाटरटिते घटितगवाक्षरक्षितमरुति, अपचीयमानपरिचारके, चरणताडनरणत्सोपान-प्रकुपितप्रतीहारे, निभृतसंज्ञानिर्दिश्यमानसकलकर्मणि, नातिनिकटोपविष्ट-कञ्चुकिनि, कोणस्थिताह्वानचकिताचमनवाहिनि, चन्द्रशालिकालीनमूक-मौलकोके, महाधिविधुरबान्धवाङ्गनावर्गगृहीतप्रच्छन्नप्रग्रीवके, सञ्जवन-पुञ्जितोद्विग्नपरिजने, प्रविष्टकतिपयप्रणयिनि, गम्भीरज्वरारम्भभीतभिषजि, दुर्मनायमानमन्त्रिणि, मन्दायमानपुरोधसि, सीदत्सुहृदि, विद्राणविपश्चिति, सन्तप्ताप्तसामन्ते, विचित्तचामरग्राहिणि, दुःखक्षामशिरोरक्षिणि, क्षीयमाण-प्रसादवित्तमनोरथसम्पदि, स्वामिभक्तिपरित्यक्ताहारहीयमानबलविकल-वल्लभभूभृति, क्षितितलपतितसकलरजनीजागरूकराजपुत्रकुमारके, कुल-क्रमागतकुलपुत्रकनिवहोह्यमानशुचि शोकसङ्कुचितकञ्चुकिनि, निरानन्द-वन्दिनि, निःश्वसन्निराशासन्नवसेवके, विस्मृतताम्बूलधूसराधर-

---

देहली' इत्यमरः। तिरस्करिणी यवनिका (തിര)। सुवीथीपथं स्थूणापङ्क्तीनाम् अन्तरालप्रदेशः (ഇഴകാവാരം)। पिहितपक्षद्वारके कवाटादिपिहितपार्श्वद्वारे। परिहृतं वर्जितम्। रटितः शब्दः। घटितं कवाटबद्धम्। अपचीयमानः अपक्षीय-माणः। संज्ञा हस्तादिना कार्यसूचना। 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः। कञ्चुकिनि शरीररक्षाकवचिनि। कोणः[1] भित्तिसन्धिः। आचमनवाही आचमनपात्रवाही (കിണ്ടിക്കാരൻ)। चन्द्रशालिका शिरोगृहम् (മിലാ ന്താരം)। महाधिविधुरः महामनोदुःखविषण्णः। प्रच्छन्नम् अन्तर्द्वारम्। प्रग्रीवं प्रासादविशेषः। 'प्रच्छन्नं द्वारमान्तरम्। प्रग्रीवमश्वे कलशे ग्रीवाप्रासादयोरपि॥' इति वैजयन्ती। सञ्जवनं चतुश्शालम् (നാലുകെട്ട്)। 'चतुश्शालं सञ्जवनम्' इति वैजयन्ती। गम्भीरज्वरः अन्तर्गतो ज्वर इति वैद्याः। दुर्मनायमानः विषीदन्। मन्दायमानः शान्तिकर्मसु शिथिलः। विद्राणः तन्द्रीयुक्तः। विचित्तः निश्चेतनः। दुःखक्षामः दुःखेन क्षीणशरीरः। शिरोरक्षी (തലകാവൽ)। प्रसादवित्तः प्रसादैकधनः, प्रसादेन प्रसिद्ध इति वा; अतिवल्लभ इत्यर्थः। जागरूकः निद्राहीनः। शुचि शोके। सङ्कुचितः कृशीभूत इत्यर्थः। आसन्नः अन्तरङ्गः।

---

1. कोणः=മൂല-क.

वारयोषिति, विलक्षवैद्योपदिश्यमानपथ्याहारावहितपौरोगवे, अनुजीवि-पीयमानोच्चचषकधाराविनोद्यमानास्यशोषरुजि, राजाभिलाषभोज्यमान-बहुभुजि, भेषजसामग्रीसम्पादनव्यग्रगृह्यव्यवहारिणि, मुहुर्मुहुराहूयमान-तोयकर्मान्तिकानुमितघोरातुरतृषि, तुषारपरिकरितकर्करीशिशिरीक्रिय-माणोदश्विति, श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतशलाके, अनाश्यान-पङ्कलिप्यमाननवभाण्डगतगण्डूषमस्तुनि, तिम्यत्कोमलकमलिनीपत्रप्रावृत-मृदुमृणालके सनालनीलोत्पलपूलीसनाथसलिलपानभाजनभुवि, धारा-निपातानिर्वाप्यमाणक्वथिताम्भसि, पटुपाटलशर्करामोदमुचि, मञ्चिकाश्रित-सिकतिलकर्करीविश्रान्तातुरचक्षुषि, सरसशैवलवलयितगलद्गोलकयन्त्रके,

---

पौरोगवः पाकस्थानाधिपतिः (മടമ്പള്ളി) । 'रसवत्यां तु पाकस्थानमहानसे । पौरोगवस्तदध्यक्षः ' इत्यमरः । चषकः पानपात्रम् (വട്ടിൽ)। धाराविनोद्यमानं धारादर्शनेन विनोद्यमानम् । शोषरुजि पिपासारोगे । बहुभुजि बहुभक्षिणि । व्यवहारी कर्मकरः । [1]तोयकर्मान्तिकः पानीयकर्माधिकृतः (തണ്ണീർമുതെക്കൂപ്പാൾ) । 'कर्मान्तं कर्म ' इति कौटल्यः । कर्मान्तमस्येति कर्मान्तिकः । तुषारपरिकरितः तुषारशब्देन शीतलवालुकादिकमुच्यते । तेन सम्बद्धम् । (कर्करी करकः) । 'कर्करी करकः प्रोक्तः' इति हलायुधः । उदश्वित् अर्धाम्बु तक्रम् । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ' इत्यमरः । शलाका चक्षूरञ्जनशलाका । गण्डूषमस्तु गण्डूषपूरणार्थं मस्तु । मस्तु (തയിർ വെള്ളം) । ' मण्डं दधिभवं मस्तु ' इत्यमरः । तिम्यद् आर्द्रीभवत् । निर्वाप्यमाणं शान्तोष्णीक्रियमाणम् । क्वथितं वृत्तपाकम् (കായ്‌ച്ചൂട്ടത്) । पाटलशर्करा— 'पानीयस्याधि-वासार्थं पाटलीकुसुमादिभिः । वासिता या मृद्गुलिका सा स्यात् पाटलशर्करा ॥' इति । मञ्चिका करकादीनां निधानमञ्चः (പലക) । सिकतिलकर्करी सिकतायुक्तप्रदेशस्थापितः करकः । वलयितं वेष्टितम् । गलद्गोलकयन्त्रके गलद्भिः सूक्ष्मरन्ध्रैः जलबिन्दुस्यन्दिभिः गोलकैः जलभाण्डैः युक्तं यन्त्रं यत्र । गोलकः मणिकः । 'गोलको मणिके पिण्डे' इति वैजयन्ती

---

१. तोयकर्मान्तिकः [illegible]

गल्वर्कशालाजिरोल्लाजितलाजसक्तुनि, मासरपारीपरिगृहीतकर्करशर्करे, शिशिरौषधरसचूर्णविकीर्णस्फटिकशुक्तिशङ्खसञ्चये, सञ्चितप्रचुरप्राचीनामलकमातुलुङ्गदाडिमद्राक्षादिफले, प्रतिश्राहितविप्रकीर्यमाणशान्त्युदकविप्रुषि, प्रेष्याजनपिष्यमाणललाटलेपोपदिग्धदृषदि धवलगृहे स्थितं, परलोकविजयाय नीराज्यमानमिव ज्वरज्वलनेन अनवरतपरिवर्तनैः तरङ्गिणि शयनीये शेषमिव विषोष्मणा क्षीरोदन्वति विचेष्टमानम्, मुक्ताफलवालुकाधूलिधवलितं जलधिमिव क्षयकाले शुष्यन्तं, कालेन कैलासमिव दशाननेनोद्ध्रियमाणम्, अविरतचन्दनचर्चापातिनां

---

गल्वर्कः चषकः (വട്ടിൽ) । 'गल्वर्कश्चानुतर्षश्च चषकः सरकः स्मृतः' इति हलायुधः । शालाजिरः वर्धमानः (അകൽ) । उल्लाजितं प्रकाशितम् । 'लज लजि प्रकाशने' इति धातुः चौरादिकः । लाजसक्तु लाजमयसक्तु (പൊരിപ്പൊടി) । मासरपारीपरिगृहीतं, मासरः (പൊടിക്കഞ്ഞി) । 'मासराचामनिस्रावा मण्डे भक्तसमुद्भवे' इत्यमरः । पारी पात्रम् । 'घटी पारी' इति वैजयन्ती । मासरयुक्तपात्रनिक्षिप्तमित्यर्थः । मसार इति केचित् पठन्ति । मसारस्तु पात्रविशेष इति केचित् । कर्करशर्करा शर्कराभेदः । प्राचीनामलकं मधुरामलकविशेषः (പൊന്നെല്ലി) । मातुलुङ्गं बीजपूरः (പരൽ മാതളം) । दाडिमं करकः (താളിമാതളം) । द्राक्षा मृद्वीका (മുന്തിരിങ്ങ) । प्रेष्या दासी । पिष्यमाणं मृद्यमानम् । ललाटलेपः ललाटेषु लिप्यत इति ललाटलेपः । स च समुद्रफेनकटुरोहिण्यादिः । उपदिग्धं सलेपम् । दृषत् पेषणशिला (അമ്മി) । धवलगृहे सुधानुलिप्तगृहे । परलोकः स्वर्गलोकः, शत्रुसमूह इति च । नीराज्यमानं क्रियमाणनीराजनम् । परिवर्तनैः परिलोठनैः । उभयत्र समानम् । तरङ्गिणि चलनवति, ऊर्मिमति च । मुक्ताफलवालुकाधूलिधवलितं तापशान्त्यर्थं शरीरे लिप्ताभिः मुक्ताफलवालुकाधूलिभिः धवलितम् । अन्यत्र मुक्ताफलैः वालुकाधूलिभिश्च धवलितम् । क्षयः मरणं, कल्पान्तश्च । कालेन मृत्युना, कृष्णवर्णेन च । उद्ध्रियमाणं ह्रियमाणम्, उत्क्षिप्यमाणं च । चर्चापातिनां आलेपदायिनाम् । चर्चा (ഉടക്ക) ।

परिचारकाणाम् अत्युष्णावयवसंस्पर्शभस्मीभूतोदरैरिव धवलैः करैः स्पृश्यमानं, लोकान्तरप्रस्थितं, स्थास्नुना यशसेव चन्दनानुलेपनच्छलेन आपृच्छ्यमानम्, अविच्छिन्नदीयमानकमलकुमुदेन्दीवरदलं कालकटाक्षपतनशबलमिव शरीरमुद्वहन्तं, निबिडदुकूलपट्टपीडितकेशान्तकथ्यमानकष्टवेदनानुबन्धमूर्धानं धारयन्तं, दुर्धरवेदनोन्नमन्नीलसिराजालकरालेन कालाङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससङ्ख्येनेव ललाटफलकेन भयमुपजनयन्तम्, आसन्नयमदर्शनोद्वेगादिव च किञ्चिदन्तःप्रविष्टतारकं चक्षुर्दधानं, शुष्यद्दशनपङ्क्तिप्रसृतधूसरदीधितितरङ्गिणीं मृगतृष्णामिव उष्णनिःश्वासपरम्परामुद्वहन्तम्, अत्युष्णनिःश्वासदग्धयेव श्यामायमानया रसनया निवेद्यमानदारुणसन्निपातारम्भम्, उरःस्थलस्थापितमणिमौक्तिकहारचन्द्रकान्तं कृतान्तदर्शनयोग्यमिवात्मानं कुर्वाणम् अङ्गभङ्गवलनोत्क्षिप्तभुजयुगलपर्यस्तनखमयूखैः धारागृहमिव तापशान्तये रचयन्तं, नेदिष्ठशशिमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्रतिबिम्बकैरपि सन्तापातिशयमिव कथयन्तं, स्पृशन्तीं प्रणयिनीमिव विश्रमभूमिं मूर्च्छामपि बहुमन्यमानम्, अन्तकाह्वानाक्षरैरिव सभयभिषग्दृष्टैः, कष्टैरिष्टैरिव

---

प्रस्थितं प्रस्थातुमुपक्रान्तम्। पीडितं दृढबद्धमित्यर्थः। केशान्तं केशमूलदेशः। वेदनानुबन्धः तोदानुवृत्तिः। दुर्धरं दुर्वारम्, दुस्सहमित्यर्थः। उन्नमद् उद्गच्छत्। करालेन दन्तुरेण। अन्तःप्रविष्टतारकं चक्षुर्दधानमिति पाठः। दीधितितरङ्गिणीं दीधित्याख्यतरङ्गयुक्ताम्। मृगतृष्णां मरीचिकाम् (കാനൽ)। रसनया तालुना। सन्निपातः ज्वरपरिणामः। कृतान्तः यमः। अङ्गभङ्गवलनम् अङ्गभङ्गेन वेष्टनम्। धारागृहं यन्त्रमुक्तजलधारोपेतगृहम्। नेदिष्ठम् अन्तिकतमम्। विश्रमभूमिं विश्रमस्थानभूताम्। मूर्च्छां बहुमन्यमानम्, एतत्तु तदागतावितरेषां क्लेशानाम् अज्ञायमानत्वात्। अरिष्टैः मरणचिह्नैः। 'अरिष्टो वायसे निम्बे गोरसे निरुपद्रवे। क्ली वैवर्ण्ये मृत्युचिह्ने मद्ये ताम्रे शुभेऽशुभे॥' इति वैजयन्ती। अरिष्टानि च— 'रक्ताक्षं च प्रलापश्च महान् श्वासो भ्रमस्तथा। प्रकटं हृदि

आविष्टम्, महाप्रस्थानकाले स्वसन्तापमासहृदयेषु सञ्चारयन्तम्, अरतिपरिगृहीतमीर्ष्ययेव छायया मुच्यमानम्, उद्योगमिव उपद्रवाणां, सर्वास्त्रमोक्षमिव क्षामतायाः, हस्ते कृतं विहस्ततया, विषयीकृतं वैषम्येण, भक्षीकृतं क्षयेण, गोचरीकृतं ग्लान्या, दृष्टं दुःखासिकया, स्वीकृतम् असाध्यत्वेन, विधेयीकृतं व्याधिभिः, क्रोडीकृतं कालेन, लक्षीकृतं दक्षिणाशया, पीतमिव पीडाभिः, जग्धमिव जागरेण, निगीर्णमिव वैवर्ण्येन, ग्रासीकृतमिव गात्रभङ्गेन, ध्रियमाणमिव विपद्भिः, खण्डयमानमिव वेदनाभिः, लुण्ट्यमानमिव दुःखैः, आदित्सितं दैवेन, निरूपितं नियत्या, घ्रातम् अनित्यत्वेन, अभिभूयमानम् अभावेन, परिकल्पितं परासुतया, दत्तावकाशं क्लेशस्य, समीपे वैमनस्यस्य, अन्तिकेऽन्त्योच्छ्वासस्य, मुखे महाप्रवासस्य, द्वारि दीर्घनिद्रायाः, जिह्वाग्रे जीवितेशस्य वर्तमानं, विरलं वाचि, चलितं चेतसि, विह्वलं वपुषि, क्षीणम् आयुषि, प्रचुरं प्रलापे, सन्ततं श्वसिते, जितं जृम्भिकाभिः, पराधीनम् आधिभिः, अनुबद्धम् अनुबन्धिकाभिः, पार्श्वोपविष्टया अनवरतरोदनाताम्रो-

---

शूलं च मुमूर्षूणां हि जायते॥' इत्युक्तान्येतानि। महाप्रस्थानं मरणम्, अनावृत्तिगमनम् इति च। सन्तापं तापं, विषादं च। अरतिः व्यसनं, काचित् स्त्री इति च। छायया कान्त्या, कयाचित् स्त्रिया इति च। सर्वास्त्रमोक्षमिव क्षामतायाः सर्वास्त्रमोक्षविषयमित्यर्थः। अतिशयोक्तिप्रकारोऽयम्। 'प्रत्यादेशो धनुष्मताम्' इतिवत्। हस्ते कृतं स्वहस्ते गृहीतमित्यर्थः। विहस्ततया व्याकुलतया। विषयीकृतम् आश्रयीकृतम्। वैषम्येण प्रसादविकारयोः अव्यवस्थया। व्याधिभिः विविधाभिः। क्रोडीकृतम् आलिङ्गितम्। 'आलिङ्गनमपि क्रोडीकरणं चाङ्कपाल्यपि' इति वैजयन्ती। निगीर्णं कबलितम्। ध्रियमाणम् अवध्वस्यमानम्। 'धृङ् अवध्वंसने' इति धातुः। विपद्भिः मत्यवटं सम्भवद्भिः भङ्गैः। निरूपितम् अवसितायुष्ट्वेन परिगणितम्। महाप्रवासस्य मरणस्य। दीर्घनिद्राया मरणस्य प्रत्याशङ्कित इवाभवद् इत्यर्थः। प्रलापे अनिबद्धभाषणे। जृम्भिकाभिः जृम्भणैः (৯০)। अनुबन्धिकाभिः हिक्काभिः।

च्छूनाननया गृहीतचामरिकया निःश्वासैरेव वीजयन्त्या विविधौषध-धूलिधूसरशरीरया मुहुर्मुहुः 'आर्यपुत्र! स्वपिषि' इति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत्।

दृष्ट्वा च प्रथमदुःखाभिपातमथ्यमानमतिः आशङ्कित इव भागधेयेभ्यः समभवत्। अन्तकपुरवर्तिनमेव च पितरममन्यत। निराकृत इव चान्तःकरणेन क्षणमासीत्। अवधूतश्च धैर्येण, क्षेत्रीकृतः क्षोभेण, रिक्तीकृतो रत्या, विषयीकृतो विषादेन, पावकमयामिव हृदयमुद्वहन्, विषमविषदूषितानीव मुह्यन्ति इन्द्रियाणि बिभ्राणः, तमसा रसातलम् अविशेषयन्, शून्यत्वेन आकाशमप्यतिशयानो नाविन्दत कर्तव्यम्। पस्पर्श च हृदयेन भियं भृशम् उत्तमाङ्गेन च गाम्।

अवनिपतिस्तु दूरादेव दृष्ट्वा दयितं तनयं तदवस्थोऽपि निर्भर-स्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ 'एह्येहि' इत्याह्वयन् शरीरार्धेन शयनीयादुदगात्। ससम्भ्रमोपनतं चैनं पिता विनयावनम्रम् उन्नमय्य बलादुरसि निवेश्य, विशन्निव प्रेम्णा निशाकरमण्डलमध्ये, मज्जन्निव महामृतमये सरसि, स्नानिव हरिचन्दनप्रस्रवणे, लिप्यमान

---

उच्छूनम् उच्छ्वसितम् (വീർക്കുക)।

आशङ्कित इवाभवद् भागधेयेभ्यः सम्भवद्भाग्यनिमित्तमाशङ्कायुक्तोऽभवत्। भाग्यं किन्नु फलिष्यतीत्याशङ्कित इवाभवदित्यर्थः। रत्या सुखेन। मुह्यन्ति मोहयुक्तानि। तमसा[2] शोकेन, 'तमो राहुस्तमोऽघं शुग्' इति वैजयन्ती। अन्धकारेण च। अविशेषयन्[3] तुल्यीकुर्वन्नित्यर्थः। रसातलमपि विशेषयन्निति च पाठः। विशेषश्च रसातलादप्यात्मनः तमोतिरेकात्। नाविन्दत कर्तव्यं, कर्तव्यं न लब्धवान्। कर्तव्यज्ञानशून्योऽभूदित्यर्थः। अविन्दतेति 'विद्लृ लाभ' इति धातोर्लङि रूपम्। न तु 'विद ज्ञाने' इत्यस्य धातोः। तस्याविन्दतेति रूपानुपलब्धेः। अत्र दैवं च— 'सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे। विन्दते विन्दतीत्येवं लाभे वेदयते णिचि॥' इति।

आवर्जित आकृष्टः। वशीकृत इति यावत्। स्नान् स्नानं कुर्वन्।

---

१. उच्छूनं=വീർക്കുക-क, २. सामोहेन-ख.ग, ३. यन् निर्विशेषं नयन् तुल्यं कुर्वन्नित्यर्थः-क.

इव तुषाराद्रिद्रवेण पीडयन्नङ्गैरङ्गानि, कपोलेन कपोलमवघट्टयन्, निमीलयन् पक्ष्माग्रग्रथिताजस्रास्रस्राविणी विलोचने, विस्मृतज्वरसञ्ज्वरः सुचिरम् आलिलिङ्ग। कथंकथमपि चिराद्विमुक्तमुपसृत्य पुनःपुनः कृतनमस्कारं प्रणतजननीकम् उपागतम् आसीनं च शयनान्तिके पिबन्निव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत्। आममर्श च पुनःपुनः वेपथुमता पाणितलेन। क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीत्—'वत्स! कृशोऽसि' इति। भण्डिस्तु अकथयत्—'देव! तृतीयमहः कृताहारस्यास्याद्य' इति।

तच्छ्रुत्वा राजा बाष्पवेगदुर्गृह्यमाणाक्षरं कथंकथमप्यायततरं निःश्वस्योवाच— 'वत्स! जानामि त्वां पितृप्रियम्। अतिमृदु हृदयम् ईदृशेषु विधुरयति च धीमतोऽपि धियम्। अतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी। अतो नार्हसि अतिमात्रमात्मानं शुचे दातुम्। उद्दामदाहज्वरदग्धोऽपि दह्ये खलु अधिकतरम् आयुष्मदाधिना। निशितनिस्त्रिंश इव तक्ष्णोति मां त्वदीयस्तनिमा। सुखं च राज्यं च वंशश्च परलोकश्च प्राणाश्च त्वयि मे स्थिताः। यथा मम तथा सर्वासां प्रजानाम्। त्वद्विधानां पीडाः पीडयन्ति सकलमेव भुवनतलम्। नह्यपुण्यभाजां वंशमलङ्कुर्वन्ति भद्रा भवादृशाः। फलमसि नैकजन्मान्तरसहस्रोपार्जितस्य अकलुषस्य कर्मणः। करतलगतमिव कथयन्ति चतुर्णामपि अर्णवानामाधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि। निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधस्तु पाययते मामौषधम्। अपि च,

---

'ष्णा शौच' इति धातोर्लुग्विकरणेः। सञ्ज्वरः सन्तापः।

दुर्गृह्यमाणं कृच्छ्राद् गृह्यमाणम्। ईदृशेषु दुःखेष्विति शेषः। दुर्धरः दुर्वारः। उद्दामः उद्रिक्तः। दह्ये, कर्मणि लटि उत्तमपुरुषैकवचनम्। तक्ष्णोति तनूकरोति। 'तक्षू तनूकरणे' इति धातुर्भौवादिकः। 'तनूकरणे तक्षः' (पा० सू० ३. १. ७६.) इति (श्नुः)। तनिमा कार्श्यम्। सुखमित्यादि। सुखादयः त्वयि स्थिताः त्वदायत्ता इत्यर्थः। परलोकस्य त्वदायत्तत्वं पुन्नाम्नो नरकात् त्रायकत्वात्। जीवितव्ये जीवने।

सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थम् उत्पत्स्यमानानां भवादृशानां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धुमन्तो राजानो, न ज्ञातिभिः। तदुत्तिष्ठ। कुरुष्व पुरेव सर्वाः क्रियाः। कृताहारे त्वयि अहमपि सुखम् उपभोक्ष्ये पथ्यम्' इति। एवमभिहितस्यास्य दिधक्षन्निव हृदयमतितरां शोकानलः सन्दुधुक्षे। क्षणमात्रं च स्थित्वा पित्रा पुनःपुनः आहारार्थमादिश्यमानो धवलगृहादवततार। चकार च चेतसि— 'अकाण्डे खल्वयं समुपस्थितो महाप्रळयः। व्यभ्रो वज्रपातः। सामान्योऽपि तावच्छोकः सोच्छ्वासं मरणं, अनुपदिष्टौषधो महाव्याधिः, अभस्मीकरणोऽग्निप्रवेशः, अनुपरतस्यैव नरकवासः, निर्ज्योतिः अङ्गारवर्षः, अशकलीकरणं क्रकचपाटनम्, अव्रणो वज्रसूचिभेदः, किमुत विशेषाश्रितः किमत्र करवाणि' इति।

राजपुरुषाधिष्ठितश्च गत्वा स्वधाम धूममयानिव कृताश्रुपातान्, अग्निमयानिव जनितहृदयदाहान्, विषमयानिव दत्तमूर्च्छावेगान्, महापातकमयानिव उत्पादितघृणान्, क्षारमयानिव आहितवेदनान् कतिचित् कवलानगृह्णात्। आचामंश्च चामरग्राहिणमादिदेश— 'विज्ञाय आगच्छ कथमास्ते तातः' इति। गत्वा च पुनर्निवृत्य 'देव! तथैव' इति कथिते तेन अगृहीतताम्बूल एव गत्वा उत्ताम्यता मनसा अस्ताभिलाषिणि सवितरि सर्वानाहूयोपह्वरे वैद्यान् 'किमस्ति अस्मिन्नेवंविधे व्याधौ विधेयमधुना' इति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन्— 'देव! धैर्यमवलम्बस्व। कतिपयैरेव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं

---

पथ्यम् औषधम्। दिधक्षन् दग्धुमिच्छन्। सन्दुधुक्षे सन्दीप्तः। व्यभ्रे अभ्राभावे। अनुपरतस्य अमरणप्राप्तस्य। वज्रसूचिः वज्ररत्नानां भेदसूचिः। विशेषाश्रितः आप्तबन्धूनाश्रित्य प्रवृत्तः।

घृणा जुगुप्सा। क्षारं क्षतेषु दोषक्षरणार्थं दत्तमौषधम्। तथैवास्ते इति शेषः। उपह्वरे रहसि। देवेत्यादि। अत्र परमार्थतः स्वबुद्ध्या यथावदेव विज्ञापयतामपि तेषां वदनाद् वस्तुनोऽतथाभासितयान्यस्याप्यर्थस्य सूचकं

---

१. 'दत्त'-क

श्रोष्यसि पितरम्' इति।

तेषां च भिषजां मध्ये पौनर्वसवो युवा अष्टादशवर्षदेशीयः तस्मिन्नेव राजकुले कुलक्रमागतः, गतः पारमष्टाङ्गस्यायुर्वेदस्य, भूभुजा स्वसुतनिर्विशेषं लालितः, प्रकृत्यैव अतिपटीयस्या प्रज्ञया यथावद्विज्ञाता व्याधिस्वरूपाणां, रसायननामा सास्रः तूष्णीमधोमुखोऽभूत्। पृष्टश्च राजसूनुना— 'सखे रसायन! कथय तथ्यं यदसाध्यमिव पश्यसि' इति। असावब्रवीद्— देव! श्वः प्रभाते यथावस्थितमावेदयितास्मि' इति।

अत्रैव भवनकमलिनीपालः कोकमाश्वासयन् अपरवक्त्रमुच्चैरगायत्—

'विहग कुरु दृढं मनः स्वयं त्यज शुचमास्स्व विवेकवर्त्मनि।
सह सकलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः॥'

तच्चाकर्ण्य वाङ्निमित्तज्ञः पितरि जीविताशां सुतरां शिथिलीचकार। गतेषु च भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह। तत्र च— 'दाहो महान् आहर हारान् हरिणिके!, मणिदर्पणं देहि देहे देवि!, हिमलवैर्लिम्प ललाटं लीलावति!, घनसारधूलिं निधेहि धवलाक्षि! वक्षसि, निक्षिप चक्षुषि चन्द्रकान्तं कान्तिमति!, कपोले कलय

---

वचनमवशं निर्गतमित्यनुसन्धेयम्। स्वां प्रकृतिं स्वं स्वभावं व्यधिकारात्(?) पूर्वां प्रकृतिम् इत्यर्थः। अन्यत्र प्रकृतिशब्देन पृथिव्यादिकमुपादानकारणमुच्यते। स्वस्थं व्याधिनिर्मुक्ततया सुखितं, स्वर्गस्थमिति च।

पौनर्वसवः पुनर्वसुगोत्रजः। अष्टाङ्गस्य— 'कायबालग्रहोर्ध्वाङ्गशल्य-दंष्ट्राजरावृषान्। अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता॥' इति वाहटः। आयुर्वेदस्य वैद्यशास्त्रस्य। विज्ञाता वेत्ता।

कोकं चक्रवाकम्। विहगेत्यादि। अनेनापरवक्त्रेण राजा यशोवत्या सह म्रियते। अतः शोकं विहाय विवेकमवलम्बस्वेति हर्षस्योपश्रुतिरुक्ता। सुमेरुशिरः महामेरुशिरः, स्वर्गं च। विरोचनः सूर्यः। घनसारः कर्पूरः। कलय सम्बन्धय।

---

१. 'व्यधिकरणात्'-क.

कमलकुमुदकुवलयं कलावति!, चन्दनचर्चाम् आरचय चारुमति!, पातय पटमारुतं मधुकरि!, मन्दय दाहमरविन्दैरिन्दुमति!, जनय जलार्द्रया मुदं मदिरावति!, समुपनय मृणालानि मालावति!, तरलय तालवृन्तम् आवन्तिके!, मूर्धानं बाधमानं बधान बन्धुमति!, कन्धरां धारय धारिणि!, उरसि सशीकरं करं कुरु कुरङ्गाक्षि!, संवाहय बाहुं वलाहिके!, पीडय पादौ पद्मावति!, गृहाण गाढमङ्गम् अनङ्गसेने!, का वेला विलासवति! नैति निद्रा कथां कथय कुमुद्वति!' इत्येवं-प्रायान् पितुरनवरताम् आलापानाकर्णयन् दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशामनैषीत्।

उषसि चावतीर्य राजद्वारोपसर्पिणा परिवर्धकेनोपस्थापितेऽपि तुरङ्गमे चरणाभ्यामेव स्वमन्दिरं जगाम। तत्र च त्वरमाणो भ्रातु-रानयनार्थम् उपर्युपरि क्षिप्रपातिनो दीर्घाध्वगान् प्रजविनश्चोष्ट्रपालान् प्राहिणोत्। प्रक्षालितवदनश्च परिजनोपनीतमपि प्रतिकर्म नाग्रहीत्। अग्रस्थितानां च राजपुत्रयूनां विमनसां 'रसायनो रसायन' इति जल्पितमव्यक्तमश्रौषीत्। अपृच्छच्च— 'भद्राः! किं रसायनेन' इति। पृष्टाश्च ते सर्वे सममेव तूष्णीं बभूवुः। भूयो भूयश्च अनुबध्यमाना दुःखेन कथंकथमप्याचचक्षिरे 'देव! पावकं प्रविष्ट' इति। तच्छ्रुत्वा प्लुष्ट इवान्तस्तापेन सद्यो विवर्णतामगात्। उत्पाट्यमानमिव च न शशाक सशोकं धारयितुं हृदयम्। आसीच्चास्य चेतसि— 'कामं स्वयं न

---

आरचय कुरु। मन्दय मन्दं कुरु। जलार्द्रा वीजनसाधनं, जलसेचनार्द्रं वस्त्रखण्डं (ഈറൻപിഴിയൽ)। तरलय चालय। संवाहय मर्दय। वेला कालः।

क्षिप्रपातिनः शीघ्रगामिनः। प्रजविनः जवाधिकान्। प्रतिकर्म प्रसाधनम्। विमनसां विषण्णानाम्। अनुबध्यमानाः निबध्यमानाः। विवर्णतां मूढताम्। 'मूढो मन्दो विवर्णश्च' इति हलायुधः। निश्शोभतामिति च। स्वयं न

भवति, न तु श्रावयति अप्रियवचनम् अरतिकरम् इतर इवाभिजातो जनः कृच्छ्रेऽपि । यथानेनानुष्ठितम् उज्ज्वलीकृतमधिकतरं ज्वलनप्रवेशेन कल्याणप्रकृति कार्तस्वरमिव कौलपुत्रकमस्य' इति । पुनश्चाप्यचिन्तयत्—'समुचितमेवाथवा स्नेहस्येदम् । किमस्य तातो न तातः । किं वा अम्बा न जननी । वयं वा न भ्रातरः । अन्यस्मिन्नपि तावत् स्वामिनि दुर्लभीभवति भवन्त्यसवो ध्रियमाणा ह्रीहेतवो लोके । किमुत अमृतमये जीविनां निर्व्याजबान्धवेऽवन्ध्यप्रसादे सुगृहीतनाम्नि ताते । मां प्रति असाम्प्रतमाचरितम् आत्मानं दहता अनेन । किं वास्याकल्पमवस्थितस्य स्थेयसो यशोमयस्य दह्यते देहस्य । पतितः स केवलं दहने, दग्धास्तु वयम् । धन्यः खलु असावग्रणीः पुण्यभाजाम् । अपुण्यं तु इदमेव राजकुलं, कुलपुत्रेण यत् तादृशा वियुक्तम् । अपि च, ममापि खलु एतेषां प्राणानां कः कार्यातिभारः कृत्यशेषो वा, का वा व्यापृतता, नाद्यापि येन निष्ठुराः प्रष्ठाः प्रतिष्ठन्ते । को वान्तरायो हृदयस्य । येन न सहस्रधा दलति' इति । दुःखार्तश्च न जगामैव राजसद्म । समुत्ससर्ज च सर्वकार्याणि । शयनीये निपत्योत्तरीयवाससा सोत्तमाङ्गम् आत्मानमवकुण्ठ्यातिष्ठत् ।

इत्थंभूते च देवे हर्षे राजनि च तदवस्थे सर्वस्यैव लोकस्य कपोलेषु

---

भवति स्वयं विनश्यति । इतरः प्राकृतजनः । उज्ज्वलीकृतं शुद्धीकृतम् । उभयत्र समानम् । कल्याणप्रकृति शोभनप्रकृति । उभयत्र समानम् । कौलपुत्रकं कुलपुत्रत्वम् । 'द्वन्द्वमनोज्ञादिभ्यश्च' (पा० सू० ५. १. १३३.) इति मनोज्ञादिमध्यपाठाद् वुञ् । अथवा तथापि । किमस्य तातो न तातः तातोऽस्य किं न तातः । तात एवेत्यर्थः । दुर्लभीभवति, म्रियमाण इत्युक्तेः अमङ्गलत्वादेवं प्रयुक्तम् । किं वेत्यादि । अस्य यशोमयस्य देहस्य किं वा दह्यते । न किञ्चिद् दह्यत इति भावः । यशोमयो देहः स्थित एवेति यावत् । व्यापृतता व्यापारवत्ता । प्रष्ठा अग्रगामिनः ।

कीलिता इव कराः, लोचनेषु लेप्यमय्य इवाश्रुस्रुतयः, नासाग्रेषु ग्रथिता इव दृष्टयः, कर्णेषूत्कीर्णा इव रुदितध्वनयः, जिह्वासु सहजातानीव हाकष्टानि, लपनेषु पल्लवितानीव निःश्वासितानि, अधरेषु लिखितानीव परिदेवनपदानि, हृदयेषु निधानीकृतानीव दुःखान्यभवन्। उष्णाश्रुदाहभीतेव नाभजत नेत्रोदराणि निद्रा। निःश्वासवातविधुता इव व्यलीयन्त हासाः। निरवशेषदग्धेव सन्तापेन न प्रावर्तत वाणी। कथास्वपि नाश्रूयन्त परिहासाः। कापागमन्निति नाज्ञायन्त गीतगोष्ठ्यः। जन्मान्तरातीतानीव नास्मर्यन्त लास्यानि। स्वप्नेऽपि नागृह्यन्त प्रसाधनानि। वार्तापि नोपालभ्यत उपभोगानाम्। नामापि नाकीर्त्यत आहारस्य। खपुष्पप्रतिमान्यासन् आपानमण्डलानि। लोकान्तरमिवानीयन्त वन्दिवाचः। युगान्तर इवापावर्तन्त निर्वृतयः। पुनरिवादह्यत शोकाग्निना मकरकेतुः। दिवापि नामुच्यन्त शयनानि। शनैःशनैश्च महापुरुषविनिपातपिशुनाः समं समुदभवन् भुवने भूयांसो भूपतेरभावाय भयमुद्भावयन्तो भूतानां महोत्पाताः। तथा हि— डोलायमानसकलकुलाचलचक्रवाला पत्या सार्धं गन्तुकामेव प्रथममचलद् धरित्री। धन्वन्तरेरिव अस्मिन्नन्तरे स्मरन्तः परस्परास्फालनवाचालवीचयो विजिघूर्णुरर्णवाः।

---

कीलिताः बद्धाः। लेप्यमय्यः मृत्प्रकृतिमय्यः। लपनेषु मुखेषु। परिदेवनपदानि विलापवाक्यानि। निधानीकृतानीति निहितानीत्यर्थः। निधीयत इति निधानम्। व्यलीयन्त नष्टाः। परिहासाः नर्मालापाः। लास्यानि नृत्तानि। आपानं पानगोष्ठी। भूतानां प्राणिनाम्। चक्रवालं समूहः। अचलत् कम्पितवती, गन्तुम् उद्यतेति च। धन्वन्तरेरित्यादि। अमृतमथनसमये समुद्रादुत्थितो वैद्यशास्त्रप्रणेता मुनिः धन्वन्तरिः। धन्वन्तरिरेवास्यैवंविधस्य महाज्वरस्य परिहारं जानाति। स इदानीमागत्य इमम् अस्मदधिपतिम् अपि नाम चिकित्सेदिति तस्य स्मरन्त इत्यर्थः। आस्फालनम् आघट्टनम्। जुघूर्णुः बभ्रमुः।

---

1. ०स्य चिकित्सां'–क०

भूभृदभावभीतानां विततशिखाकलापविकटकुटिलाः केशपाशा इव ऊर्ध्वीबभूवुर्धूमकेतवः ककुभाम् । धूमकेतुकरालितदिङ्मुखं दिक्पालारब्धायुष्कामहोमधूमश्याममिवाभवद् भुवनम् । अष्टभासि तप्तकालायसकुम्भबभ्रुणि भानुमण्डले भयङ्करं कबन्धकायं कोऽपि पार्थिवप्राणितार्थी पुरुषः पुरुषोपहारमिवोपजहार । ज्वलितपृथुपरिवेषमण्डलाभोगभासुरो जिघृक्षाजृम्भमाणस्वर्भानुभयाद् उपरचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानुः । अवनिपतिप्रतापप्रसाधिताः प्रथमतरकृतपावकप्रवेशा इवादह्यन्त अनुरक्ता दिशः । स्नुतशोणितशीकरासारारुणिततनुः अनुमरणाय प्रावृतपाटलांशुकपट इवादृश्यत वसुधावधूः । नराधिपविनाशसम्भ्रमभीतैः लोकपालैरिव कालायसकवाटपुटैः अकालकालमेघपटलैररुध्यन्त दिग्द्वाराणि । प्रेतपतिप्रयाणप्रहताः पटवः पटहा इवारटन्तो हृदयस्फोटनाः पस्फायिरे निपततां निर्घातानां घोरा निर्घोषाः । निकटीभवद्यममहिषखुरपुटोद्धूता इव द्युमणिधाम धूसरीचक्रुः क्रमेलककचकपिलाः पांसुवृष्टयः । *विसराविलापिनीनाम् उन्मुखीनां शिखिनो ज्वालाभिः प्रतीच्छन्त्य इव पतन्तीरुल्काभासो नभसो बभासिरेऽशिवानां शिवानां

---

शिखा अग्रम् । धूमकेतवः उत्पातसूचकाः धूमाकाराः केतवः । अष्टेत्यादि । भानुमण्डले दृश्यमानः कबन्धरूप उत्पातसूचकः कायः, यः पार्थिवप्राणितार्थिना केनचित् पुरुषेणोपहृतः पुरुषोपहार इव दृष्ट इत्यर्थः । आभोगः परिपूर्णता । जृम्भमाणः उद्यच्छन्नित्यर्थः । स्वर्भानू राहुः । प्रतापप्रसाधिताः पौरुषेण प्रकृष्टं साधिताः । प्रतापाख्येन मण्डनद्रव्येण मण्डिता इति च । अंशुकपटः उत्तरीयवस्त्रं, सूक्ष्मवस्त्रं वा । 'अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः' इति वैजयन्ती । आरटन्तः शब्दायमानाः । हृदयस्फोटनाः हृदयभेदनाः । पस्फायिरे प्रवृद्धाः । 'स्फायी वृद्धौ' इति धातुः । निर्घातः अशनिः । निकटीभवद् आसन्नीभवत् । द्युमणिः आदित्यः । क्रमेलककचः उष्ट्रकेशः । विसरविलापिनीनां कटुकं शब्दायमानानाम् । शिखिनो ज्वालाः आस्यगताग्निज्वालाः । प्रतीच्छन्त्यः

---

* 'विरसविरासिनीनाम्' इति मूलकोशपाठः ।

श्रेणयः। राजधामनि धूयमानकबरीविभागभावितविकाराः प्रकीर्णकेशप्रकाशितशोका इव प्राकाशन्त प्रतिमाः कुलदेवतानाम्। उपसिंहासनम् आकुलकालरात्रिविधूयमानवृजिनवेणीविभ्रमं बभ्राम भ्रामरं मधुपटलम्। अटतामन्तःपुरस्योपरि क्षणमपि न शशाम व्यावक्रोशी वायसानाम्। श्वेतातपत्रमण्डलमध्याज्जीवितमिव राज्यस्य सरसपिशितपिण्डलोहितचञ्चच्चञ्चुः उच्चखान खण्डं माणिक्यस्य कूजन् जरद्गृध्रः। हर्षोऽपि महोत्पातदूयमानः तथैव निनाय निशाम्।

अन्यस्मिन्नहनि समीपराजकुलाद् द्रुतगतिवशविशीर्यमाणालङ्कारझङ्कारिणी विजयघोषणेव विषादस्य, आकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिः उद्ग्रीवाभिः किं किमिति पृच्छ्यमानेव दूरादेव भवनहंसीभिः, स्खलितविशालश्रोणीशिञ्जानरशनानुराविणीभिः बाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिः, अदृष्टकवाटपट्टास्फोटस्फुटितललाटरुधिरपटलेन प्रान्तेनेव रक्तांशुकस्य मुखमाच्छाद्य प्ररुदती, सन्तापबलविलीनवलयकनकरसधारामिव वेत्रलतामुत्सृजन्ती, मुखमरुत्तरङ्गिताम् उत्तरीयांशुकपटीं स्फुरन्तीं फणिनीव निर्मोकमञ्जरीम् आकर्षन्ती,

---

प्रतीपं गृह्णन्त्यः। 'प्रतीच्छा पततो ग्रहः' इति वैजयन्ती। कबरी केशवेशः। प्राकाशन्त प्रत्यभासन्त। कालरात्री संहारकाले तमोरूपा स्त्री। वृजिनवेणी केशबन्धः। 'केशेऽपि वृजिनः' इत्यमरः। विभ्रमः उपमा। भ्रामरं मधुपटलम्। भ्रमराः, पुत्तिकाः, क्षुद्राः मक्षिका इत्याद्याश्चतुर्विधा मधुपाः। एतैः संवृत्तानि मधूनि भ्रामरपौत्तिकक्षौद्रमाक्षिकानीति। तत्र भ्रामराख्यमधुपायिमधुपटलमित्यर्थः। भ्रमरमधुपटलमिति च पाठः। भ्रमराख्यमधुपटलमित्यर्थः। भ्रमरपटलमिति केषुचित् कोशेषु पाठः। अटतां भ्रमताम् व्यावक्रोशी परस्परशब्दः। 'क्रुश आह्वाने' इति धातोः कर्मव्यतीहारे णच्। 'णचः स्त्रियामञ्' (पा० सू० ५. ४. १४.) इत्यञ्प्रत्यये 'टिड्ढाणञ्–' (पा० सू० ४. १. १५.) इत्यादिना ङीपि कृते व्यावक्रोशीति रूपम्। चञ्चच्चञ्चुः चलनासिकः।

तुलाकोटिः नूपुरम्। अनुराविणीभिः अनुनादिनीभिः। आस्फोटः आघातः। स्फुटितं भिन्नम्। प्रान्तेनेवेति पाठः। उत्तरीयांशुकपटीम् उत्तरीयभूतं

---

'वृजिनवेणीबन्धविभ्रमम्' इति मूलकोशपाठः।

नम्रांसस्रंसिना विलोलनीलतमेन तमालनवपल्लवचीरचीवरेणेव शोकोचितेन शिरोरुहसञ्चयेन चञ्चता प्रावृतकुचा, कुचताडनपीडया समुच्छूनताम्रश्यामलं मुहुर्मुहुः अत्युष्णाश्रुप्रमार्जनदग्धमिव करकिसलयं धुनाना, चक्षुर्निर्झरे शीर्यति स्नपयन्तीव शोकाग्निप्रवेशाय स्वकपोलप्रतिबिम्बितमासन्नलोकं, लोललोचनप्रवृत्तैः तरलैः तारकांशुभिः श्यामायमानम् आत्मदुःखेन दिवसमपि दहन्तीव, 'क्व कुमारः' इति प्रतिपुरुषं पृच्छन्ती, विकलेति नाम्ना यशोवत्याः प्रतिहारी आजगाम। विषण्णलोकलोचनप्रत्युद्गता चोपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चन्तीव शुष्यन्तं दशनदीधितिधाराभिः आधूसरम् अधरमधोमुखी विज्ञापितवती—'देव! परित्रायस्व। जीवत्येव भर्तरि किमपि व्यवसितं देव्या' इति।

ततश्च तदपरमाकर्ण्य लुत इव सत्त्वेन, दग्ध इव दुःखेन, आचान्त इव चिन्तया, तुलित इव तापेन, अङ्गीकृत इव आतङ्केन, अप्रतिपत्तिरासीत्। आसीच्चास्य मनसि—'प्रतिपन्नसंज्ञकस्य बहुशो हृदये दुःखाभिषङ्गो निपतन्नश्मनीव लोहप्रहारः कठिने हुतभुजमुत्थापयति, न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्' इति। उत्थाय च त्वरमाणोऽन्तःपुरमगात्। तत्र च मर्तुमुद्यतानां राजमहिषीणां प्रलापानशृणोद् दूरादेव। 'तात चूत! चिन्तयात्मानम्। प्रवसति ते जननी। जात जातीगुच्छ! गच्छामि। आपृच्छस्व माम्। मया विना अद्यैव अनाथासि भगिनि! भवनदाडिमलते! रक्ताशोक! मर्षणीयाः पादप्रहाराः, कर्पूरपल्लवभङ्गापराधाश्च। पुत्रक! न्तःपुरबालबकुल! वारुणीगण्डूषग्रहणदुर्ललित! दृष्टोऽसि। वत्से!

---

सूक्ष्मवस्त्रम्। आसन्नलोकं समीपवर्तिनं जनम्। किमपि व्यवसितं मर्तुमुद्यतेत्युक्तेः अमङ्गलत्वादेवं प्रयुक्तम्।

सत्त्वेन धैर्येण। आचान्तः भक्षितः। तुलितः कम्पितः। आतङ्केन तापतः। दुःखाभिषङ्गः दुःखाभिषवः। निरनुक्रोशस्य निर्दयस्य। अशृणोत् प्रलापानित्यन्वयः। जात! पुत्रक!। जातीगुच्छ! जातीलतिके!। मर्षणीयाः सहनीयाः। पादप्रहाराः कुसुमोद्गमार्थं कृता इति भावः। दुर्ललित! उद्धत!।

प्रियङ्गुलतिके! गाढमालिङ्ग मां, दुर्लभा भवामि ते। भद्र! भवन-द्वारसहकारक! दातव्यो वैहायसिकस्तोयाञ्जलिः अपत्यमसि। भ्रातः पञ्जरशुक! यथा न विस्मरसि माम्। किं व्याहरसि दूरीभूतास्मि ते शारिके!। स्वप्ने हि नः समागमः पुनः। मातर्मालति! म्लानासि। मार्गलग्नं कस्य समर्पयामि गृहमयूरकम्। अम्ब! सुतवल्लालनीयम् इदं हंसमिथुनम्। मन्दपुण्यया मया न सम्भावितोऽस्य चक्रवाकयुगलस्य विवाहोत्सवः। मातृवत्सले! निवर्तस्व गृहसारसिके!। समुपनय सौविदल्लक! वल्लभवल्लकीम्। परिष्वजे तावदेनाम्। चन्द्रसेने! सुदृष्टः क्रियतामयं जनः। इन्दुमति! वन्दनीया ते सखी बन्धुमती। चेटि! मुञ्च चरणौ। आर्ये कात्यायनिके! किं रोदिषि। नीतास्मि दैवेन अपहास्यताम्। तात! कञ्चुकिन्! किं मामलक्षणां प्रदक्षिणीकरोषि। धात्रेयि! धारयात्मानम्। किं मम पादयोः पतसि। नलिनिके! गृहाण माम् अपश्चिमां कण्ठे। कष्टं न दृष्टा प्रियसखी मलयवती!। तरङ्गवति! अयमामन्त्रणाञ्जलिस्ते। सानुमति! अयमन्त्यः प्रणामः। कुवलयवति! एष तेऽवसानपरिष्वङ्गः। सख्यः! क्षन्तव्याः प्रणयकलहाः' इत्येवंप्रायान् प्रलापान् शृण्वन् दह्यमानश्रवणश्च तैः, प्रविशन्नेव निर्यान्तीं दत्तसर्वस्वापतेयां गृहीतमरणप्रसाधनां जानकीमिव जातवेदसं पत्युः पुरः प्रविविक्षन्तीं, प्रत्यग्रस्नानार्द्रदेहतया भुवामिव भगवतीं सद्यः समुद्रा-दुत्थितां, कुसुम्भबभ्रुणी वाससी दिवमिव तेजसी सान्ध्ये दधानां,

---

प्रियङ्गुः श्यामा (७०७८)। वैहायसिकः परलोकयोग्य इत्यर्थः। यथा न विस्मरसि मां तथा कर्तव्यमिति शेषः। मालतीति कस्याश्चन नाम। मार्गलग्नं मार्गेऽनुबद्धम्। समर्पयामि ददामि। सौविदल्लः कञ्चुकी। 'सौविदल्लाः कञ्चुकिनः' इत्यमरः। चेटि! दासि!। कात्यायनिके 'कात्यायन्यर्धवृद्धा सा काषायवसनाधवा' इत्यमरः। धात्रेयि! धात्रीपुत्रि!। अपश्चिमां पश्चात् स्थितिहीनाम्। इदानीमेव म्रियमाणामित्यर्थः। आमन्त्रणम् आप्रश्नः। अवसानपरिष्वङ्गः अन्तिमालिङ्गनम्। दत्तसर्वस्वापतेयां दत्तसर्वधनाम्। पुरः पूर्वम्, अग्रतश्च। कुसुम्भबभ्रुणी

ताम्बूलजग्धिरागान्धकारम् अधरप्रभापटलं पाटलपट्टकञ्चुकमिव अविधवा-मरणचिह्नम् अङ्गलग्नमुद्वहन्तीं, रक्तकण्ठसूत्रेण कुचान्तरालावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वतीं, कुटिलकुण्डलकोटिकण्टका-कृष्टतन्तुना हारेण वलितेन सितांशुकपाशेनेव कण्ठमुत्पीडयन्तीं, सरसकुङ्कुमाङ्गरागतया कवलितामिव दिधक्षता चिताचिंष्मता चितार्चन-लाजकुसुमैरिव धवलधवलैः अश्रुबिन्दुभिरंशुकोत्सङ्गम् आपूरयन्तीं, गृहदेवतामन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीम्, आप्रपदीनां कण्ठेगुणकुसुममालां यमडोलामिवाधिरूढाम्, अन्त-र्गुञ्जन्मधुकरमुखरेण आमन्त्र्यमाणलोचनोत्पलामिव लवङ्गकर्णोत्पलेन, प्रदक्षिणीक्रियमाणामिव मणिनूपुरबन्धुभिर्बद्धमण्डलं भ्रमद्भिर्भवन-कलहंसैः, सन्निहितप्राणसमं मरणाय चित्तमिव चित्रफलकं धारयन्तीम्, आबद्धोद्धूयमानधवलपुष्पधामदामकां पतिव्रतापताकामिव पतिप्रासयष्टि-मिष्टाम् उपगूहमानां, बन्धोरिव निजचारित्रधवलस्य नृपातपत्रस्य पुरो नेत्रोदकम् उत्सृजन्तीं, पत्युः पादपतनमुद्गमदभ्यधिकबाष्पाम्भःप्रवाह-प्रतिपन्नादेशान् सचिवान् सन्दिशन्तीम्, अनुनयनिवर्तितविधुरबन्धुवर्ग-वर्धमानध्वनिभिर्गृहाक्रन्दैः आकृष्यमाणश्रवणां, भर्तृभाषितनिभैः पञ्जर-सिंहबृंहितैः ह्रियमाणहृदयां, धात्र्या भर्तृभक्त्या च निजया प्रसाधितां, मूर्च्छया जरत्या च संस्तुतया धार्यमाणां, सख्या पीडया च व्यसन-सङ्गतया समालिङ्गितां, परिजनेन सन्तापेन च गृहीतसर्वावयवेन परीतां,

---

कुसुम्भरञ्जनेन पिङ्गलवर्णे। जग्धिः भक्षणम् । अर्चिष्मता अग्निना। आप्रपदीनां आप्रपदं प्राप्तवतीम्। कण्ठेगुणकुसुममालां कण्ठेगुणाख्यकुसुममालाम्। कण्ठेगुणः (ഒരുമാല)। 'अमूर्धमस्तकात्' (पा० सू० ६. ३. १२.) इति सप्तम्या अलुक्। सन्निहितप्राणसमं लिखितभर्तृकम्। अन्यत्र भर्त्रा अधिष्ठितमित्यर्थः। प्रासः कुन्तः। पत्युःपादपतनं सचिवान् सन्दिशन्तीम् इत्यन्वयः। निजया स्वकीयया, नित्यया च। प्रसाधिताम् उभयत्र समानम्। धार्यमाणां ध्रियमाणाम्,

कुलपुत्रैः श्वसितैश्च महत्तरैरधिष्ठितां, कञ्चुकिभिर्दुःखैश्च अतिवृद्धैरनुगतां, भूपालवल्लभान् कौलेयकानपि सास्रमालोकयन्तीं, सपत्नीनामपि पादयोः पतन्तीं, गृहपतत्रिणामपि पुरस्ताद् अञ्जलिमुपरचयन्तीं, पशूनप्यापृच्छमानां, भवनपादपानपि परिष्वजमानां मातरं ददर्श ।

दूरादेव च बाष्पायमाणदृष्टिरभ्यधात्— 'अम्ब! त्वमपि मां मन्दपुण्यं परित्यजसि । प्रसीद, निवर्तस्व' इत्यभिदधान एव सस्नेहमिव नूपुरमणिमरीचिभिश्चुम्ब्यमानचूडः चरणयोर्न्यपतत् । देवी तु यशोवती, तथा तिष्ठति पादनिहितशिरसि विमनसि तनये, गुरुणा गिरिणेव उद्वेगवेगेनावष्टभ्यमाना, मूर्छान्धतमसं रसातलमिव प्रविशन्ती, प्रवाहेणेव च चिरनिरोधसम्पीडितेन स्नेहसम्भारेण निर्भरमाविर्भूतेन अभिभूयमाना, कृतप्रयत्नापि निवारयितुं न शशाक बाष्पोत्पीडम् । उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकूता गद्गदिकागृह्यमाणगलविकला निस्सामान्यमन्युतरलीक्रियमाणाधरोद्देशा पुनरुक्तस्फुरणनिबिडनासावंशान् निमील्य नयने नयनाम्भसामेकप्लवेन आप्लावयन्ती सकज्जलेन सकलौ कपोलौ संछाद्य करनखमयूखमालाखचितदशान्तेन तनुनातनुतन्त्वन्तरनिर्गच्छदच्छास्रस्रोतसेव अंशुकपटान्तेन किञ्चिदुत्तानितं, वदनेन्दुं दूयमानमानसा स्मरन्ती प्रस्नुतस्तनी प्रसवदिवसादारभ्य सकलमङ्कशायि शैशवमस्य, ज्ञातिगृहगतहृदया च 'अम्ब! तात! न पश्यसि पापां परलोकप्रस्थितां मामेवम् अतिदुःखिताम्' इति मुहुर्मुहुः आक्रन्दन्ती पितरौ, 'हा! वत्स!

---

अवध्वस्यमानां च। महत्तरैः महात्मभिः (മുതലാളർ) पृथुभिश्च । अतिवृद्धैः जरद्भिः, प्रवृद्धैश्च । कौलेयकान् शुनः ।

बाष्पायमाणः बाष्पमुद्वमन् । विमनसि विषण्णे । प्रवाहेण जलपूरेण । उत्पीडम् अतिभारम् । शोकाकूता शोकाभिप्राया, शोकसंश्रितेति वा । शोकाकुलितेति च पाठः । निस्सामान्यमन्युः असाधारणशोकः । प्लवेन पूरेण । दशा वस्त्रवर्तिः । अतनु इति पदच्छेदः । अंशुकपटान्तेन उत्तरीयपटान्तेन । अनल्पं यथा इत्यर्थः । तन्त्वन्तरं

---

१. முதலிபெயர்-க,

विश्रान्तभागधेयया न दृष्टोऽसि' इति प्रेष्ठं ज्येष्ठं तनयमसन्निहितं विक्रोशन्ती, 'हा वत्से! अनाथा जाता' इति श्वशुरकुलवर्तिनीं दुहितरम् अनुक्रोशन्ती, 'निष्करुण! किमपराद्धं तवामुना जनेन' इति दैवम् उपालभमाना, 'नास्ति मत्समा सीमन्तिनी मन्दभागिनी' इति निन्दन्ती बहुविधम् आत्मानं, 'मुषितास्मि नृशंस त्वया' इत्यकाण्डे कृतान्तं गर्हमाणा मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत्।

प्रशान्ते च मन्युवेगे सस्नेहमुत्थापयामास सुतम्। हस्तेन चास्य प्ररुदितस्य पक्ष्मपालीपुञ्ज्यमाननखकिरणनिवहाहतामिव अधिकतरां क्षरन्तीं दृष्टिमुन्ममार्ज। स्वयमप्यकठोररागपरिपीयमानेन धवलिम्ना मुच्यमानोदरे क्षरदश्रुणी श्वयत्पर्यन्ते शुक्लशीकरतारकितपक्ष्मलक्ष्मणी सूक्ष्मतरास्रबिन्दुपरिपाटीपतनानुबन्धविधुरे लोचने पुनःपुनरापूर्यमाणे प्रमृज्य, बाष्पार्द्रगण्डगृहीतां च श्रवणशिखरमारोप्य शोकलम्बामलककलतां बन्धार्धस्रस्तविलोलवालिकाव्याकुलितां च समुत्सार्य तिरश्चीं चिकुरसटाम् अश्रुप्रवाहप्रेरितमार्द्रं च किञ्चिच्च्युतमुत्क्षिप्य हस्तेन स्तनोत्तरीयं तरङ्गितमिव अंशुकपटलेन मग्नांशुकपटलान्ततन्तुतनुताम्रलेखालाञ्छितलावण्यं कुब्जिकावर्जितराजतराजहंसास्यभृङ्गारकोद्गीर्णेनाम्भसा प्रक्षाल्य वदनकमलं, कलमूककरधृते वाससश्शकले शुचिनि सम्मृज्य पाणी, सुतनयनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनःपुनर्निःश्वस्योवाच—'वत्स! नासि न प्रियो निर्गुणो वा। न परित्यागार्हः। स्तन्येनैव

---

तनुमध्यम्। विश्रान्तभागधेयया नष्टभाग्यया। प्रेष्ठं प्रियतमम्। मन्दभागिनी अल्पभाग्या। 'भागो भाग्यांशतुर्यांशाः' इति वैजयन्ती। कृतान्तं दैवम्।

पक्ष्मपाली पक्ष्मावलिः। श्वयत्पर्यन्ते शोफयुक्तपरिसरे। परिपाटी पङ्क्तिः। विधुरे कष्टे। वालिका श्रवणाभरणम्। चिकुरसटां कुन्तलभारम्। लाञ्छितम् अङ्कितम्। कुब्जिका कुब्जा स्त्री (കൂനി)। आवर्जितम् अवाक्षिप्तम्। राजहंसास्यभृङ्गारकः हंसमुखजलपात्रम् (അന്നവാൽക്കിണ്ടി)। कलमूकः अवाक्छ्रुतिः (ഊമച്ചെവിടൻ)। नासि न प्रियः न प्रियो नासि, प्रिय एवासीत्यर्थः। निर्गुणो वा

सह त्वया पीतं हृदयं मे। अस्मिंस्तु समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अपि च, पुत्रक! पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणम् अकरुणा नास्मि लक्ष्मीः क्षमा वा। कुलपुत्रकलत्रमस्मि चारित्रधना। धर्मधवले कुले जाता। जात! किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केसरिण इव केसरिणीं गृहिणीं वीरजां वीरजायां जननीं च। मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात्। एवंविधेन भर्त्रा भरतभगीरथनलनाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः। आसेवितः सेवासम्भ्रान्तानन्तसामन्तसीमन्तिनीसमावर्जितजाम्बूनदघटाभिषेकः शिरसा। लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन। पीतौ युष्मद्विधैरपत्यैः अमित्रकलत्रबन्दीवृन्दविधूयमानचामरमरुच्चलच्चीनांशुकधरौ पयोधरौ। सपत्नीनां शिरस्सु निहितं नमन्निखिलकटककुटुम्बिनीकिरीटमालार्चितं चरणयुगलम्। एवं कृतार्थसर्वावयवा किमपरमपेक्षे। क्षीणपुण्या मर्तुमविधवैव वाञ्छामि। न शक्नोमि दग्धे भर्तरि असुभिरविरहिता रतिरिव निरर्थकान् विलापान् कर्तुम्। पितुश्च पादधूलिरिव ते प्रथमं गता आगमनमावेदयन्ती बहुमता भविष्यामि शूरानुरागिणीनां सुराङ्गनानाम्। प्रत्यक्षदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः। मरणात्तु जीवितमेव अस्मिन् समये साहसम्। अतिशीतलः पतिशोकानलाद् अक्षयस्नेहेन्धनाद् अस्मादनलः। कैलासकल्पे च प्रवसति जीवितेशे जरत्तृणकर्णिकाणीयसि जीविते लोभ इति क [किं] घटते। अपि च, जीवन्तीं मां प्रतिपक्षपतिमरणां

---

नासीत्यन्वयः। धर्मधवले धर्मेण धवले शुद्धे। विस्मृतोऽसि विस्मृतवानसि। शौण्डस्य प्रगल्भस्य। प्रकाण्डस्य श्रेष्ठस्य। वीरजायां— पुरुषप्रकाण्डस्य गृहिणीमिति पूर्वमुक्ते वीरजायामिति पुनरुक्तं किमर्थमिति मा शङ्कनीयम्। लोकोक्तिच्छायामाश्रित्योक्तम्। यतः केचिद् वीरजां वीरजननीमित्येवं पठन्ति। नरेन्द्रवृन्दारकेण राजश्रेष्ठेन। सामन्तः सामन्तविषयवासी राजा। धूमध्वजः अग्निः। जीवितं प्राणनम्। स्नेहेन्धनात् प्रेमेन्धनात्, तैलेन्धनाद् इति च।

अवधीरणमहापातकिनीं न स्प्रक्ष्यन्ति पुत्र! पुत्रराज्यसुखानि। दुःखदग्धानां च भूतिरमङ्गला च, अप्रशस्ता च, निरुपयोगा च भवति। वत्स! स्थास्नुना यशसा स्थातुमिच्छामि लोके, न वपुषा। तदहमेव त्वां तात! प्रसादयामि, न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि' इत्युक्त्वा पादयोरपतत्।

स तु ससम्भ्रममपनीय चरणयुगलम्, अवनमिततनुरुभयकरविधृतवपुषम् अवनिगतशिरसम् उदनमयन्मातरम्। दुर्निवारतां च शुचः समवधार्य कुलयोषिदुचितां च श्रेयसीं तामेव बहुमन्यमानः क्रियां, कृतनिश्चयां च तां ज्ञात्वा तूष्णीमधोमुखोऽभवत्।

अभिनन्दति हि स्नेहकातरापि कुलीनता देशकालानुरूपम्। देव्यपि यशोवती परिष्वज्य तं समाघ्राय च शिरसि निर्गत्य चरणाभ्यामेवान्तःपुरात् पौराक्रन्दप्रतिशब्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैः दृष्टिपातैः प्रविकसितरक्तपङ्कजपुञ्जैरिवार्चयित्वा भगवन्तं भानुमन्तमिव मूर्तिरैन्दवी चित्रभानुं प्राविशत्। इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्। अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्तमानतारं तारकराजमिव अस्तमभिलषन्तं जनयितारम्। असह्यशोकोद्रेकाभिहतश्च त्याजितः पितृस्नेहेन धैर्यम्, आश्लिष्यास्य सकलदुर्मदमहीपालमौलिमालालालितौ पादपद्मौ, अन्तस्तापान्मुखचन्द्रमिव द्रवीभवन्तं दन्तज्योत्स्नाजालमिव

---

स्थास्नुना स्थितिशीलेन। कदर्थनीया क्लेशनीया।

उदनमयत् उद्धृतवान्।

देशकालानुरूपं देशकालयोर्युक्तं कर्म। उपरुध्यमाना समीपे रुध्यमाना। चित्रभानुम् अग्निम्। परिवर्तमानतारं भ्रमदक्षिकनीनिकम्। अन्यत्र क्षीयमाणतारकं, नक्षत्रं परितो वर्तमानमिति वा। अस्तं मरणम्, अस्तपर्वतं च। उद्रेकः उत्कर्षः।

---

१. 'तारकं'—ख.

जलतामापाद्यमानम्, अखिलावण्यमिव विलीयमानं, मुखसुधारसमिव स्यन्दमानम्, अच्छाच्छमस्रस्रोतसां सन्तानं महामेघमयविलोचन इव वर्षन् निरन्तरविमुक्तारवश्चिरं रुरोद ।

राजा तु तमुपरुध्यमानदृष्टिरपि रुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैरवादीत्—'पुत्र ! नार्हस्येवं भवितुं भवद्विधा भव्याः । महासत्त्वता हि प्रथममवलम्बनं लोकस्य, पश्चाद् राजबीजिता । सत्त्ववतां चाग्रणीरसि । सर्वातिशयाश्रयः क भवान् ? क वैक्लव्यम् ? । तथा हि— 'कुलप्रदीपोऽसीति दिवसकरसदृशतेजसस्ते लघूकरणमिव । पुरुषसिंहोऽसीति शौर्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव । क्षितिरियं तवेति लक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तमिव । गृह्यतामियं श्रीरिति स्वयमेव श्रिया गृहीतस्य विपरीतमिव । अध्यास्यतामयं लोक इति उभयलोकविजिगीषोः अपुष्कलमिव । आत्मीक्रियतां कोश इति शशिकरनिकरनिर्मलयशसश्चयैकाभिनिवेशिनो निरुपयोगमिव । स्वीक्रियतां राजकमिति गुरुगुणगणात्मीकृतजगतो गतार्थमिव । उह्यतां राज्यभार इति भुवनत्रयभारोचितस्यानुचितनियोग इव । प्रजाः परिरक्ष्यन्तामिति दीर्घदोर्दण्डार्गलितसर्वदिङ्मुखस्यानुवाद इव । परिजनः परिपाल्यतामिति लोकपालनोचितस्यानुषङ्गिकमिव । शस्त्राभ्यासः कार्य इति धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य किमादिश्यते । निग्राह्यं चापलजातमिति नूतन एव वयसि निगृहीतेन्द्रियस्य निरवकाशेव मे वाणी । निर्वंशता नेयाः शत्रव इति,

---

त्याजितो धैर्यमित्यन्वयः । सन्तानम् ओघम् ।

उपरुध्यमानं नेत्रच्छदमूले तिरोभवत् (൭ചാൽകാനിൽഠൂ) । राजबीजिता राजवंश्यता । 'राजबीजी राजवंश्यः' इत्यमरः । सत्त्ववतां बुद्धिमताम् । पुरुषसिंहः पुरुषश्रेष्ठः ; सिंहश्च निगद्यते । निन्देव, सिंहस्य पटुप्रज्ञताभावादिति भावः । चक्रवर्तिपदस्य चक्रवर्तित्वस्य । पदस्येत्युक्ते वाक्यस्येति च ध्वन्यते । अपुष्कलम् अपूर्णम् । कोशः धनसमूहः । गतार्थम् अतीतार्थम् । आनुषङ्गिकम्

सहजस्य तेजस एवेयं चिन्ता' इत्येवं वदन्नेवापुनरुन्मीलनाय निमिमील लोचने राजसिंहः ।

अस्मिन्नेव चान्तरे पूषाप्यायुषेव तेजसा व्ययुज्यत । ततश्च लज्जमान इव नरपतिजीवितापहरणजनितात्मजापराधाद् अधोमुखः समभवत् । भूपालाभावशोकाशिखिनेव अन्तस्तप्यमानस्ताम्रतां प्रपेदे । मन्दमन्दम् अप्रियप्रश्नार्थमिव स्थितिमनुवर्तमानो लौकिकीमवततार दिवः । दित्सुरिव च जनेशाय जलम् अपरजलनिधिसमीपमुपससर्प । सद्यो दत्तनृपजलाञ्जलिदुःखदहनदग्धमिव लोहितमधत्त करसहस्रम् ।

एवं च महानराधिपनिधननिधीयमानविपुलवैराग्य इव शान्तवपुषि विशति गिरिगुहागह्वरं भगवति गभस्तिमालिनि, मोमुच्यमानमहाजनाश्रुदुर्दिनार्द्रीकृत इव निर्वात्यातपे, रोदनाताम्रसकललोकलोचनरुचेव लोहितायति जगति, ऊष्मायमाणानेकनरपतिनिःश्वाससन्तापप्लुष्ट इव नीलायमाने दिने, नृपानुगमनप्रचलितया इव लक्ष्म्या मुच्यमानासु कमलिनीषु, पतिशुचेव परिवृत्तच्छायायां श्यामायमानायां भुवि,

---

अनुषङ्गसिद्धम् । निमिमील लोचने मृतवानित्यर्थः । 'निमीलनं दीर्घनिद्रा च' इति हलायुधः । अमङ्गलत्वाद् मृतवानिति न प्रयुक्तम् ।

ततश्चेत्यादिषु वाक्येषु समभवदादीनाम् अधस्तान्तानामाख्यातपदानां पूषेति कर्तेत्यनुसन्धेयम् । आत्मजापराधात्, पूष्ण आत्मजोऽयमिति भावः । अप्रियप्रश्नः आतुरव्यञ्जनम् (മുഖക്കാഴ്ച കാൺകെ) । दुःखदहनः दुःखमेव दहनः । करः किरणः, हस्तश्च ।

वैराग्ये विरक्तत्वे । मुख्यार्थः— विगतारुणिमत्वे । शान्तवपुषि नयनहृद्य इति यावत्, शान्तियुक्त इति च । गिरिः अस्तपर्वतः । पर्वतान्तरं च ध्वन्यते । मोमुच्यमानं भृशं मुच्यमानम् । निर्वाति शाम्यति । ऊष्मायमाणः ऊष्माणमुद्गमन् । नीलायमाने दिन इति पाठः । अनुगमनप्रचलितया अनुगमनार्थं प्रचलितया । परिवृत्तच्छायायां अपराह्णतया परिवृत्तवृक्षादि-

---

१. முகநோக்குகாண்லைக-கு.

कुलपुत्रेष्विव परित्यक्तनिजकलत्रेषु कृतकरुणप्रलापेषु वनान्तानाश्रयत्सु दुःखितेषु चक्रवाकेषु, भर्तृभङ्गभीतेष्विव निगूढकोशेषु कुशेशयेषु, स्फुटितदिग्वधूहृदयरुधिरपटल इव गलिते रक्तातपे, क्रमेण लोकान्तरम् उपगतवति अनुरागशेषे जाते तेजसामधीशे, गगनतलावितन्यमानबहलरागपटलायां प्रेतपताकायामिव प्रवृत्तायां सन्ध्यायां, शवशिबिकालङ्कारकृष्णचामरिकास्विव स्फुरन्तीषु दर्शनप्रतिकूलासु तिमिरलेखासु, असितागरुकालकाष्ठायां केनापि रचितायां चितायामिव रजन्यां, दन्तामलपत्रप्रसाधितकर्णिकासु केसरमालाकल्पितमुण्डमालिकासु अनुमर्तुमिवोद्यतासु हसितमुखीषु कुमुदलक्ष्मीषु, अवतरत्त्रिदशविमानकिङ्किणीरणित इव श्रूयमाणे शाखिशिखरकुलायलीयमानशकुनिकुलकलकूजिते, नाकपथप्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्र इव पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि, नरेन्द्रैः स्वयं समर्पितस्कन्धैर्गृहीत्वा शिबिकां शिबिसमः सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपतिः समुचितया

---

च्छायायामित्यर्थः। छायेति मेरुच्छाया विवक्षितेति केचित्। गतशोभायामिति च। वनान्तान् जलसमीपान्, काननसमीपांश्च। भर्तृभङ्गभीतेषु स्वामिमरणनिमित्तजनपदकलहभीतेषु। निगूढकोशेषु संवृतमुकुलेषु; गोपितधनेष्विति च। अनुरागः अरुणिमा अस्तमयसमयान्तरेऽपि क्षणस्थाय्यत्र विवक्षितः; जनानुरागश्च। तेजसामधीशो सूर्ये, पुरुषगुणतेजसां स्थानं भूत्वा राजापि। शवशिबिका शवयानम्। दर्शनप्रतिकूलासु दृष्टिनिरोधिकासु, दृष्टिव्यसनकरीषु च। असितागरुकालकाष्ठायाम् अन्धकारबाहुल्येन कृष्णागरुवन्नीलादिशि। अन्यत्र कृष्णागर्वाख्यनीलेन्धनायाम्। चितायां चित्याम्। दन्तामलपत्रप्रसाधितकर्णिकासु गजदन्तवद् अमल(त?द)लमण्डितबीजकोशीषु। अन्यत्र दन्तमयामलपत्रघटितकर्णभूषणासु। 'कर्णिका कर्णभूषणे। करिहस्ताङ्गुलौ पद्मबीजकोश्याम्' इत्यमरः। केसरमाला किञ्जल्कराजिः, बकुलस्रक् च। मुण्डमालिकासु मुण्डशब्देन अग्रप्रदेशो लक्ष्यते। हसितमुखीषु विकसितमुखीषु, हासयुक्तमुखीषु च। नाकः स्वर्गः। पार्थिवप्रत्युद्गतः पार्थिवं प्रत्युद्गतवान्। समर्पितस्कन्धैः दत्तभुजशिखरैः। शिबिः कश्चिद् राजा।

हुताशनसत्क्रियया यशश्शेषतामानीयत।

देवोऽपि हर्षः पुञ्जीभूतेन सकलेनैव जीवलोकेन राजकुल-सम्बद्धेनाशेषेण शोकमूकेन परिजनेन परिवृतोऽन्तर्वर्तिनापि शोकानल-तप्तेन स्नेहद्रवेण बहिरिव सिच्यमानो निर्व्यवधानायां धरण्यामुपविष्ट एव तां निशीथिनीं भैमरथीभीमामखिलां सराजको जजागार। अभवच्चास्य चेतसि— 'ताते दूरीभूते सम्प्रत्येव खल्वनाथीभूतोऽयं जीवलोकः। लोकस्य भग्नाः पन्थानो मनोरथानाम्। खिलीभूतानि भूतेः स्थानानि। स्थगितानि आनन्दस्य द्वाराणि। सुप्ता सत्यवादिता। लुप्ता लोकयात्रा। विलीना बाहुशालिता। प्रलीना प्रियालापिता। प्रोषिताः पुरुषकाराः। समाप्ता समरशौण्डता। प्रमृष्टा वरगुणप्रीतिः। विश्रान्ता विश्वासभूमयः। अपगतानि वदान्यतापदानानि। निरुपयोगानि शास्त्राणि। निरालम्बना विक्रमैकरसता। कथावशेषा विशेषज्ञता। ददातु जनो जलाञ्जलिम् और्जित्याय। प्रपद्यतां प्रव्रज्यां प्रजापालता। बध्नातु वैधव्यवेणीं वरमनुष्यता। समाश्रयतु राज्यश्री-राश्रमपदम्। परिधत्तां धवले वाससी वसुमती। वहतु वल्कले मनस्विता। तपस्यतु तपोवने तेजस्विता। प्रवृणोतु चीवरे वीरता। क्व गम्यतां पुनस्तस्य *कृते कृतज्ञतया। क्व पुनः प्राप्स्यति तादृशान् महापुरुषनिर्माणपरमाणून् परमेष्ठी। शून्याः संवृत्ता दश दिशो गुणानाम्।

---

निर्व्यवधानायां निराच्छादनायाम्। भैमरथी अपमृत्युनिशा। 'या सप्तसप्ततितमे वर्षे मासि च सप्तमे। सप्तमी प्राणिनां घोरा रात्रिर्भैमरथी हि सा॥' इति वैजयन्ती। जजागार प्रबुद्ध एवोपविष्टवान्। खिलीभूतानि निस्सञ्चारी-भूतानि। विलीना नष्टा। प्रलीना प्रलयं गता। पुरुषकारः पौरुषम्। शौण्डता समर्थता। वदान्यता औदार्यम्। अपदानानि पराक्रमाः। 'अपदानं पराक्रमः' इति वैजयन्ती। और्जित्याय श्रैष्ठ्याय। प्रव्रज्यां सन्न्यासम्। परिधत्ताम् आच्छादयतु। धवले वाससी, भर्तृरहितानां रक्तांशुकाच्छादनस्य अयुक्तत्वाद् एवं प्रयुक्तम्। कृते कृतज्ञतायाः कृतज्ञताहेतोः। शून्या अनाश्रय-

---

* 'कृते कृतज्ञतायाः' इति व्याख्यानुसारी पाठः।

जगज्जातमन्धकारं धर्मस्य। निष्फलमधुना जन्म शस्त्रोपजीविनाम्। तातेन विना कुतस्तादृश्यो भुवि दिवसमसमसमररसारब्धकलहकथाः कण्टकितसुभटप्रकटकपोलभित्तयः शूरगोष्ठ्यः। अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनस्तन्मुखसरोजम्। जन्मान्तरेऽपि पुनः परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलम्। लोकान्तरेऽपि पुत्र! पुत्र! इत्यालपतः श्रूयेत सा सुधारसमुद्गिरन्ती मथ्यमानक्षीरसागररवोद्गारगम्भीरा भारती' इत्येतानि चान्यानि चिन्तयत एवास्य सा क्षपा क्षयमगमत्।

ततः शुचेव मुक्तकण्ठमारटत्सु कृकवाकुकुलेषु, गृहगिरितरुशिखरेभ्यः पातयत्स्वात्मानं मन्दिरमयूरेषु, परित्यक्तनिजवासेषु वनाय प्रस्थितेषु पत्त्ररथकुलेषु, सद्यस्तनूभूते ताम्यति तमसि, मन्दीभूतात्मस्नेहेषु अभावमभिलषत्सु प्रदीपेषु, स्फुरदरुणकिरणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि, प्रभातसमयेन समुच्चीयमानासु पार्थिवास्थिकणास्विव कलविङ्ककन्धराधूसरासु तारकासु, भूभृद्धातुगर्भकुम्भधारिषु विविधसरस्सरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु, शावे शर्वर्या शुचिनि

---

भूता इत्यर्थः। अन्धकारं धर्मस्य अविषयभूतं धर्मस्येत्यर्थः। दिवसं सर्वदेत्यर्थः। स्वप्न इत्यादि वाक्यत्रयेऽपि अपिशब्दः सम्भावनायाम्, उद्गारः शब्दः।

तत इत्यादि— अत्र कृकवाकुप्रभृतयोऽपि राजनि अनुरागवशाद् आरटनादिकाः क्रिया अनुष्ठितवन्त इवेत्युच्यते। आरटत्सु शब्दायमानेषु। आक्रन्दत्सु इति च। पातयत्सु आत्मानम् अधोऽवरोहयत्सु इत्यर्थः। भृगुषु पातयत्सु इति च। निवासः कुलायः, गृहं च। तनूभूते क्षीणीभूते, कृशशरीरीभूते इति च। स्नेहः तैलं, प्रेम च। अभावं मरणं, नाशं च। समुच्चीयमानासु समुद्ध्रियमाणासु, सञ्चीयमानासु इति च। कलविङ्कः चटकः (ഉറക്കാരി)। कन्धरा कण्ठः। भूभृद्धातुगर्भकुम्भधारिषु पर्वतोत्पन्नगैरिकगर्भशिरोधारिषु, राजास्थिगर्भघटधारिषु इति च। 'उच्यते गैरिकं धातुः', 'अस्थीनि धातुकीकसकुल्यानि' इति हलायुधः। तीर्थं जलम्।

सिक्थपटलपाण्डरे पिण्ड इव चापरपयोधिपुलिनपरिसरे पात्यमाने शशिनि, क्रमेण च नृपचितानलधूमविसरधूसरीकृततेजसीव नरपतिशोकपावकदाहकिणकलङ्ककालीकृतचेतसीव प्रोषितसमस्तान्तःपुरपुरन्ध्रीमुखचन्द्रशोभादर्शनोद्वेगविद्राणवपुषीव प्रथमास्तमितरोहिणीरणरणकविमनसीव चास्तमुपगते रजनिकरे, राजनीव देवे दिवमधिरूढे सवितरि, परिवृत्ते राज्य इव रजनीप्रबन्धे, प्रबुद्धराजहंसमण्डलप्रबोध्यमानः पङ्कजाकर इव चचाल स्नानाय देवो हर्षः । ततश्च नूपुररवविराममूकमन्दमन्दिरहंसेषु शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु, पतितयूथप इव वनकरियूथे कक्ष्यान्तरवर्तिनि पितृपरिजने, विषादिन्युपरि रुदन्निषादिनि आलानस्तम्भनिषण्णे निष्पन्दमन्दे राजकुञ्जरे, मन्दुरापालाक्रन्दव्यथिते च अजिरभाजि राजवाजिनि, विश्रान्तजयशब्दकलकले च शून्ये महाजनमण्डपे, दह्यमानदृष्टिर्निर्जगाम राजकुलात् । अगाच्च सरस्वतीतीरमेव । तस्यां च स्नात्वा पित्रोर्ददावुदकम् । अपस्नातश्च अनिष्पीडितमौलिरेव च परिधायोद्गमनीये दुकूले, निश्चामरो निरातपत्रो

---

सिक्थं [1]മെഴുക്° । पटलपाण्डरे पटलवत् पाण्डरे; पटलेन पाण्डरे च । पयोधिः समुद्रः, जलाशयश्च । पात्यमाने भ्रश्यमाने, दीयमाने च । दाहकिणः दाहोद्भूतः किणः । प्रोषितसमस्तान्तःपुरपुरन्ध्रीमुखचन्द्रशोभादर्शनोद्वेगविद्राणवपुषि प्रोषितायाः समस्तान्तःपुरपुरन्ध्रीमुखचन्द्रशोभाया दर्शनात् सम्भूतेन उद्वेगेन विद्राणवपुषि । चन्द्रजातेः कोऽनर्थः सम्भवतीति विषण्णवपुषि इत्यर्थः । रोहिणीरणरणकः रोहिणीमुद्दिश्य जातम् औत्सुक्यम् । दिवम् आकाशं, स्वर्गं च । परिवृत्ते प्रतिनिवृत्ते, पूर्वराजान्निवृत्ते च । प्रबुद्धः विद्वान्, गतनिद्रश्च । राजहंसः राजश्रेष्ठः, हंसविशेषश्च । प्रबोध्यमानः प्रबोधं नीयमानः, विकास्यमानश्च । विराममूकमन्दमन्दिरहंसेषु इति पाठः । यूथपे यूथपतौ । आक्रन्दव्यथित इति पाठः । अजिरभाजि अङ्कणगते । अपस्नातः मृतमुद्दिश्य कृतस्नानः । 'अपस्नातो मृतस्नातः' इत्यमरः । अनिष्पीडितमौलिः अपीडितकेशः । उद्गमनीये दुकूले 'तत् स्याद् उद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः ।

---

1. சொற்றவிழ்-க.

निरुत्सारणः समुपनीतेऽपि सप्तौ चरणाभ्यामेव नासाग्रासक्तेन रक्त-तामरसरक्तेन चक्षुषा हृदयावशेषस्य पितुर्दाहशङ्कया शोकाग्निमिवोद्गिरन् अताम्बूलस्यापि सरिदम्बुप्रक्षालितस्य कल्पतरुकिसलयकोमलस्य स्वभाव-पाटलस्य अधरपल्लवस्य प्रभयानुविद्धान् सरसरुधिरकबलानिव हृदयाभिघातादुद्गमल्लुष्णनिःश्वासान् पुनर्भवनमेव जगाम ।

राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन्नेवाहनि निर्गत्य त्यक्त्वा प्रियपुत्रदारान् उद्वाष्पैर्बन्धुभिर्वार्यमाणा अपि बहुनृपगुणगण-हृतहृदयाः केचिदात्मानं भृगुषु बभञ्जुः । केचित् तत्रैव तीर्थेषु तस्थुः । केचिद् अनशनैरास्तीर्णतृणकुथाः क्वथन्मानसाः शुचमसमामशमयन् । केचित् शलभा इव वैश्वानरं शोकावेशविवशा विविशुः । केचिद् दारुण-दुःखदहनदह्यमानविग्रहा प्रगृहीतपादं तुषारशिखरिणं शरणमुपययुः । केचिद् विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लव-शयनशायिनः सन्तापमशमयन् । केचित् सन्निहितानपि विषयानुत्सृज्य सेवाविमुखाः परिच्छिन्नैः पिण्डकैरटवीभुवः शून्या जगृहुः । केचित् पवनाशना धर्मधना धमद्धमनयो मुनयो बभूवुः । केचिद् गृहीतकाषायाः

---

सप्तौ अश्वे ।

आत्मानं भृगुषु बभञ्जुः भृगुपतनेन आत्मानं मारितवन्त इत्यर्थः । तृणकुथाः तृणमयशयनीयाः । क्वथन्मानसाः तप्यमानमनसः । असमां महतीम् । शलभाः पतङ्गाः । विग्रहः शरीरम् । प्रगृहीतपादं गृहीतपर्यन्तपर्वतम् । तुषारशिखरिणं हिमवन्तम् । शरणं गृहम् । अत्र अग्निदह्यमानविग्रहाः । गृहीतपादं गृहीतचरणं तुषारशिखरिणम् अग्निसन्तापशान्तये शरणं रक्षितारम् उपययुरिति च ध्वन्यते । उपत्यकासु आसन्नभूमिषु । सन्तापं शोकं, तापमिति च । परिच्छिन्नैः परिमितैः । पिण्डकैः अन्नपिण्डैः । धमद्धमनयः शरीरकार्श्यात् स्थूणाकारी-भवत्सिराः (ഉന്തിനിൽറ നരമ്പുകളാർ) । काषायं कषायरक्तं वस्त्रम् ।

कापिलीं मतिमधिजगिरे गिरिषु । केचिद् आच्छोटितचूडामणिषु शिरस्सु शरणीकृतधूर्जटयो जटा जघटिरे । अपरे परिपाटलप्रलम्ब-चीवराम्बरसंवीताः स्वाम्यनुरागमुज्ज्वलं चक्रुः । अन्ये तपोवनहरिणी-जिह्वालतोल्लिख्यमानमूर्तयो राज्याङ्गरागानक्षपयन् । अपरे पुनः पुनः पाणिपल्लवपरिमृष्टैः आताम्ररागैर्नयनपुटैः कमण्डलुभिश्च वारि वहन्तो महीमण्डलं मुण्डा विचेरुः ।

देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं, श्रियं शाप इति, महीं महापातकमिति, राज्यं रोग इति, भोगान् भुजङ्ग इति, निलयं निरय इति, बन्धुं बन्धनमिति, जीवितम् अयश इति, देहं द्रोह इति, कल्यतां कलङ्क इति, आयुः अपुण्यफलमिति, आहारं विषमिति, दिनं दहन इति, कालं क्रकच इति, हृदयस्फुटनम् अभ्युदय इति च मन्यमानं, सर्वासु क्रियासु विमुखं, पितृपितामहपरिग्रहाश्चिरन्तनाः कुलपुत्राः, वंशक्रमाहितगौरवाश्च प्राज्ञगिरो गुरवः, श्रुतिस्मृतीतिहासविशारदाश्च जरद्द्विजातयः, श्रुताभिजनशील-

---

कापिलीं मतिं कपिलमुनिसिद्धान्तम् । अधिजगिरे अधिगतवन्तः । आच्छोटितं भग्नम् । जघटिरे बबन्धुः । चीवराम्बरं भिक्षुवस्त्रम् । अनुरागं स्नेहम् । उज्ज्वलं प्रकाशम् । अत्र पाटलाम्बरसंवीततया अनुरागं रागं रक्तवर्णताम् उज्ज्वलम् उत्कटं चक्रुरिति च ध्वन्यते । हरिणीजिह्वालतोल्लिख्यमानमूर्तयः एतेनैतेषां सर्वसत्त्वमैत्री कथिता । राज्याङ्गरागान् राज्याङ्गेषु सङ्गान् । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि' इत्यमरः । अत्र हरिणी-जिह्वालतोल्लिख्यमानमूर्तितया अङ्गरागान् अनुलेपनानि अक्षपयन्निति च ध्वन्यते । परिमृष्टैः मार्जितैः, निर्मलीकृतैश्च । आताम्ररागैः उभयत्र समानम् । कमण्डलुभिः, अत्र ताम्रमयाः कमण्डलवो विवक्षिताः । आताम्ररागैरित्युक्तत्वात् । मुण्डाः मुण्डितशिरसः ।

निरयः नरकः । कल्यतां निरामयताम् । 'वार्तो निरामयः कल्यः' इत्यमरः । आहारम् अन्नम् । विशारदाः विद्वांसः । अभिजनः वंशः ।

शालिनो मूर्धाभिषिक्ताश्च स्वमौलामात्या राजानः, यथावदधिगताध्यात्मतत्त्वाश्च संस्तुता मस्करिणः, समदुःखसुखाश्च समाश्रिताः, सनाभयश्चित्तज्ञाश्च प्रधानसचिवाः, निष्कारणबान्धवाश्च मुनयः, संसारासारताकथनकुशलाश्च ब्रह्मवादिनः, शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन्।

अस्वतन्त्रीकृतश्च तैर्मनसापि नालभत शोकानुप्रवणं चरितुम्। अनुनीयमानश्च कथंकथमपि आहारादिक्रियासु आभिमुख्यमभजत। भ्रातृगतहृदयश्चाचिन्तयत्— 'अपिनाम तातस्य मरणं महाप्रलयसदृशमिदमुपलभ्य आर्यो बाष्पजलस्नातो न गृह्णीयाद् वल्कले। नाश्रयेद्वा राजर्षिराश्रमपदम्। न विशेद्वा पुरुषसिंहो गिरिगुहाम्। अश्रुसलिलनिर्भरभरितनयनयुगलो वा न पश्येदनाथां पृथिवीम्। प्रथमव्यसनविह्वलो वा न विस्मरेदात्मानं पुरुषोत्तमः। अनित्यतया जनितवैराग्यो वा न निराकुर्याद्

---

अध्यात्मतत्त्वं ब्रह्म। संस्तुताः परिचिताः। मस्करिणः सन्न्यासिनः। सनाभयः बान्धवाः। ब्रह्मवादिनः वेदान्तिनः। पौराणिकाः पुराणविदः।

शोकानुप्रवणं शोकानुकूलम्। चरितुं वर्तितुम्। अपिनाम विषा(दाव? दवि)शिष्टायां प्रार्थनायाम्। इदमुत्तरत्र प्रतिवाक्यं सम्बध्यते। बाष्पजलस्नातः बाष्पजलाप्लुतः। न गृह्णीयाद् वल्कले, तपश्चरणार्थमिति भावः। अत्र जलस्नातः जलेषु कृतस्नानः आच्छादितपूर्वम् आर्द्रवस्त्रं परित्यज्य अन्ये वल्कले गृह्णातीति च ध्वन्यते। राजर्षिः राजर्षीभूतः। न विशेद्वा गिरिगुहां प्रायोपवेशनार्थमिति भावः। पुरुषसिंहः पुरुषश्रेष्ठः। सिंहा गिरिगुहां, प्रविशन्तीति च ध्वन्यते। न पश्येदनाथां पृथिवीम्, इयम् अनाथा सनाथा वा भवतु, अहं तु वनं गच्छेयमिति पृथिवीम् अपिनाम नोपेक्षेतेत्यर्थः। अत्र सलिलभरितनयनयुगलतया तिरोहितदर्शनशक्तिः द्र(द्र)ष्टव्यपदार्थं न (प)श्यतीति च ध्वन्यते। पुरुषोत्तमः पुरुषश्रेष्ठः। अत्र पुरुषोत्तमः कृष्णः व्यसनविह्वलो भूत्वा आत्मानं विस्मरतीति च ध्वन्यते। कृष्णस्यात्मविस्मरणमसम्भावनीयम् इति भावः। वैराग्यं निःस्नेहता,

उपसर्पन्तीं राजलक्ष्मीम्। दारुणदुःखदहनप्रज्वलितदेहो वा प्रतिपद्येत अभिषेकम्। इहागतो वा राजभिरभिधीयमानो न पराचीनमाचरेत्। अतिपितृपक्षपाती खलु आर्यः। सर्वदा तातश्लाघया मामभिधत्ते — 'तात हर्ष! कस्यचिदभूद् भविष्यति वा पुनः काञ्चनतालतरुप्रांशु कायप्रमाणमिदम्, इदं च दिवसकरप्रीत्या दिवसमुन्मुखं विकसितं मुखमहाकमलम्, एतौ च वज्रस्तम्भभासुरौ भुजौ, एते चापहसितमदालसहलधरविभ्रमा विलासाः। कोऽन्यो मानी विक्रान्तो वदान्यो वा' इति। एतानि चान्यानि च चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुरागमनमुदीक्षमाणः कथंकथमप्यतिष्ठत्। इति।

॥ इति श्रीहर्षचरिते पितृमरणं नाम पञ्चम उच्छ्वासः ॥

---

विरक्तता च। राजलक्ष्मीं राजश्रियं, कांचित् स्त्रियमिति च। दारुणेत्यत्र वाक्ये नञनुषङ्गो नास्ति। अभिषेकमपिनाम प्रतिपद्येत इति सम्बन्धः। अत्र दहनप्रज्वलितदेहोऽग्निदग्धशरीरः, तस्य अग्नेः शान्त्यर्थं अभिषेकं स्नानं प्रतिपद्यत इति च ध्वन्यते। पराचीनं परप्रतिकूलम्। तातश्लाघया तातविषयश्लाघया। दिवसकरप्रीत्या दिवसमुन्मुखं दिवसकरगतया भक्त्या तदुपासनार्थं स(म्मतो! वेदो)न्मुखम् इत्यर्थः। स हि दिवसकरभक्त इति पूर्वमप्युक्तम्। 'निसर्गत एव स नृपतिरादित्यभक्तो बभूव' इति। वदान्यः उदारः।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने पञ्चम उच्छ्वासः।

---

१. दहनप्रज्वलितदेहः निर्दग्धशरीरः—ख.

## अथ षष्ठ उच्छ्वासः ।

उच्चित्योच्चित्य भुवि प्रहितनिगूढाग्रदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां सङ्ग्रहं कुरुते ॥

विस्रम्भघातदोषः स्ववधाय खलस्य वीरकोपकरः ।
वनतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥

अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि, गतेषूद्वेजनीयेषु आशौचदिवसेषु, चक्षुर्दाहदायिनि दीयमाने द्विजेभ्यः शयनासनचामरातपत्रामत्रशस्त्रादिके नृपनिकटोपकरणकलापे, नीतेषु तीर्थस्थानानि सह जनहृदयैः वीरकीकसेषु, कल्पितशोकशल्ये सुधानिचयनिचिते चिताचैत्यचिह्ने, वनाय विसर्जिते महार्जिजिति राजगजे, क्रमेण च मन्देष्वाक्रन्देषु, विरलीभवत्सु विलापेषु, विश्राम्यत्यश्रुणि, शिथिलीभवत्सु निःश्वसितेषु,

---

अथ ग्रहवर्मणो[1] मालवेश्वरेण वधः, गौलेश्वरेण च राज्यवर्धनस्य वञ्चनतो वधः, तच्छ्रवणेन च हर्षस्य गौलेश्वरं प्रति कोपावेशश्च इति षष्ठोच्छ्वासार्थः । तदेतद् द्वाभ्यामार्याभ्यां सङ्गृह्याह — उच्चित्येत्यादि । उच्चित्योच्चित्य उद्धृत्योद्धृत्य । नीतानां प्रापितानाम् । सङ्ग्रहम् आदानं[2], स्वीकरणं च । विस्रम्भघातः विस्रम्भं[3] कारयित्वा वधः । निद्रातस्करः निद्रापहारीत्यर्थः ।

अथेत्यादि । प्रथमप्रेतपिण्डभुजि एकोद्दिष्टभोक्तरीत्यर्थः । उद्वेजनीयेषु बन्धुजनाक्रन्ददर्शनाद् असहनीयतया भेतव्येषु । चक्षुर्दाहदायिनि दृष्टिखेदकारिणि । अमत्रं भोजनपात्रम् । निकटोपकरणम् आसन्नपरिकरः । कीकसेषु अस्थिषु । 'कीकसं कुल्यमस्थि च' इत्यमरः । शोकशल्ये शोकहेतुशल्यभूते । चिताचैत्यचिह्ने चिताचैत्याख्यचिह्ने । चितायां रचितः सुरालयः चिताचैत्यम् । 'चैत्यं चिताङ्के बुद्धाण्ड उद्देशेऽद्रौ सुरालये' इति वैजयन्ती । आक्रन्देषु रोदनेषु ।

---

१. 'अथोग्रवर्मणो', २. 'नं, सङ्गीकरणं च'-ख. ३. 'म्भं कृत्वा'-क.

अविस्पष्टेषु हाकष्टेषु, उच्छ्वास्यमानासु व्यसनशय्यासु, उपदेशाग्रहणक्षमेषु श्रोत्रपुटेषु, अनुरोधाधानयोग्येषु हृदयेषु, विरलतां गतेषु गणेयेषु नृपगुणग्रहणेषु, प्रदेशवर्तितामाश्रयति शोके, कृतेषु कविरुदितेषु, जाते स्वप्नावशेषदर्शने हृदयावशेषावस्थाने चित्रावशेषाकृतौ काव्यावशेषनाम्नि नरनाथे, देवो हर्षः कदाचिद् उत्सृष्टसर्वव्यापारेण पुञ्जीभूतवृद्धबन्धुवर्गाग्रेसरेणावनतमूकमुखेन महाजनेनात्मानम् अकाले परिवेष्ट्यमानम् अद्राक्षीत्। दृष्ट्वा चाकरोन्मनसि— 'किमन्यद्, आर्यमागतम् आवेदयत्ययम् आगृहीतशोकाकृतो लोकाकरः' इति। वेपमानहृदयश्च पप्रच्छ प्रविशन्तम् अधिकतरपदप्रचारमन्यतमं पुरुषम्—'अङ्ग! कथय, किमार्यः प्राप्तः' इति। स मन्दमब्रवीत्— 'देव! यथादिशसि द्वारि' इति। श्रुत्वा च सोदर्यस्नेहनिहितनिरतिशयमन्युमृदूकृतमनाः कथमपि न ववाम बाष्पवारिप्रवाहोत्पीडेन सह जीवितम्।

अनन्तरं च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेनेवाक्रन्देन कथ्यमानं, दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नछत्रधारेण लम्बिताम्बरवाहिना भ्रष्टभृङ्गारग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन खञ्जत्खड्गग्राहिणा कतिपयप्रकाशदासेरकप्रायेण बहुवासरान्तरितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम्, अविरलमार्गधूलि-

---

हाकष्टेषु हाकष्टशब्देषु। उच्छ्वास्यमानासु, शयनानां विमर्दरहिततया बृंहणम् उच्छ्वासः। गणेयेषु गणनीयेषु। 'गणनीये तु गणेयम्' इत्यमरः। ग्रहणेषु उच्चारणेषु। प्रदेशः एकदेशः। कविरुदितेषु अत्ययश्लोकेषु। अङ्ग, आमन्त्रणसूचकम् अव्ययमिदम्। मन्युमृदूकृतमना इति पाठः। उत्पीडेन एकोद्योगप्रवृत्त्या।

द्वारपालमुक्तेन द्वारपालविसृष्टेन, द्वारपालैरनिरुद्धेन च। लम्बिताम्बरवाहिना पृष्ठतो विडम्बितवस्त्रग्राहेण। भृङ्गारः सौवर्णकरकः। आचमनम् आचमनपात्रम् (ചടിക്കം)। ताम्बूलिकेन ताम्बूलनियुक्तेन। प्रकाशः प्रसिद्धिः। नामग्रहणेन व्यपदेश्य इत्यर्थः। दासेरकः दासः।

---

१. 'अन्यदतो'. २. 'प्रकोष्ठतो विडम्बितवस्त्रग्राहकेण'-क.

धूसरितशरीरतया शरणीक्रियमाणमिव अशरणया क्रमागतया वसुन्धरया, हूणनिर्जयसमरसरसव्रणबन्धपट्टकैः दीपधवलैः समासन्नराजलक्ष्मीकटाक्षपातैरिव शबलीकृतकायम्, अवनिपतिप्राणपरिरक्षणार्थमिव शोकहुतभुजि हुतमांसैरतिकृशैरवयवैः आवेद्यमानदुःखातिभारम्, अपगतचूडामणिनि मलिनाकुलकुन्तले शेखरशून्यशिखे शिरसि शुचमारूढाम् मूर्तिमतीमिव दधानम्, आतपगलितबहलस्वेदबिन्दुराजिना रुदतेव पितृपादपतनोत्कण्ठितेन ललाटपट्टेन प्रथीयसा बाष्पपयःप्रवाहेण अभिमतपतिमरणमूर्च्छितामिव महीमनवरतं सिञ्चन्तम्, अनन्ततापाश्रुप्रवाहनिपतननिम्नीकृताविव दुःखक्षामौ कपोलावुद्वहन्तम्, अत्युष्णमुखमारुतमार्गगतेन द्रवतेव गलितताम्बूलरागेणाधरबिम्बेनोपलक्षितं, पवित्रिकामात्रावशेषेन्द्रनीलिकांशुश्यामायमानम् अचिरश्रुतपितृमरणशोकाग्निदग्धमिव श्रवणप्रदेशं धारयन्तम्, अस्फुटाभिव्यञ्जनेनापि अधोमुखस्तिमितनयननीलतारकमयूखमालाखचितेन शोकप्ररूढश्मश्रुश्यामलेनेव मुखशशिना लक्ष्यमाणं, केसरिणमिव महाभूभृद्विनिपातविह्वलं निरवलम्बनं, दिवसमिव तेजःपति-

---

शरणीक्रियमाणं स्थानीक्रियमाणम् । व्रणबन्धपट्टं व्रणोपनाहः । प्रथीयसेति पदं ललाटपट्टेनेति बाष्पप्रवाहेणेति च उभयत्रापि सम्बध्यते । महीं सिञ्चन्तं, प्रबोधाय इति भावः । अत्युष्णेत्यादि । द्रवता विलीयमानेन । गलितताम्बूलरागेण चर्वणाभावाद् अपगतताम्बूलरसरञ्जनेन, स्रुतताम्बूलरसनेति च । अत्युष्णमुखमारुतमार्गपतितत्वात् स्रुतताम्बूलरसेन द्रवतेवेत्यर्थः । अधरबिम्बेनोपलक्षितम् । पवित्रिकामात्रावशेषं, पवित्रिका कर्णाभरणविशेषः । पवित्रिकासाधनत्वात् पवित्रिकेत्युक्तम् । अवशिष्यत इत्यवशेषः । पवित्रिकामात्रत्वेन अवशिष्ट इत्यर्थः । पवित्रिकामात्रावशेषमिति पाठः केषाञ्चिदभिमतः । नीलिकांशुः नीलिमेत्यर्थः । व्यञ्जनं श्मश्रु । 'व्यञ्जनं लाञ्छने श्मश्रुनिष्ठानावयवेष्वपि' इति अमरः । शोकप्ररूढश्मश्रुश्यामलेन शोकेषु श्मश्रूणां वर्धनं तद्देशाचार[1]सिद्धम् । भूभृद्विनिपातः राजविनाशः, पर्वतविनाशश्च । तेजःपतिपतनं

---

१. 'तत्तद्देश'–क.

पतनपरिम्लानश्रियं श्यामीभूतं, नन्दनवनमिव भग्नकल्पपादपं निश्छायं, दिग्भागमिव प्रोषितदिक्कुञ्जरं शून्यं, गिरिमिव गुरुवज्रपतनताडितं प्रकम्पमानं, क्रीतमिव कशिम्ना, किङ्करीकृतमिव कारुण्येन, दासीकृतमिव दौर्मनस्येन, शिष्यीकृतमिव शोचितव्येन, अन्धीकृतमिव आधिना, मुष्टीकृतमिव मौनेन, पिष्टमिव पीडया, स्विन्नमिव सन्तापेन, उच्छ्वसितमिव चिन्तया, लुप्तमिव विलापेन, वृतमिव वैराग्येण, प्रत्याख्यातमिव प्रतिसङ्ख्यानेन, अवज्ञातमिव प्रज्ञया, दूरीकृतमिव दुरभिभवत्वेन, अवश्येन वृद्धबुद्धीनाम्, असाध्येन साधुभाषितानाम्, अगम्येन गुरुगिराम्, अशक्येन शास्त्रशक्तीनाम्, अपथेन प्रज्ञाप्रयत्नानाम्, अगोचरेण सुहृदनुरोधानाम्, अविषयेण विषयोपभोगानाम्, अभूमिभूतेन कालक्रमापचयानां, शोकेन कवलीकृतं, प्रविशन्तं ज्येष्ठं भ्रातरम् अपश्यत् । आवेगोद्गतकृत्स्नस्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुदगात् ।

---

राजमरणं, सूर्यगमनं च । श्यामीभूतं कृष्णवर्णीभूतं, रात्रीभूतं च । भग्नकल्पपादपः सर्वेषामभीष्टदायित्वात्[1] कल्पपादप इति राज्ञो गौणो वादः । निश्छायं निर्गतशोभं, निर्गतातपविपर्ययं च । प्रोषितः मृतः, गतश्च । दिक्कुञ्जरं महीधारणादिगुणयोगाद् राज्ञश्च दिक्कुञ्जर इति गौणवादः । गुरुवज्रपतनताडितं वज्रमिव गुरुरिति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा० सू० २. १. ५६.) इति समासः । गुरुवज्रस्यापमरणक्लेशितमित्यर्थः[2] । अन्यत्र गुरुणो वज्रस्य अशनेः पतनेन ताडितम् । प्रकम्पमानं क्लेशातिशयादिति भावः[3], चलन्तं च । कारुण्येन करुणाविषयतया । शोचितव्येन शोकेन । मुष्टीकृतं हस्तमुष्टिगतीकृतमित्यर्थः । स्विन्नं कृतस्वेदं ([illegible]) । प्रतिसङ्ख्यानेन विवेकेन । अपचयानां क्षयाणाम् । आवेगः विषादः, वेगश्च । उत्कलिका उत्कण्ठा, तरङ्गश्च । कलापोत्क्षिप्यमाणः, यथा जलोत्पीडेन तत्र निक्षिप्तः पदार्थः उत्क्षिप्यते तद्वदिति भावः ।

---

१. 'दायित्वा'–क. २. 'स्य समरक्लेशितमित्यर्थः'–ख. ३. 'शादिति भावः'–क.

अथ तं दूरादेव दृष्ट्वा देवो राज्यवर्धनः, चिरकालकलितं बाष्पवेगं मुमुक्षुः, सुदूरप्रसारितेन सकलयन्निव सर्वदुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं पुनः पतितक्षौमे क्षामे वक्षसि पुनः कण्ठे पुनः स्कन्धभागे पुनः कपोलोदरे निधाय निधाय मुखं तथा रुरोद, यथा सबन्धनानीवोदपाटयन्त हृदयानि। अश्रुस्रोतस्सिरा इवामुच्यन्त लोचनेषु लोकस्य। स्मृतनरपतिना राजभवनेनापि प्रतिशब्दकनिभेन निर्भरमिवारुद्यत। चिराच्च कथंकथमपि निर्वृष्टनयनजलः पर्जन्य इव शरदि स्वयमेव शशाम। उपविष्टश्च परिजनोपनीतेन तोयेन तत्करनखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि पक्ष्माग्रसङ्गलग्नबाष्पबिन्दुमन्दोन्मेषमुषितदर्शनं कथंकथमपि चक्षुः अक्षाळयत्। ताम्बूलिकोपस्थापितेन च वाससा चन्द्रातपशकलेनेव उष्णबाष्पदग्धं वदनमुन्ममार्ज। तूष्णीमेव च चिरं स्थित्वोत्थाय स्नानभूमिमगात्। तस्यां च स्नात्वा विस्रस्तव्यस्तकुन्तलमौलिम् अनादरान्निष्पीड्य सावशेषमन्युस्फुरितेन जिजल्पिषतेव जलधौतिसुभगमात्मानमपि चुचुम्बिषतेव चाधरेण क्षाळितस्य चक्षुषः श्वेतिम्ना शारदशशिकरविकसितविशदकुमुदवनदळावलिबलिविक्षेपैरिव दिग्देवतार्चनकर्म कुर्वाणः चतुश्शालवितर्दिकानिवेशितायाम् अप्रतिपादुकायां नीचापाश्रयनिहितैकोपबर्हणायां पर्यङ्क्किकायां निपत्य जोषमस्थात्।

---

कलितं निरुद्धम्। सकलयन् एकत्र समाहरन्। पतितक्षौमे पतितोत्तरीयक्षौमे। पर्जन्यः इन्द्रः। उन्मेषः उद्भवः। विस्रस्तव्यस्तं मुक्तबन्धनतया शिथिलम्। मौलिः केशबन्धः। धौतिः क्षाळनम्। आत्मानम्, आत्मशब्देन राज्यवर्धनस्य शरीरं विवक्षितम्। अधरेणोपलक्षितः। चतुश्शालं सञ्जवनम्। निवेशितायां स्थापितायाम्। अप्रतिपादुकायां पादधारणरहितायाम्। नीचापाश्रयनिहितैकोपबर्हणायाम् अपाश्रयशब्देन शिरोभाग उच्यते। नीचम् अनुन्नतम्। अपाश्रयनिहितमेकम् उपबर्हणम् उपाधानं यस्याः। पर्यङ्क्किका नीचखट्वा (മട്ടുപ്പലകക്കട്ടിൽ)। जोषं तूष्णीम्। 'तूष्णीमर्थे सुखं जोषम्'इत्यमरः।

देवोऽपि हर्षः, तथैव स्नात्वा धरणितलनिहितकुथाप्रसारितमूर्तिः अदूरत एवास्य तूष्णीमेवातिष्ठत् । दृष्ट्वा च दूयमानमानसमग्रजम् अस्फुटदिवास्य सहस्रधा हृदयम् । औरसदर्शनं हि यौवनं शोकस्य । लोकस्य तु नरपतिमरणदिवसादपि दारुणतरः स बभूव दिवसः । सर्वस्मिन्नेव नगरे केनचिन्नापायि, नास्नायि, नाभोजि । सर्वत्र सर्वेणारोदि केवलम् । अनेन च क्रमेणातिचक्राम दिवसः । प्रत्यग्रत्वष्टृटङ्कत्वष्टतनुरिव वमद्बहलरुधिरसरसमांसच्छेदलोहितच्छविः अपरपारावारपयसि ममज्ज मञ्जिष्ठारुणोऽरुणसारथिः । मुकुलायमानकमलिनीकोशविकलं चकले चञ्चरीककुलं कमलसरसि । सविधविरहावधिविधुरवधूबाध्यमानं बबन्ध बन्धाविव विबुद्धबन्धूकभासि भास्वति सास्रां दिशं चक्रवाकचक्रवालम् । सञ्चरन्त्याः समधुकररवं कैरवाकरं कलहंसरमणीरमणीयं माणिक्यकाञ्चीकिङ्किणीव श्रियश्चकाण । प्रकटकलङ्कमुदयमानं विशङ्कटविषाणोत्कीर्णपङ्काङ्कितशङ्करशाकरककुदकूटसङ्काशम् आकाशे

---

कुथा शय्याविशेषः ([illegible])[1] । नन्वग्रजदर्शनेऽस्य किमेवं क्लेशोऽभूदित्यत्राह—औरसेत्यादि । लोके मृतानाम् औरसदर्शनं शोकस्य यौवनं परिणामावस्था । अतो युक्त एव क्लेश इति भावः । सोदरदर्शनमिति केचित् पठन्ति । त्वष्टा देवतक्षा । टङ्कः दारणसाधनम् (ഉളി) । 'टङ्कः पाषाणदारणः' इत्यमरः । त्वष्टः तनूकृतः । 'त्वक्षू[2] तनूकरणे' इति धातुः । पारावारः समुद्रः । मञ्जिष्ठा रञ्जनद्रव्यविशेषः (മഞ്ചാടി)[3] । विकलं [4]विषण्णम् । चकले शब्दितम् । 'कल शब्दे' इति धातुः । चञ्चरीककुलं भृङ्गसमूहः । 'इन्दिन्दिरो मधुकरश्चञ्चरीको मधुव्रतः' इति वैजयन्ती । सविधः प्रत्यासन्नः । विरहावधिः विरहकालः । विरहाधिरिति वा पाठः । विरहदुःखमित्यर्थः । बाध्यमानं सविषादीक्रियमाणम् । विबुद्धं विकसितम् । विषाणोत्कीर्णं शृङ्गोत्क्षिप्तम् । शाकरः ऋषभः । ककुदं स्कन्धदेशगण्डुः ([illegible]) ।

---

१. இலக்கோட்டை, २, 'तक्षः तक्षू', ३. மஞ்சாடி, ४. 'विवर्णम्'-ख. ग.

चकाशे शशाङ्कमण्डलम् ।

अस्यां च वेलायाम् अनतिक्रमणीयवचनैः उपसृत्य प्रधानसामन्तैर्विज्ञाप्यमानः कथंकथमप्यभुङ्क्त । प्रभातायां च शर्वर्यां सर्वेषु प्रविष्टेषु राजसु, समीपावस्थितं देवं हर्षमुवाच देवो राज्यवर्धनः— 'तात! भूमिरसि गुरुनियोगानाम् । शैशव एवाग्राहि गुणवत्पताकेव भवता तातस्य चित्तवृत्तिः; यतो भवन्तमेवंविधं विधेयं विधिविधानोपनीतनैर्घृण्यमिदं किमपि बिभणिषति मे हृदयम् । नावलम्बनीया बालभावसुलभा प्रेमविलोमा वामता । वैधेय इव मा कृथाः प्रत्यूहम् ईहितेऽस्मिन् । शृणु । न खलु न जानामि लोकवृत्तम् । लोकत्रयत्रातरि मान्धातरि मृते किं कृतं पुरुकुत्सेन । भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा । महासुरसमरमध्याध्यासितत्रिदशरथे दशरथे वा रामेण । गोष्पदीकृतचतुरुदन्वदन्ते दुष्यन्ते वा भरतेन । तिष्ठन्तु तावदेते । तातेनैव शतसमधिकाध्वरधूमविसरधूसरितवासवयशसि सुगृहीतनाम्नि तत्रभवति परेततां गते पितरि किन्नाम नाकारि राज्यम् । यं च किल शोकः समभिभवति तं कापुरुषमाचक्षते शास्त्रविदः । स्त्रियो हि विषयः शुचाम् । तथापि किं करोमि स्वभावस्य । सेयं कापुरुषता वा स्त्रैणं वा, यदेवमास्वाद्यः पितृशोकहुतभुजो जातोऽस्मि । मम हि भूभृति

---

चकाशे 'काशृ दीप्तौ' इति धातुः ।

अग्राहि गुणवदित्यादि । यथा गुणवत्पताकाग्राहि तथा तातस्य चित्तवृत्तिरप्यग्राहीत्यर्थः । विधेयं विनयग्राहिणम् । 'विधेयो विनयग्राही' इत्यमरः । विलोमा अननुकूला । वामता प्रतिकूलता । वैधेयः अज्ञः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । ईहिते इष्टे । किं कृतं राज्यमेव कृतमिति भावः । गोष्पदीकृतं गोष्पदवदुत्तीर्णमित्यर्थः । गोष्पदं गवां खुररन्ध्रः । 'गोष्पदं गोखुरश्वभ्रे मानगोगम्ययोरपि' इति वैजयन्ती । परेतता मरणम् । कापुरुषं कुत्सितपुरुषम् । स्त्रैणं स्त्रीत्वम् । भूभृति राजनि, पर्वते च ।

---

१. 'तस्य'-क.

पर्यस्ते, निरवशेषतः प्रस्रवणानीव स्रुतानि। श्रुतानि अस्तमिते महति तेजसि अन्धकारीभूतदशाशस्य प्रनष्टः प्रज्ञालोकः। प्रज्वलितं हृदयम् आत्मदाहभीत इव स्वप्नेऽपि नोपसर्पति विवेकः। बलीयसा सन्तापेन जातुषमिव विलीनमखिलं धैर्यम्। पदे पदे शरोपहतेव हरिणी मुह्यति मे मतिः। पुरुषद्वेषिणीव दूरत एव भ्रमति परिहरन्ती स्मृतिः। अम्बेव तातेनैव सह गता धृतिः। वार्धुषिकप्रयुक्तानीव वित्तानि प्रतिदिवसं वर्धन्ते दुःखानि। शोकानलधूमसम्भारसम्भूताम्भोधर-भरितमिव वर्षति नयनवारि धाराविसरं शरीरम्। सर्वः पञ्चजनः

---

पर्यस्ते मृते इत्यर्थः, यथापूर्वस्थिते च। प्रस्रवणानि निर्झरनिष्यन्दाः। स्रुतानि गलितानि, गतानि च। श्रुतानि अधिगतशास्त्राणि। अस्तमिते नाशं गते, अस्ताद्रिं गते इति च। महति तेजसि, महत्तेजोभूते सूर्ये इति च। अन्धकारीभूतदशाशस्य अविषयीभूता दशा राज्यावस्था, आशा राज्यविषय-श्रद्धा च यस्य। अन्धकारीभूतदशदिश इति च। प्रज्ञालोकः बुद्धौ ज्ञानम्। आलोकशब्देन प्रकाशश्च ध्वन्यते। विवेकः हिताहितविचारः। सन्तापेन शोकेन, ऊष्मणा च। जातुषं जतुविकारम्। विलीनं नष्टं, द्रुतं च। पदे पेद क्षणे क्षणे, प्रतिचरणविक्षेपं च। शरोपहता शरविक्षता। पुरुषद्वेषिणी पुरुषद्वेषाख्यग्रहयुक्ता (ഉരെളമാന്നാധ്യാം)। परिहरन्ती वर्जयन्ती। वार्धुषिकः वृद्ध्याजीवः। वृद्धिशब्दाद् वृद्धिगर्भं प्रयच्छतीत्यर्थे 'प्रयच्छति गर्ह्यम्' (पा० सू० ४. ४. ३०.) इति सूत्रेण ठक् प्रत्ययः। वृद्धिशब्दस्य वृधुषिभावश्च। गर्ह्यत्वं च लोके व्यवह्रियमाणाया वृद्धेरप्यधिकं लाभमाकाङ्क्ष्य द्रव्यस्य प्रदानादित्यनुसन्धेयम्। प्रयुक्तानि वृद्ध्यर्थं दत्तानि। प्रयोगो हि कुसीदम्। 'प्रयोगो ग्राम्यधर्मे स्यात् कुसीदे कर्मणां विधौ।' *[इति वैजयन्ती। कुसीदं च सवृद्धिकमृणम्। 'स्यादृणं पर्युदञ्चनम्। तदवृद्धिकमुद्धारः कुसीदं तु सवृद्धिकम्' इति च वैजयन्ती। वर्धन्ते प्रभूतानि भवन्ति। अन्यत्र द्रव्यवृद्ध्या समग्राणि भवन्ति। पञ्चजनः पुरुषः। 'स्युः पुमांसः पञ्चजनाः

---

१. पुरुषिणी पुरुषाख्यग्रहयुक्ता—மூன்னோமாலொன்பதுதலையாள்—க.

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

पञ्चतां परेतः प्रयातीति वितथमिदं लपति चपलो लोकः। तातो मे हुताशनतामेव केवलमापन्नो येनैवमयमस्मान् दहति। एवमयम् असाम्परायिकमिव हृदयमवष्टभ्य व्युत्थितः शोको दुर्निवारो बाडव इव वारिराशिं, पविरिव पर्वतं, क्षय इव क्षपाकरं, राहुरिव रविं, दहति दारयति तनूकरोति कवलयति च माम्। कामं न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य महापुरुषस्य विनिपातम् अश्रुबिन्दुभिरेव केवलैरतिवाहयितुम्। राज्ये च विष इव चकोरस्य विरक्तं मे चक्षुः। बहुमृतकपटकृतावकुण्ठनां जनङ्गमाङ्गनामिव वंशवाह्यामनार्यां श्रियं निराकर्तुमभिलषति मे मतिः। क्षणमपि कुलीर इव निर्जले दग्धगृहे न पारयामि स्थातुम्। सोऽहमिच्छामि मनसि वाससीव सुलग्नं स्नेहमलमिदममलैः शिखरिशिखरप्रस्रवणस्वच्छस्रोतोम्बुभिः

---

पुरुषाः पूरुषा नराः'] इत्यमरः। पञ्चतां, शरीरादीनां यथास्वं पृथिव्यादिपञ्चस्थानगमनात् पञ्चधात्वम्। परेतः मृतः। साम्परायिकं युद्धसन्नद्धम्। साम्परायो हि युद्धम्। अवष्टभ्य आक्रम्य। व्युत्थितः विशेषेणोद्गतः, अत्यन्तविरोधमाचरितः। 'व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च' इत्यमरः। शोक इत्यादि। अयं शोको मां दहति च, दारयति च, तनूकरोति च, कवलयति च। अन्यत्र बाडवादीनां यथाक्रमं दहत्यादीनि आख्यातानीति बोद्धव्यम्। बाडवः बडवानलः। पविः कुलिशम्। अतिवाहयितुं यापयितुं, गमयितुं च। विरक्तम् अपरक्तम्। अन्यत्र विगतरागम्। विषदर्शने चकोरस्य चक्षुः विरक्तं भवतीति भावः। बह्वित्यादि। बहवो मृताः मरणं प्राप्ता यस्य (कपटेन) तेन कृतावकुण्ठनाम्। नाशितबहुजनेन स्वकपटेनात्मानं गोपयित्वा स्थितामित्यर्थः। अन्यत्र बहूनां मृतकानां प्रेतानां पटैः कृतावकुण्ठनां कृतप्रावरणाम् जनङ्गमाङ्गनां चण्डालस्त्रियम्। वंशवाह्यां वंशेन वहनीयाम्। अन्यत्र बवयोरभेदः। वंशबाह्यां कुलहीनामित्यर्थः। अनार्याम् असाधुम्, अशोभनशीलां च। निराकर्तुं निरसितुम्। कुलीरः कर्कटकः (ഞണ്ട്)। पारयामि शक्नोमि। स्नेहमलं सङ्कलङ्कः,

क्षालयितुमाश्रमपदे । यतस्त्वमन्तरितयौवनसुखाम् अनभिमतामपि जरामिव पूरु गुरोराज्ञया गृहाणेमां राज्यचिन्ताम् । त्यक्तसकलबालक्रीडेन हरिणेव दीयतामुरो लक्ष्म्यै । परित्यक्तं मया शस्त्रम्' इत्यभिधाय खड्गग्राहिणो हस्तादादाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम् ।

अथ तच्छ्रुत्वा निशितशिखरेण शूलेनेव ताडितः प्रविदीर्णहृदयो देवो हर्षः समचिन्तयत् – 'किन्नु खलु मामन्तरेणार्यः केनचिदसहिष्णुना किञ्चिद् ग्राहितः कुपितः स्यात् । उत अनया दिशा परीक्षितुकामो माम् । उत शोकजन्मा चेतसः समाक्षेपोऽयम् । आहोस्विदार्य एवायं न भवति । किं वा आर्येणान्यदेव तावदभिहितम्, अन्यदेव च अश्रावि मे शोकशून्येन श्रवणेन्द्रियेण । आर्यस्य वा अन्यदेव विवक्षितम् अन्यदापतितं मुखे । अथवा सकलवंशविनाशाशनिपातनोपायोऽयं वा विधेः । मम वा निखिलपुण्यपरिक्षयोपक्षेपः कर्मणाम् । अननुकूलसमग्रग्रहचक्रवालविलसितं वा । अथवा तातविनाशनिःशङ्ककलिकालक्रीडितं वा । येनायं यः कश्चिदिव यत्किञ्चिनकारिणं माम् अपुष्यभूतिवंशसम्भूतमिव, अताततनयमिव, अनात्मानुजमिव, अभक्तमिव, अदृष्टदोषमपि श्रोत्रियमिव सुरापाने, सद्भृत्यमिव स्वामिद्रोहे, सज्जनमिव

---

तैलमालिन्यं च । क्षालयितुम् अपनेतुमित्यर्थः, शोधयितुं च । अन्तरितयौवनसुखां विषयोपभोगसुखानामनवकाशदायिनीम् इत्यर्थः । अन्यत्र इन्द्रियपाटवहान्या नाशितविषयोपभोगसुखाम् । जरामिव पूरुर्गुरोरिति — पुरा यौवनसुखानि निर्विविक्षतः पूरुः स्वपितुर्ययातेः स्वयौवनं दत्त्वा तदीयां जरां गृहीत्वा तपः चचारेति कथा । लक्ष्म्यै राजलक्ष्म्यै, श्रियै च ।

मामन्तरेण मामुद्दिश्य । दिशा उपायेन इत्यर्थः । समाक्षेपः व्यामोहः । वंशः कुलं, वेणुरिति च । उपक्षेपः प्रस्तावः । यत्किञ्चनकारिणं यथारुचितकारिणमित्यर्थः । अताततनयं प्रसिद्धचरितस्य प्रभाकरवर्धनस्य अनात्मजम्

---

१. 'गृहीतवानिति'-क,

नीचोपसर्पणे, सुकलत्रमिव व्यभिचारे, अतिदुष्करे कर्मणि समादिष्टवान्। अथवा तदेतत्तावदनुरूपं, यत् शौर्योन्मादमदिरोन्मत्तसमस्तसामन्तमण्डल-समुद्रमथनमन्दरे तादृशि पितरि प्रमीते, तपोवनं वा गम्यते, वल्कलानि वा गृह्यन्ते, तपांसि वा सेव्यन्ते। या तु मयि राज्याज्ञा सा दग्धेऽपि दाहकारिणी मय्यवग्रहग्लापिते धन्वनीव अङ्गारवृष्टिः। तदसदृशम् आर्यस्य। यद्यपि च रिपुरनभिमानः, द्विजातिरनेषणः, मुनिररोषणः, कपिरचपलः, कविरमत्सरः, वणिगतस्करः, प्रतिरोधकः प्रियः, प्रियजानिरकुहनः, साधुरदरिद्रः, द्रविणवानखलः, कीनाशोऽनक्षिगतः, मृगयुरहिंस्रः, पाराशरी ब्रह्मण्यः, सेवकः सुखी, कितवः कृतज्ञः,

---

इत्यर्थः। (तच्छ्रःआत्मशब्देन) राज्यवर्धनः परामृश्यते। नीचोपसर्पणे खलोपगमने। प्रमीते मृते। 'प्रमीतः संस्थितो मृतः' इति हलायुधः। दग्धे दुःखतप्ते। अन्यत्र वनाग्निना निर्दग्धसमस्तवृक्षकेऽपि। दाहः क्लेशः, दहनं च। धन्वनि मरुदेशे। 'समानौ मरुधन्वानौ' इत्यमरः। यद्यपीत्यादि— अभिमानादिदोषरहिता रिपुप्रभृतयो राजसून्वन्ता जगति दुर्लभा यद्यपि तथापि ममार्य एवार्य इत्यन्वयः। अनभिमानः हिंसारहितः; अहिंसाशील इत्यर्थः। 'अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः' इत्यमरः। अनेषणः याच्ञारहितः। 'अध्येषणैषणा याच्ञा' इति हलायुधः। प्रतिरोधकः पान्थानामपहर्ता। प्रियजानिः प्रियभार्यः। जायाशब्दस्य 'जायाया निङ्' (पा० सू० ५. ४. १३४.) इति निङादेशः। अकुहनः दम्भशीलतारहितः। 'कुहना दम्भशीलता' इति वैजयन्ती। अकुहक इति च पाठः। कुहकं माया। 'माया तु कुहकं जालम्' इत्यमरः। कुहकरहितः अकुहकः; अकापटिक इत्यर्थः। 'कुहकः स्यात् कापटिकः' इति वैजयन्ती। साधुः विद्वान्, सज्जनो वा। द्रविणवान् धनवान्। कीनाशः कृपणः। 'कदर्यदीनकीनाशकिम्पचानामितम्पचाः' इति हलायुधः। अनक्षिगतः अद्वेष्यः। मृगयुः व्याधः। पाराशरीः बौद्धमुनिः। ब्रह्मण्यः ब्राह्मणहितः। 'ब्रह्मण्यं ब्रह्मणे हितम्' इति हलायुधः। अथवा ब्रह्म वेदः। 'तत्र साधुः' (पा० सू० ४. ४. ९८.) ब्रह्मण्यः। उभयत्र अमरः— 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इति। कितवः द्यूतकारी, 'धूर्तोऽक्षदेवी कितवः' इत्यमरः।

**परिव्राडबुभुक्षुः, अशठः प्रियवाक्, अमात्यः सत्यवादी, राजसूनुरदुर्विनीतश्च जगति दुर्लभः, तथापि ममार्य एवार्यः । को हि नाम तद्विधे निपतिते राजगन्धकुञ्जरे जनयितरि, ईदृशे च विफलीकृतविशालशिलास्तम्भाभभुजे भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि तपोवनं गच्छति, सकललोकलोचनजलपातापवित्रं मृद्गोलकं वसुधाभिधानं धनमदखेल-निखिलखलमुखविकारलक्ष्माख्यायमाननीचाचारां च श्रीसंज्ञिकां सुभट-कुटुम्बकर्मकरकुम्भदासीं चण्डालोऽपि कामयेत । कथमिव सम्भावितम् अत्यन्तमनपचितम् अनुचितमिदमार्येण। किमुपलक्षितमनवदातं मयि। किं वास्य चेतसश्च्युतः सौमित्रिः, विस्मृता वा वृकोदरप्रभृतयः। अनपेक्षितः भक्तजना स्वार्थैकनिष्पादननिष्ठुरासीदियमार्यस्य ईदृशी प्रभविष्णुता ।**

---

परिव्राड् भिक्षुः । इदमत्र विवक्षितम्— 'अष्टौ ग्रासा मुनेर्भक्ष' इति शास्त्रतो यतीनां नित्यमष्टावेव ग्रासा भक्ष्याः । अधिकभक्षणे प्रत्यवायोऽस्ति । अतोऽष्टभिर्ग्रासैः क्षुन्निवृत्तेरनुपजातत्वात् परिव्राट् सर्वदा बुभुक्षित एवेति भावः । *[प्रियवाक् प्रियवादी । राजसूनुरदुर्विनीतश्च जगति दुर्लभः । यथा अभिमानादिदोषरहिता रिपुप्रभृतयो दुर्लभाः तथा राजसूनुरपि अदुर्विनीतो दुर्लभ इत्यर्थः। अदुर्विनीतत्वं च जनकज्येष्ठादीनाम् अहिंसकत्वम् । तथापि मम आर्य एवार्यः । नाहं तादृशो दुर्विनीतो राजपुत्र इति भावः।] अर्यः स्वामी । 'अर्यः स्वामिवैश्ययोः' (पा० सू० ३. १. १०३.) इति निपातः । 'स्यादर्य-स्वामिवैश्ययोः' इत्यमरः। गन्धकुञ्जरे मत्तगजे। मृद्गोलकं मृत्पिण्डम् । 'गोलको मणिके पिण्डे' इति वैजयन्ती। खेलं निकृष्टम्। 'प्रतिकृष्टावद्यखेलनिकृष्टा-णककुत्सिताः' इति वैजयन्ती । विकारलक्ष्म विकाराख्यं लक्षणम्; विकाराश्च भ्रूक्षेपभ्रूनतादयः[1] । कुम्भदासी घटवाहिका दासी । अनपचितम् अप्रशस्तम् । अनवदातम् अशुद्धम् । कर्मेति शेषः । प्रभविष्णुता प्रभुत्वम् । 'प्रभुता

---

* कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

१. 'भ्रूक्षेपणभुग्नोष्ठादयः'–क.

अपि च आर्ये तपोवनं गते जिजीविषुः को हि नाम महीं मनसापि ध्यायेत्। कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटपाटितमत्तमातङ्गमदच्छटाच्छुरितचारुकेसरसटाभारभासुरमुखे केसरिणि वनविहाराय विनिर्गते निवासगिरिगुहां कः पाति पृष्ठतः। प्रतापसहाया हि सत्त्ववन्तः। कश्चपलां राजलक्ष्मीं प्रति अनुरोधोऽयमार्यस्य, यदीयमपि वनतरुरुचिरचीरचीवरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगीव नीयते जरां जालिनी। किं वा मम अनेन बहुधा वृथाविकल्पितेन। तूष्णीमेवार्यमनुगमिष्यामि। गुरुवचनातिक्रमकृतं च किल्बिषं मे तपोवने तप एवापाकरिष्यति' इत्यवधार्य मनसा प्रथमतरं गतस्तपोवनम् अधोमुखस्तूष्णीमेवातिष्ठत्।

अत्रान्तरे पूर्वादिष्टेन रुदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु निर्दयकरतलताडनभियेव क्वापि गतहृदये रारटति स्त्रैणे, तारमब्रह्मण्यमित्यूर्ध्वदोष्णि विरुवति विप्रजने, पादप्रणतिपरे फूत्कुर्वति पौरवृन्दे, विद्राति विद्रुतचेतसि चिरन्तने परिजने, परिजनावलम्बिते वेपमानवपुषि पर्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतमनसि वर्षीयसि विशति बन्धुवर्गे, निराशेषु नखलिखित-

---

प्रभविष्णुता' इति वैजयन्ती। चपेटः विस्तृताङ्गुलिः पाणिः। 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ' इत्यमरः। पाटितं भेदितम्। कश्चेत्यादि— इयं लक्ष्मीरपि तपोवने स्वेन जरां नीयते यदि, इमां प्रत्यार्यस्य कोऽनुरोध इत्यर्थः। अनुरोधः तात्पर्यम्। जालिनी मायावती। अयं श्रियो हेयतोक्ति[2]प्रकारः।

वस्त्रकर्मान्तिकेन वस्त्रदानाधिकारिणा (പരിവട്ടമെടുപ്പുകാർ)। रारटति अत्यर्थं रटति, रसति। स्त्रैणे स्त्रीसमूहे। अब्रह्मण्यमित्यूर्ध्वदोष्णीति पाठः। अब्रह्मण्यम् आक्रोशावादः। अनाथाः प्रजा विसृज्य राजा गच्छतीत्येवंरूप आक्रोशो विवक्षितः। विरुवति क्रन्दति। विद्राति विषीदति। वर्षीयसि वृद्धतरे।

---

१. आत्मनी-क. २. 'हेयतोमति'-ख. गं.

मणिकुट्टिमेष्वधोमुखेषु निःश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्वासु प्रजासु, सहसैव प्रविश्य शोकविक्लवः प्रक्षरितनयनयुगलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सदसि आत्मानमपातयत्।

अथ सम्भ्रान्तो भ्रात्रा सह स्वयमेव देवो राज्यवर्धनः तं पर्यपृच्छत्— 'भद्र! भण किमस्मद्व्यसनविवर्धनबद्धधृतिः अवनिपतिमरणमुदितमतिः अधृतिकरमपरमधिकतरम् इतः समुपनयति विधिः' इति। स कथंकथमप्यकथयत्— 'देव! पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति, यतो यस्मिन्नेवाहनि अवनिपतिरुपरत इत्यभूद् वार्ता, तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः। भर्तृदारिकापि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चोराङ्गनेव संयता कन्याकुब्जे कारायां निक्षिप्ता' इति। किंवदन्ती च यथा किल अनायकं साधनं जिघृक्षुः स दुर्मतिरेनामेव भुवमाजिगमिषति। इति विज्ञापिते प्रभुः प्रभवति' इति।

तं च तादृशम् अनुत्प्रेक्षितम् असम्भावनीयम् अपरमाकस्मिकं व्यतिकरमाकर्ण्याश्रुतपूर्वत्वात् परिभवस्य, परिभवासहिष्णुतया च

---

प्रस्थितासु (प्रजातः वक्रासु ? प्रजासु अपक्रान्तासु)।

इतः राजमरणात्। छिद्रं प्रमादस्थानम्। पिशाचपक्षेऽशुचित्वदशा। आत्मनः सुकृतेन आत्मशब्देन मालवः परामृश्यते। संयता बद्धा। कन्याकुब्जे नगरविशेषे। 'कन्याकुब्जा महोदया' इति हलायुधः। कारायां बन्धनागारे (சிறைக்கூடம்)। 'कारा स्याद् बन्धनालये' इत्यमरः। किंवदन्ती जनवादः। साधनं गजतुरगादिपरिकरम्।

आकस्मिकम् अकारणसम्भूतम्, अचिन्तितोपनतमित्यर्थः। व्यतिकरं

---

१. சிறைக்கூடம்-क.

स्वभावस्य, दर्पबहुलतया च नवयौवनस्य वीरक्षेत्रसम्भवाच्च जन्मनः कृपाभूमितया च स्वसुः, सोदर्यस्नेहाच्च स ताहशो बद्धमूलोऽप्यत्यन्तगुरुरेकपद एवास्य ननाश शोकावेगः। विवेश च सहसा केसरीव गिरिगुहागृहं गम्भीरहृदयं भयङ्करः कोपावेगः। केशिसूदनशङ्काकुलकालियकुलभङ्गुरभ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्वसेव प्रथीयसि ललाटपट्टे भीषणा भ्रुकुटिरुदभिद्यत। दर्पात् परामृशन्नखकिरणसलिलनिर्झरैः समरभारसम्भावनाभिषेकमिव चकार दिङ्नागकुम्भकूटविकटस्य बाहुशिखरस्य दक्षिणस्य वामः पाणिपल्लवः। सञ्जलत्स्वेदसलिलपूरितोदरो निर्मूलं मालवोन्मूलनाय गृहीतकोश इव दुर्मदश्रीकचग्रहोत्कण्ठयेव च कम्पमानः पुनरपि समुत्ससर्प सर्पभीषणं कृपाणं पाणिरितरः। शस्त्रग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्टिवृद्धिविधुतसिन्दूरधूलिरिव कपिलः कपोलयोरदृश्यत रोषरागः। समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहङ्कार इव समारुरोह वाममूरुदण्डमुत्तानितो निष्ठुरश्चरणो दक्षिणः। निष्ठुराङ्गुष्ठकषणनिष्ठ्यूतधूमलेखो निर्वीरोर्वीकरणाय विमुक्ताशिख इव

---

वृत्तान्तम्। वीरक्षेत्रं वीरोत्पत्तिस्थानम्। गम्भीरहृदयम् अगाधचित्तं, गम्भीरोदरप्रदेशं च। कालियेत्यादि। कालियकुलवद् भङ्गुरो भ्रूभङ्ग एव तरङ्गो यस्याः। अन्यत्र कालियकुले भङ्गुरो भ्रूभङ्गाकारस्तरङ्गो यस्याः। श्यामायमाना उभयत्र समानम्। यमस्वसा यमुना। परामृशन् स्पृशन्। गृहीतकोशः, कोशः शपथविशेषः। स च उग्रदेवतानां स्नानोदकस्य क्वाथितस्य प्रसृतित्रयपानरूपः। उभयत्र याज्ञवल्क्यः— 'तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये' इति, 'देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत्। संश्राव्य पाययेत् तस्माद् जलात्तु प्रसृतित्रयम्॥' इति च। अत्र तु शपथाङ्गस्य पानस्य करणार्थं गृहीतजलमित्येतावदेव विवक्षितम्। विधुतः विक्षिप्तः। रोषरागः रोषजातवर्णः। उत्तानितः उन्मुखः। ऊर्ध्वतलगत इत्यर्थः। निष्ठ्यूतः निर्गतः। विमुक्तशिखः प्रतिज्ञया मुक्तकेशबन्धः।

---

'तुल्या'—ख.

क्लिलेख मणिकुट्टिममितरः पादपद्मः। दर्पस्फुटितसरसव्रणोच्चलितरुधिरच्छटावसेकैः शोकविषप्रसुप्तं प्रबोधयन्निव पराक्रममनुजमवादीत्—'आयुष्मन्! इदं कुलगृहम्, परिजनोऽयम्, इयं भूः, भूपतिभुजपरिघपालिताश्च इमाः प्रजाः। गतोऽहमद्यैव मालवकुलप्रलयाय। इदमेव तावद्वल्कलग्रहणम्, इदमेव च तपः शोकोपशमनोपायश्चायमेव यदत्यन्ताविनीतारिनिग्रहः। सोऽयं कुरङ्गकैः कचग्रहः केसरिणः, भेकैः करपातः कालसर्पस्य, वत्सकैर्बन्दिग्रहो व्याघ्रस्य, अलगर्दैर्गलाक्षेपो गरुडस्य, दारुभिर्दाह्यादेशो दहनस्य, तिमिरैस्तिरस्कारो रवेः, यो मालवैः परिभवः पुष्यभूतिवंशस्य। अन्तरितस्तातो मे महीयसा मन्युना। तिष्ठन्तु सर्व एव राजानः करिणश्च त्वयैव सार्धम्। अयमेको भण्डिरयुतमात्रेण तुरङ्गमाणामनुयातु माम्' इत्यभिधाय चानन्तरमेव प्रयाणपटहमादिदेश।

तं च तथा समादिशन्तमाकलय्य जामिजामातृवृत्तान्तप्रकोपाधानदूयमाने मनसि निवर्तनादेशेन दूरप्ररूढप्रणयपीड इव प्रोवाच देवो हर्षः—'कमिव हि दोषमार्यः पश्यति मयाप्यनुगम्यमानः। यदि बाल इति नितरां तर्हि न परित्याज्योऽस्मि। रक्षणीय इति भवद्भुज-

---

उच्चलितं सहसोद्गतम्। अवसेकैरित्यादि। विषप्रसुप्तस्य अभिमन्त्रितजलाभिषेकसमाधिरत्र विवक्षितः। प्रलयाय नाशाय। कुरङ्गकैः मृगैः। भेकैः मण्डूकैः। करपातः करक्षेपः। वत्सकैः गवां बालवत्सैः। बन्दिग्रहः बन्दिग्रहणम् (ചിറപിടിക്കൽ)। अलगर्दैः जलव्यालैः (നീർക്കോലി)। 'अलगर्दो जलव्यालः' इत्यमरः। गलाक्षेपः गलाकर्षणम्। दारुभिर्दाह्यादेशः दहनस्य। दाह्यादेशः, दाह्यत्वेन नियोगः। सर्वपदार्थानां दाहकभूतस्याग्नेः दाह्यभूतैः दारुभिर्दग्धुं निदेश इत्यर्थः।

आकलय्य बुद्ध्वा। जामिः स्वसा। 'जामिः स्वसृकुलस्त्रियोः' इति वैजयन्ती। यदि बाल इत्यत्र यदिशब्द उत्तरत्र सम्बन्धनीयः। इदमव्ययं

---

१. சிறைபிடிக்கை-क.

पञ्जरं रक्षास्थानम्। अशक्त इति क्व परीक्षितोऽस्मि। संवर्धनीय इति वियोगस्तनूकरिष्यति। अक्लेशसह इति स्त्रीपक्षे निक्षिप्तोऽस्मि। सुखमनुभवत्विति त्वयैव सह तत्प्रयाति। महानध्वनि क्लेश इति विरहाग्निः अविषह्यतरः। कलत्रं रक्षत्विति श्रीस्ते निस्त्रिंशे निवसति। पृष्ठतः शून्यमिति तिष्ठत्येव ते प्रतापः। राजकमनधिष्ठितमिति तत् सुबद्धमार्यगुणैः। न बाहुः साहाय्यं सहत इति व्यतिरिक्तमेव मां गणयसि। प्रलघुपरिकरः प्रयामीति पादरजसि कोऽतिभारः। दुर्योगमनमसाम्प्रतम् इति मामनुगृहाण गमनाभ्यनुज्ञया। कातरो भ्रातृस्नेह इति सदृशो दोषः। का चैवमात्मम्भरिता भुजस्य ते यदेकाकी क्षीरोदफेनपटलपाण्डरममृतमिव यशः पिपासति। अवञ्चितपूर्वोऽस्मि प्रसादेषु। तत् प्रसीदत्वार्यो नयतु मामपि' इत्येवमभिधाय क्षितितलविनिहितमौलिः पादयोरपतत्।

तमुत्थाप्य पुनरग्रजो जगाद— 'तात! किमेवम् अतिमहारम्भपरिग्रहेण गरिमाणमारोप्यते बलादतिलघीयानप्यहितः। हरिणार्थम् अतिह्रेपणः सिंहसङ्घातसन्नाहः। तृणानामुपरि कति कवचयन्त्याशुशुक्षणयः। अपि च, तवाष्टादशद्वीपाष्टमङ्गलमालिनी मेदिन्यास्त एव विक्रमस्य विषयः। न हि कुलशैलनिवहवाहिनो वायवः सन्नह्यन्ति

---

पक्षान्तरे वर्तते। स्त्रीपक्षे स्त्रीतुल्यत्वे। श्रीस्ते निस्त्रिंशे निवसति। श्रीरेव कलत्रमिति भावः। आत्मम्भरिता जठरपूरकत्वम् (വയറുതാരിത്തരം)। 'फलेग्रहिरात्मम्भरिश्च' (पा० सू० ३. २. २६.) इति निपातः। 'उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके' इत्यमरः।

आरम्भः उद्योगः। हरिणार्थं हरिणानां निवृत्तये। अर्थशब्दो निवृत्तिवचनः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। ह्रेपणः लज्जाकरः। कति कियत्परिमाणाः। कवचयन्ति कवचं बध्नन्ति। अष्टमङ्गलं मङ्गलाष्टकम्। उक्तं च— 'दर्पणं पूर्णकुम्भं च वृषभं चामरद्वयम्। श्रीवत्सः स्वस्तिकः शङ्खो दीपो दैवाष्टमङ्गलम्॥' इति। मेदिनी आस्त इति

तरले तूलराशौ। सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्त्यणीयसि वल्मीके। ग्रहीष्यसि सकलपृथिवीपतिप्रलयोत्पातमहाधूमकेतुं मान्धातेव चारुचामीकरपतङ्गपत्रलतालङ्कारालङ्कृतकायं कार्मुकं ककुभां विजयाय। मम तु दुर्धरायामस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षम्यताम् अयमेकाकिनः कोपकवलग्रह एकः। तिष्ठतु भवान्' इत्यभिधाय तस्मिन्नेव वासरे निर्जगाम। जगाम चाभ्यमित्र्यम्।

अथ तथागते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च जामातरि, मृतायां च मातरि, संयतायां च स्वसरि, स्वयूथभ्रष्ट इव वनकरी, देवो हर्ष एकाकी कथंकथमपि कालमनैषीत्। अतिक्रान्तेषु बहुषु वासरेषु च कदाचित् तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरः त्रिभागशेषायां त्रियामायां यामिकेन गीयमानामार्यां शुश्राव—

'द्वीपोपाहितगुणमपि समुपार्जितरत्नराशिसारमपि।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति॥'

तां च श्रुत्वा देवो हर्षः सुतरामनित्यताभावनया दूयमानमानसः क्षीणभूयिष्ठायां क्षपायां कथंकथमपि क्षणमिव निद्रामलभत। स्वप्ने

---

पदच्छेदः। वाहिन उत्क्षिप्य हरणे शक्ता इत्यर्थः। वप्रप्रणयः वप्रेषु दन्तप्रहारादिसङ्गः। वप्रपरिणाम इति केचित् पठन्ति। परिणमन्ति दन्तादिना प्रहरन्ति। उत्पातमहाधूमकेतुं उत्पातरूपोद्गतधूमध्वजम्। पतङ्गपत्रलता पक्षिरूपा पत्रलता। दुर्धरायां दुर्वारायाम्। क्षुधि बुभुक्षायाम्। अभ्यमित्र्यः अमित्राभिमुखगामी। 'अभ्यमित्राच्छ च' (पा० सू० ५. २. १७.) इति यत्प्रत्ययः। 'यो गच्छत्यलं विद्विषतः प्रति। सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि॥' इत्यमरः। अभ्यमित्रमिति च पाठः।

द्वीपेत्यादि। अनयार्यया, राज्यवर्धनस्य विनिपातो भविष्यतीति सूच्यते। द्वीपोपाहितगुणं द्वीपान्तरेष्वपि प्राप्तकीर्तिम्। उपाहितशब्दस्य 'हि गतौ' इति धातुः। अन्यत्र द्वीपे उपाहिता निबद्धा गुणा रज्जवो यस्य। समुपार्जितेत्यादि उभयत्र समानम्। पोतं यानपात्रम् (ഥര്ര്ഥര്ര)।

चार्वाङ्कितं लोहस्तम्भं भज्यमानमपश्यत्। उत्कम्पमानहृदयश्च प्रत्यबुद्ध्यत। अचिन्तयच्च— 'किं नु खलु मामेवममी सन्ततम् अनुबध्नन्ति दुःस्वप्नाः। स्फुरति च दिवानिशम् अकल्याणाख्यानविचक्षणं दक्षिणेतरमक्षि मे। दारुणाश्च अक्षुद्रक्षितिपक्षयमाचक्षाणाः क्षणमपि न शाम्यन्ति पुनरप्युत्पाताः। प्रत्यहं राहुरविकलकायबन्ध इव कबन्धवति ब्रध्नबिम्बे विभाव्यते। घटमानास्तपःकरणकालकवलितानिव धूसरितसमग्रग्रहान् उद्गिरन्ति धूमोद्गारान् सप्तर्षयः। दिने दिने दारुणा दिग्दाहा दृश्यन्ते। दिग्दाहभस्मकणनिकरा इव निर्वाणतेजसो निपतन्ति नभस्तलात् तारागणाः। तारापातशुचेव निष्प्रभः शशी। निशि निशि तत इतः प्रज्वलन्तीभिरुल्काभिरुदग्रं ग्रहयुद्धमिव वियति विलोकयन्ति विलोलतारकाः ककुभः। राज्यसङ्क्रान्तिसूचकः सञ्चारयतीव क्वापि वहद्बहलरजःपटलकलिलकर्करशर्कराशकलशात्कारी मारुतो महीम्। न खलु कुशलमिव पश्यामि। लग्नस्यास्मिन् अस्मद्वंशे करिण इव करेण करीरं कोमलमपि कवलयतः कृतान्तस्य कः परिपन्थी। सर्वथा स्वस्ति

---

भज्यमानं खण्ड्यमानम्। अकल्याणम् अशुभम्। घटमानाः पङ्क्तिरूपेण स्थितं विहाय पुञ्जीभवन्तः। निर्वाणतेजाः शान्तज्योतिः, शान्ताग्निश्च। निशिनिशीत्यादि। अत्र तमसावृतानां द्रष्टव्यपदार्थानां प्रकाशनसाधनम् उल्काः कृत्वा विलोकयन्तीनां स्त्रीणां समाधिरुक्तः। उल्काभिः उल्मुकैः (०||०||० ०|०||०|) । ग्रहयुद्धम् एकत्र मार्गे सङ्गतयोर्द्वयोर्ग्रहयोः परस्परं विजित्य तेनैव गमनाभिलाषो ग्रहयुद्धमिति ज्यौतिषिकाः। ग्रहाणां समरमिति च। विलोलतारकाः विलोलनक्षत्राः, विलोलाक्षिकनीनिका इति च। उत्पातलक्षणानि उल्कापातो ग्रहयुद्धं नक्षत्रचलनं चाभूवन्नित्यर्थः। कलिलकर्करशर्कराशकलः सम्बद्धकठिनक्षुद्रपाषाणखण्डः। शात्कारी शात्कारशब्दयुक्तः। लग्नस्येत्यादि। अस्मिन् अस्मद्वंशे लग्नस्यासत्कुले सक्तस्य। करेण करीरं हस्तेन करिणां क्षेपकम्। हस्तेन करिणामपि क्षेपणे शक्तम्। कोमलं बालमपि पुरुषं कवलयतः कृतान्तस्य दैवस्य कः परिपन्थी को निरोधकः, नास्तीत्यर्थः। करीरमिति

भवत्वार्याय' इति चिन्तयित्वा अन्तर्भिन्नं भ्रातृस्नेहकातरं द्रवदिव हृदयं कथंकथमपि संस्तभ्योत्थाय यथाक्रियमाणं क्रियाकलापमकरोत्।

आस्थानगतश्च सहसैव प्रविशन्तम्, अनुप्रविशता विषण्णवदनेन लोकेनानुगम्यमानम्, असह्यदुःखोष्णनिःश्वासधूमरक्ततन्तुनेव मलिनेन पट्टेन प्रावृतवपुषं, जीवितधारणलज्जयेव अवनतमुखं, नासावंशस्याग्रे ग्रथितदृष्टिं, दुःखदूरप्ररूढरोम्णा मूकेनापि मुखेन स्वामिव्यसनमाविच्छिन्नैः अस्रबिन्दुभिर्विज्ञापयन्तं, कुन्तलनामानं बृहदश्ववारं राज्यवर्धनस्य प्रसाद-भूमिं प्रज्ञाततमं ददर्श। दृष्ट्वा च तदा जाताशङ्कः चक्षुषि सलिलेन, मुखशशिनि श्वसनेन, हृदये हुताशनेन, उत्सङ्गे भुवा, दारुणाप्रियश्रवण-समये सममिव सर्वेष्वङ्गेष्वगृह्यत लोकपालैः। तस्माच्च हेलानिर्जित-मालवानीकमपि गौडाधिपाधमेन मिथ्योपचारोपचितविश्वासं मुक्त-शस्त्रम् एकाकिनं विस्रब्धं स्वभवन एव भ्रातरं व्यापादितं शुश्राव।

श्रुत्वा तु महातेजस्वी प्रचण्डकोपपावकप्रसरपरिपीयमानशोकावेगः

---

पदस्य 'ईर क्षेपणे' इति धातुः। वंशे वेणौ प्ररूढं कोमलं करीरमङ्कुरं करेण गृहीत्वा कवलयतो लम्रस्य मत्तस्य करिण इव। दृष्टान्ते करीरशब्दो वंशाङ्कुर-वाची। लम्रशब्दो मत्तगजवाची। उभयत्र वैजयन्ती— 'करीरो ना कटे न स्त्री पादपे वैणवाङ्कुरे', 'लम्रो मदकला मत्तः' इति।

धूमरक्तं धूमेन रञ्जितम्। बृहदश्ववारं महदश्वारोहम्[1]। दृष्ट्वा चेत्यादि। सलिलेन अश्रुणा। अन्यत्र सलिलशब्देन तस्याधिदेवता वरुणो लक्ष्यते। श्वसनेन श्वासेन, वायुना च। हुताशनेन, अनेन सन्तापो लक्ष्यते, अग्निना च। उत्सङ्गे भुवा भूमिपतनेनेति भावः। अन्यत्र भूमेर्लोकपालेषु अन्तर्भावश्चिन्त्यः। अथवा लोकशब्दः स्थावरजङ्गमात्मकेषु पदार्थेषु वर्तते। तान् धारणेन पालयन्ति इति व्युत्पत्त्या लोकपालत्वमङ्गीकर्तव्यम्। व्यापादितं हतम्।

महातेजस्वी महाप्रभावः। तेजस्तु परिभवासहिष्णुता। उक्तं च— 'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्। प्राणात्ययेऽप्यसहनं तत्तेजः

---

१. 'बृहदश्वारोहं'-ख. ग.

सहसैव प्रजज्वाल। ततश्च अमर्षविधुतशिरःशीर्यमाणशिखामणिशिखाशकलम् अङ्गारकिताङ्गमिवरोषाग्निमुद्वहन्, अनवरतस्फुरितेन पिबन्निव सर्वतेजस्विनामायूंषि रोषनिर्भुग्नेन दशनच्छदेन, लोहितायमानलोचनालोकलेपैर्दिग्दाहानिव दर्शयन्, रोषाग्निनापि असह्यसहजशौर्योष्मणा दह्यमान इव वितन्यमानस्वेदसलिलशीकरदुर्दिनः, स्वावयवैरपिअदृष्टकोपभीतैरिव कम्पमानैरुपेतः, हर इव कृतमहाभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः, सूर्यकान्तशैल इव परतेजःप्रसरदर्शनप्रज्वलितः, क्षयदिवस इव उदितद्वादशदिनकरदुर्निरीक्ष्यमूर्तिः, महोत्पातमारुत इव सकलभूभृत्कम्पकारी, विन्ध्य इव विवर्धमानविग्रहोत्सेधः, महाशीविष इव दुर्नरेन्द्राभिभवरोषितः, पारीक्षित इव सर्वभोगिदहनोद्यतः, वृकोदर इव रिपुरुधिरपानतृषितः, सुरगज इव प्रतिपक्षवारणप्रधावितः, प्ररोह इव पौरुषस्य, उन्माद इव मदस्य, आवेश इव अवलेपस्य, तारुण्यावतार

---

समुदाहृतम् ॥' इति। महाग्निरिति च। प्रजज्वाल कुपित इत्यर्थः। दीप्तवानिति च। निर्भुग्नेन कुटिलीकृतेन, पुटीकरणात् वक्रीकृतेनेति च। दशनच्छदेन ओष्ठेन। छदशब्देन दलमपि ध्वन्यते। आलोकलेपैः तेजसा कृतैर्लेपनैः। शौर्योष्मणा शौर्यनिमित्तेन तीव्रत्वेन। ऊष्मशब्देन उष्णमपि ध्वन्यते। महाभैरवाकारः अतिभयङ्कराकारः, महेश्वररूपविशेषश्च। नरसिंहः नरश्रेष्ठः, नृसिंहश्च। परतेजः शत्रुतेजः। अन्यत्र परशब्देन सूर्यो विवक्षितः। प्रसरः विसर्पणम्। प्रज्वलितः कुपितः, दीप्तश्च। दिनकरदुर्निरीक्ष्यः दिनकरवद् दुर्निरीक्ष्यः। दिनकरकरैः दुर्निरीक्ष्यश्च। भूभृत्कम्पः राज्ञां भयं, पर्वतचलनं च। विग्रहोत्सेधः कलहोन्नतिः, कायोच्छ्रायश्च। 'उत्सेधः काय उन्नतिः' इत्यमरः। दुर्नरेन्द्रः दुष्टो राजा। गौडोऽत्र विवक्षितः। दुष्टमन्त्रवादी च। पारीक्षितः जनमेजयः। भोगिदहनं राज्ञां नाश इत्यर्थः, सर्पाणां दाहं च। रिपुरुधिरपानतृषित उभयत्र समानम्। प्रतिपक्षवारणप्रधावितः शत्रुनिवारणनिमित्तमुद्यतः इत्यर्थः। अन्यत्र प्रतिगजं प्रति प्रकर्षेण धावितः।

इव तेजसः, सर्वोद्योग इव दर्पस्य, युगागम इव यौवनोष्मणः, राज्याभिषेक इव रणरसस्य, नीराजनदिवस इव असहिष्णुतायाः परां भीषणताम् अयासीत् ।

अवादीच्च — 'गौडाधिपाधममपहाय कस्तादृशं महापुरुषं तत्क्षण एव निर्व्याजभुजवीर्यविजितसमस्तराजकं मुक्तशस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिः, ईदृशेन सर्ववीरलोकगर्हितेन मृत्युना शमयेत् । अनार्यं च तं मुक्त्वा भागीरथीफेनपटलपाण्डराः, केषां मनस्सु सरस्सु हंसा इव, परशुरामपराक्रमस्मृतिकृतो न कुर्युः आर्यशौर्यगुणाः पक्षपातम् ।

---

राज्याभिषेक इव रणरसस्य यथा क्षत्रियस्य राज्याभिषेकः तेजःसंवर्धनश्च तथा अयमपि रणरसस्य संवर्धनादेवमुच्यते । नीराजनदिवस इवासहिष्णुतायाः, यथा राजमहिष्यादेः नीराजनदिवस औज्ज्वल्यकरो भवति तथायमपि असहिष्णुतारूपस्य वीरधर्मस्य औज्ज्वल्यकर इत्यर्थः ।

तत्क्षण एव एकस्मिन्नेव क्षण इत्यर्थः । निर्व्याजं छलरहितम् । राजकं हूणादिराजसमूहम् । अन्यत्र युधिष्ठिरादिसमस्तराजसमूहम् । मुक्तशस्त्रम् उभयत्र समानम् । कलशयोनिं द्रोणाचार्यम् । भरद्वाजमुनेरिन्द्रियं द्रोणकलशे निषिक्तं द्रोणाचार्योऽभवदिति कथा । कृष्णवर्त्मप्रसूतिः, धृष्टद्युम्नो द्रुपदराजस्य अग्निमध्याद् उत्थित इति कथा । वीरलोकगर्हितेन मृत्युना अत्रार्थः स्पष्टः । अन्यत्र धृष्टद्युम्नस्तु 'अश्वत्थामा हत इति श्रुते मया शस्त्रमुत्स्रष्टव्यम्' इति कृतप्रतिज्ञं द्रोणम् 'अश्वत्थामा हत' इति युधिष्ठिरं मिथ्या कथयित्वा, एनं शस्त्रं त्याजयित्वा हतवानित्यर्थः । शमयेत् हन्यात् । मुक्त्वा विना । भागीरथीत्यादि उभयत्र समानम् । परशुरामपराक्रमस्मृतिकृतः तुल्यतया परशुरामपराक्रमस्य स्मारयितारः । अन्यत्र हंसाः परशुरामस्य बाणेन कृतरन्ध्रात् क्रौञ्चगिरेः निर्गच्छन्तः तत्पराक्रमस्मारका भवन्ति इत्यनुसन्धेयम् । परशुरामेण हि महेश्वरसकाशाद् अस्त्रशिक्षार्थं कैलासं गच्छता मार्गनिरोधी क्रौञ्चाचलःशरेण दारित इति पुराणम् 'हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्' इति मेघसन्देशे च । पक्षपातं

कथमिवात्युग्रस्यार्यजीवितहरणे निदाघरवेरिव कमलाकरसलिलशोषणेऽनवेक्षितप्रीतयः प्रसृताः कराः। कां नु गतिं गमिष्यति। कां वा योनिं प्रवेक्ष्यति। कस्मिन् वा नरके पतिष्यति। श्वपाकोऽपि क एवमाचरेत्। नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा। किं वाङ्गीकृत्य कार्यमार्यः तेन क्षुद्रेणानुप्रविश्य विगतघृणेन घुणेनेव सकलभुवनभरणाह्लादनचतुरचन्दनस्तम्भः क्षयमुपनीतः। अनेन मूढेन मधुररसास्वादनलुब्धेन मधुवियार्यजीवितमाकर्षता भावी न दृष्टः कष्टः शिलीमुखसम्पातोपद्रवः। निजगृहदूषणं जालमार्गदीपकेन कज्जलमिव अतिमलिनं केवलमयशः सञ्चितमनेन। नन्वास्त एवास्तमुपगतेऽपि त्रिभुवनचूडामणौ सवितरि वेधसा सृष्टः सत्पथशत्रोरन्धकारस्य निग्रहाय ग्रहतरुषण्डविहारैकहरिणाधिपः शशी। विनयविधायिनि भग्नेऽपि चाङ्कुशे

---

सङ्गं, पक्षैर्गमनं च। अत्युग्रस्य अतिक्रूरस्य, अतितीक्ष्णस्य च। अनवेक्षितप्रीतयः अनवेक्षितप्रेमाणः। उभयत्र समानम्। कराः, बहुवचनेन करव्यापारा लक्ष्यन्ते। अन्यत्र किरणाः। श्वपाकः चण्डालः। क्षुद्रेण क्रूरेण, अल्पाकारेण च। घुणाः काष्ठभवाः कृमयः। भरणाह्लादनचतुरचन्दनस्तम्भः भरणाह्लादनयोः चतुरचन्दनस्तम्भभूतः। भरणाह्लादनचतुरत्वम् उभयत्र समानम्। मधुररसः प्रियविषयः। स्वादुसंज्ञको रसश्च। लुब्धेन इच्छुना। कष्टः भीषणः। शिलीमुखसम्पातः शरपतनं, युद्धमित्यर्थः। शिलीमुखाः सम्पतन्त्यस्मिन्निति वा व्युत्पत्तिः। अन्यत्र शिलीमुखशब्देन मक्षिका लक्ष्यन्ते। गृहदूषणं दारनाशकर्म, दारवैधव्यकरमित्यर्थः। 'दारेषु च गृहाः' इत्यमरः। अन्यत्र भवनमालिन्यकरम्। जालमार्गदीपकेन छलमार्गद्योतकेन। अन्यत्र जालमार्गगतेन दीपेन। मलिनं निहीनं, कृष्णवर्णं च। नन्वास्त इत्यादिवाक्यद्वयेऽप्यार्ये मृतेऽपि अहं तस्य हन्ता स्थितोऽस्मीत्ययमर्थोऽभिप्रेतः। सत्पथशत्रोः सत् नक्षत्रम्। 'भं नक्षत्रं तारकं तारकादि' इति हलायुधः*। तस्य पन्था आकाशं, तस्य शत्रोः आकाशतिरोधायकस्य इत्यर्थः। सन्मार्गबाधकस्येति च। ग्रहतरुषण्डं

---

1. 'अतितीक्ष्णस्वभावस्य', 2. 'दूषकं दारनाशकरं'—क. *उद्धारोऽयमत्र न युज्यते।

**विद्यत एव व्यालवारणस्य विनयाय सकलमत्तमातङ्गकुम्भस्थलस्थिरशिरोभागपाटनखरतरः केसरिनखरः। तादृशाः कुवैघटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः। केदानीं यास्यति दुर्बुद्धिः' इत्येवमभिदधत एवास्य पितुरपि पितुः सेनापतिः, समस्तविग्रहप्राग्रहरो हरितालशैलावदातदेहः, परिणतप्रगुणसालप्रकाण्डप्रकाशः प्रांशुः, अतिशौर्योष्मणेव परिपाकमागतः, गतभूयिष्ठे वयसि वर्तमानः, बहुसमरशरशयनसुप्तोत्थितेनापसहन्निव शान्तनवमपि, अतिदीर्घेणायुषा दुरभिभवशरीरतया जरयापि भीतभीतयेव प्रकटितप्रकम्पया परामृष्टः कथमपि मानमयेषु शिरोरुहेषु, शशिकरनिकरसिततरलशिरोरुहसटालः सैंहीमिव निष्कपटपराक्रमरसरुचितां सङ्क्रान्तो जीवन्नेव जातिमपराम्, अपरस्वामिमुखदर्शनपातकपरिजिहीर्षयेव भ्रूयुगलेन पलितशिथिलप्रलम्बचर्मणा**

---

महाख्यानां तरूणां षण्डम्। एकहरिणाधिपः प्रधानसिंहः। व्यालवारणस्य दुष्टगजस्य। कुवैघटिकाः कुत्सितमणिकाराः। 'मणिकारो वैघटिकः' इति वैजयन्ती। तेजस्विरत्नविनाशकाः तेजस्विश्रेष्ठानां हन्तारः। अन्यत्र तेजस्विनाम् उत्तमतेजोयुक्तानां रत्नानां मणीनां विनाशकाः अस्थानभेदकाः(?)। इत्येवं वदतोऽस्य सन्निधौ समुपविष्ट इति सम्बन्धः। समस्तविग्रह(प्राहः?प्राग्रहरः) समस्तेषु विग्रहेषु युद्धेषु प्रधानः, पुरःप्रहर्तेत्यर्थः। विग्रहपुरस्सर इति च पाठः। अवदातं पीतम्। प्रगुणसालप्रकाण्डप्रकाशः ऋजुसालवृक्षस्कन्धावाग्भागतुल्यः। 'स्कन्धादधः प्रकाण्डः स्यात्' इति हलायुधः। 'प्रकाशोऽर्चिषि दीधित्यां ना तुल्यस्फुटयोरपि'* इति वैजयन्ती। शौर्योष्मणा शौर्यतीव्रतया, शौर्योष्णेनेति च। परिपाकं परिणतिं, पाकं च। बह्वित्यादि। शान्तनवस्तु शरशयनादनुत्थितो मृत एवेति भावः। प्रकटितप्रकम्पया प्रकाशिताङ्गकम्पया, प्रकाशितात्माङ्गकम्पयेति च। शिरोरुहेषु कथमपि परामृष्ट इति सम्बन्धः। मानमयेषु अन्यस्वामिनामप्रणामसङ्कल्पात् मानमयत्वम्। शिरोरुहसटालः शिरोरुहा एव सटा यस्य। रुचिताम् इष्टां, दीप्तां वा।

---

* 'स्फुटयोस्त्रिषु' इति मुद्रितवैजयन्तीपाठः

स्थगितदृष्टिः, धवलस्थूलश्मश्रुगुच्छप्रच्छादितकपोलभागभासुरेण वमन्निव विक्रमकालमकालेऽपि विकासिकाशकाननविशदं शरदारम्भं भीमेन मुखेन, मृतमपि हृदयस्थितं स्वामिनं सितचामरेणेव अभिवीजयन् नाभिलम्बिना कूर्चकलापेन, परिणामेऽपि धौतासिधाराजलपानतृषितैरिव विवृतवदनैः बृहद्भिर्व्रणविदारैर्विषमितविशालवक्षाः, अतिनिशितशस्त्रटङ्क-कोटिकुट्टितबहुबृहद्व्रणाक्षरपङ्क्तिनिरन्तरतया च लिखितसकलसमरविजय-पर्वा पूर्वपर्वत इव पादचारी, विविधवीरवृत्तान्तरसरामणीयकेन महाभारत-मपि लघयन्निव, प्रतिपक्षक्षपणातिनिर्बन्धेन परशुराममपि शिक्षयन्निव, अभ्रमणादरश्रीसमाकर्षणविभ्रमेण मन्दरमपि मन्दयन्निव, वाहिनी-नायकत्वेऽपि मर्यादानुवर्तनेन अम्बोनिधिमप्यभिभवन्निव, स्थैर्यकार्कश्यो-न्नतिभिरचलानपि ह्रेपयन्निव, सहजप्रचण्डतेजःप्रसरस्फुरणेन सवितार-मपि तृणीकुर्वन्निव, ईश्वरभारोद्वहनघृष्टपृष्ठतया हरवृषभमपि हसन्निव,

---

धवलेत्यादि। एवंविधेन मुखेन शरदारम्भम् इत्यन्वयः। विक्रमकालं विक्रमकरणस्य समयभूतम्। शरत्समयो हि राज्ञां विक्रमकालत्वेन प्रसिद्धः। कूर्चकलापेन श्मश्रुसमूहेन। वदनं मुखम्, आस्यं च। विदारैः रन्ध्रैः। कुट्टितं छेदितम्। विजयपर्वा विजयप्रस्ताववान्। 'पर्वो ग्रन्थौ पञ्चदश्यां प्रस्तावे विषुवादिके' इति वैजयन्ती। रामणीयकेन रमणीयतया। लघयन् लघूकुर्वन्। अल्पावकाशीकुर्वन्नित्यर्थः। निर्बन्धेन तात्पर्येण। अभ्रमणेत्यादि। मन्दरस्तु भ्रमणादरेणैव श्रीसमाकर्षणं कृतवान्। अभ्रमणादरः असम्भ्रमादरः, अपरिभ्रमणादरश्च। वाहिनीत्यादि। अम्भोनिधिः युगान्तकालेषु मर्यादाम् अतिलङ्घयतीति भावः। वाहिनीनायकत्वे सेनापतित्वे, नदीपतित्वे च। मर्यादानुवर्तनेन स्थित्यनतिक्रमेण। सेनापतित्वं स्थित्यनतिक्रमकरमिति भावः। अन्यत्र कूलदेशानतिलङ्घनेन। 'मर्यादा कूलदेशोऽस्य' इति हलायुधः। तेजः परिभवासहिष्णुता, दीप्तिश्च। ईश्वरभारोद्वहनघृ(ण?ष्ट)पृष्ठतया राजकार्यनिर्वहण-तत्परतयेत्यर्थः। अन्यत्र समहादेवस्य गौरवोद्वहनमर्दितपृष्ठभागतया।

अरणिरमर्षाग्नेः, ऐश्वर्यं शौर्यस्य, मोदो मदनस्य, विसर्पो दर्पस्य, हृदयं हठस्य, जीवितं विजिगीषुतायाः, समुच्छ्वसितम् उत्साहस्य। अङ्कुशो दुर्मदनागानां, नागदमनो दुष्टभोगिनां, विरामो वरमनुष्यतायाः, गुरुकुलं वीरगोष्ठीनां, तुला शौर्यशालिनां, सीमान्तरश्मा शस्त्रग्रामस्य, निर्वोढा प्रौढवादानां, संस्तम्भयिता भग्नानां, पारगः प्रतिज्ञानां, मर्मज्ञो महाविग्रहाणां, घोषणापटहः समरार्थिनां, सन्निधावेव समुपविष्टः सिंहनादनामा स्वरेणैव दुन्दुभिनिर्घोषगम्भीरेण सुभटानां समररसमानयन्निव विज्ञापितवान्— 'देव! न कचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानमात्मानं न चेतयन्ते। श्रियो हि दोषान्धतायाः कामला विकाराः। छत्रच्छायान्तरिततनवो हि विस्मरन्त्येव तेजस्विनं जडधियः। किं वा करोतु

---

मोदः उल्लासः। विसर्पः व्यापनम्। हठस्य बलात्कारस्य। दुर्मदनागानां उल्ललिताख्यगजानां, दुष्टमत्तगजानामिति च। नागदमनः गरुडः। भोगिनां राज्ञां, सर्पाणां च। विरामः अवसानम्। ग्रामशब्देन [1]संवसथश्च गम्यते। निर्वोढा निर्वाहकः। मर्म जीवस्थानम्। विग्रहाणां युद्धानाम्। घोषणापटहः समरार्थिनां, यथा घोषणापटहः पुरस्सरः समरार्थिनां संरम्भहेतुत्वात् प्रीतिहेतुर्भवति एवमसावपि इत्यर्थः। सन्निधौ सन्निकर्षे। कृताश्रयया कृतस्थित्या, कृतालयया च। कोकिलाः परपुष्टतया कचिदपि अकृतनीडा इत्यर्थः। मलिनया निहीनया, मलिनवर्णया च। मलिनतराः निहीनतराः, मलिनवर्णाश्च। चेतयन्ते जानन्ति। 'चिती संज्ञाने' इति धातुः। दोषान्धतायाः राज्यन्धतायाः, .... .... इति च। कामलाः नेत्ररोगविशेषाः। 'नेत्ररुक् कामला क्लीबम्' इति वैजयन्ती। .... .... रोगो राज्यन्धतायाः प्रका .... कारीति भावः। तेजस्विनं प्रतापिनम्, आदित्यमिति च। जडधियः मन्दबुद्धयः, शीतबुद्धय इति च। छत्रच्छायायाः शैत्यातिशयाद् हृदयेऽप्यारोपितशैत्या इत्यर्थः।

---

1. 'शपथश्च'-ख. ग.

वराकः। येनातिभीरुतया नित्यपराङ्मुखेन न दृष्टान्येव सर्वातिशायिशौर्यश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानात्येवं यथाभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयमुपहरन्ति मनस्विन इति। जलेऽपि च ज्वलन्ति ताडितास्तेजस्विन इति। सकलवीरगोष्ठीबाह्यस्य तस्यैवेदमुचितम् अनुत्तारनिरयनिपातननिपुणं कर्म। मनस्विनां हि प्रधनप्रधानधने धनुषि ध्रियमाणे सति च कमलाकलहंसीकेलिकुवलयकानने कृपाणे कृपणोपायाः पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य किं पुनरीदृशाः। येषां च धात्रा धरणीं त्रातुं नियुक्ताः स्वयमसमर्था इव कुलिशकर्कशभुजपरिघप्रहरणहेतोरुद्गिरन्ति गिरयोऽपि लोहानि ते कथमिव बाहुबलशालिनो मनसापि विमलयशोबान्धवा ध्यायेयुरकार्यम्। सर्वग्रहाभिभवभासुराणां हि सुभटकराणामग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः।

---

वराकः कातरः। पराङ्मुखेन सन्निधौ स्थातुमशक्तेन। श्वयथुः वृद्धिः। तपस्वी शोच्यः। विप्रकृताः विप्रकारं कारिताः, विप्रैः कृताश्च। जले अज्ञे, सलिले इति च। ज्वलन्ति कुप्यन्ति, दीप्यन्त इति च। ताडिताः प्रहताः[1]। तडितः विद्युतः तत्सम्बन्धिन इति च। तेजस्विनः प्रतापिनः, अग्नय इति च। अनुत्तारम् उत्तरणहीनम्। मनस्विनाम्—'क्लेशैरुपहतस्यापि मानसं सुखिनो यथा। स्वकार्येषु स्थिरं यस्य मनस्वी स पुमान् मतः॥ दैवीर्वा पौरुषेयीर्वा व्यापदो येऽस्य दुस्तराः। स्वबुद्ध्यैव तरत्याशु मनस्वी सोऽपि कीर्तितः॥' इति दिवाकरः। ध्रियमाणे अवतिष्ठमाने। 'धृङ् अवस्थाने' इति धातुः। कृपणोपायाः क्षुद्रोपायाः। ईदृशा वञ्चनेन वधादयः। प्रहरणम् आयुधम्। गिरयः कुलपर्वतादयः। लोहानि अयांसि। बाहुबलशालिनः बाहुबलश्लाघिनः। यशोबान्धवाः यशस्विन इत्यर्थः। सर्वग्रहाभिभवः कृत्स्नग्रहणेनाभिभवप्राप्तिः, सर्वेषामादित्यव्यतिरिक्तानामष्टानां ग्रहाणामभिभव इति च। अग्रतः सन्निधौ। दिग्ग्रहणे[3] दिशां स्वीकरणे, दिग्व्याप्तौ च। पङ्गवः पादविकलाः, असमर्था इत्यर्थः। कराः किरणाः, हस्ता इति च।

---

१. 'प्रहताः', २. 'यास्य', ३. 'दिग्ग्रहे'—क.

महामहिषशृङ्गतरङ्गभङ्गुरभीषणान्तराला लोकप्रवादमात्रेव दक्षिणाशा तत्त्वतः सुभटभ्रुकुटिरधिवासो यमस्य। चित्रं चेदम्। यदुन्मुक्त-सिंहनादानां सहसा साहससरभससमररसोच्चरोमाश्चकण्टकनिकरनिभेन निर्यान्ति सटाः शूराणां रणेषु। द्वयमेव चतुस्सागरसम्भूतस्य भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि दारुणं बडवामुखं महापुरुषहृदयं वा। तेजस्विनः सकलाननवाप्य पयोराशीन् सहजस्य कुतो निर्वृति-रूष्मणः। वृथा विततविपुलफणाभारो भुजङ्गमानां भर्ता बिभर्ति भोगेन यो मृत्पिण्डमेव केवलम्। अप्रतिहतशासनाक्रान्त्युप-भोगसुखरसं तु रसाया दिक्कुञ्जरकरभासुरप्रकोष्ठा वीरबाहा एव जानन्ति। रविरिव उन्मुखपद्माकरगृहीतपादपल्लवः सुखेनाखण्डित-तेजा दिवसान् नयति शूरः। इतरस्य तु शशिन इव हरिणहृदयस्य

---

महिषशृङ्गतरङ्गभङ्गुरभीषणान्तराला यममहिषशृङ्गाग्र्यतरङ्गेण भङ्गुरत्वात् भीषणान्तराला। अन्यत्र यममहिषशृङ्गतरङ्गवद् भङ्गुरा भीषणान्तराला च। सिंहनादः वीराणां युद्धसमये क्रियमाणः शब्दः। सिंहानां नाद इति च। भूतिः समृद्धिः, भस्म च। प्रतिपक्षदाहि अग्नेर्जलं प्रतिपक्ष इति भावः। अन्यत्र शत्रूणां क्लेशकरम्। तेजस्विनः परिभवासहिष्णोः। बाडवाग्निश्च ध्वन्यते। अनवाप्य पयोराशीन् राज्यत्वेनेति भावः। अन्यत्र भक्ष्यत्वेन। ऊष्मणः दर्पस्य, उष्णस्य इति च। निर्वृतिः शान्तिः। वृथा बिभर्तीत्यन्वयः। भोगेन फणेन। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। आक्रान्तिः आक्रमणम्, आरोहणं च। रसाया भूमेः। उन्मुखपद्माकरगृहीतपादपल्लवः उत्तानितेन लक्ष्मीहस्तेन गृहीतचरणकिसलयः। अन्यत्र ऊर्ध्वमुखपद्मसमूहगृहीतकिरणविस्तारः। 'आकरो निकरे खनौ', 'पल्लवं त्वस्त्री प्रकोष्ठे विस्तृतावपि' इति च वैजयन्ती। सुखेन अक्लेशेन। अन्यत्र अपगतमेघनिरोधतया शोभनेन आकाशेन। अखण्डिततेजाः अन्यूनप्रतापः। अप्रतिहतकिरणश्च। दिवसान्— दिवस-शब्दश्च अहोरात्रस्य उपलक्षणम्। अन्यत्र दिनानि। हरिणहृदयस्य मृगबुद्धेः।

पाण्डरपृष्ठस्य कुतो द्विरात्रमपि निश्चला लक्ष्मीः। अयमस्य च अपरिमित-यशःप्रकरवर्षी विकासी वीररसः। पुरःप्रवृत्तप्रतापप्रहताः पन्थानः पौरुषस्य। शब्दविद्रुतविद्विषन्ति भवन्ति द्वाराणि दर्पस्य। शस्त्रालोक-प्रकाशिताः शून्या दश दिशः शौर्यस्य। रिपुरुधिरशीकरासारेण भूरिव श्रीरप्यनुरज्यते। बहुनरपतिमकुटमणिशिलाशाणकोणकर्षणेन चरण-नखराजिरिव राजतापि उज्ज्वलीभवति। अनवरतशस्त्राभ्यासेन करतलानीव रिपुमुखान्यपि श्यामीभवन्ति। विविधव्रणबन्धपट्टकैः

---

अथवा हरिणः पाण्डुः। हृदयं वक्षोदेशः। अतिभीरुतया युद्धाद्यर्थं कदाचिदपि गृहादनिर्गमाद् वातातपास्पृष्टशरीरतया पाण्डुवर्णहृदयदेशस्य इत्यर्थः। 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः। अन्यत्र हरिणः मृगः हृदये मध्यदेशे यस्य। पाण्डरपृष्ठस्य पाण्डुवर्णपृष्ठभागस्य अत्रापि पूर्वोक्त एव समाधिः अनुसन्धेयः। अन्यत्र अपगतकलङ्कत्वाद् धवलतरपृष्ठभागस्येत्यर्थः। 'पाश्चात्य-भागमिह सानुषु सन्निषण्णाः पश्यन्ति शान्तमलसान्द्रतरांशुजालम्।' इति माघकाव्ये च अयमर्थ उक्तः। निश्चला अचला, एकप्रकारा च। लक्ष्मीः सम्पत् कान्तिश्च यस्य। अपरिमितेति पाठः। यशः कीर्तिः, शैत्य-मिति च। विकासी विसरणशीलः। वीररसः वीर्यम्। रसशब्देन जलं च ध्वन्यते। प्रतापप्रहताः पन्थानः पौरुषस्य, यत्र पौरुषं मवर्तितुमिष्टं तत्रवर्तिनः पौरुषेण प्रागेव हता इत्यर्थः। प्रतापैः प्रकर्षेणाखिलीकृताः पौरुषस्य मार्गा इति च। शब्दः स इति प्रसिद्धिः(?) घोषश्च। शस्त्रालोकप्रकाशिताः शून्या दश दिशः शौर्यस्य विषयभूताः, पूर्वं शून्या दश दिशः शस्त्रदर्शनेनैव आत्मनो विषयभूता इत्यर्थः। शस्त्रदीप्त्यैव प्रकाशं प्रापिता इति च। भूरिव श्रीरप्यनुरज्यते। यथा भूः तथा श्रीरप्यनुरज्यते इत्यर्थः। अनुरज्यते अरुणीभवति, स्निह्यति च। अयमे-वोत्तरेषां चतुर्णामपि वाक्यानां योजनाप्रकारः। राजता राजत्वम्। उज्ज्वलीभवति दीप्ता भवति, ऊर्जिता भवति च। श्यामीभवन्ति कृष्णीभवन्ति। अन्यत्र शोकेनेति भावः। व्रणबन्धपट्टकैः उपनाहपट्टकैः ताडनेन भेदनेन आघातेनेति च।

---

१. 'बद्धपट्टकैः'–क.

शरीरमिव यशोऽपि धवलीभवति । कवचिषु च रिपूरःकवाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ति निष्ठुरा निस्त्रिंशप्रहाराः । प्रत्याहितहतस्वजनो मनस्विजनो द्विषदुरस्ताडनेन कथयति हृदयदुःखं, पदपातितलतापातपवनोच्छ्वसितशत्रुशरीरः समुच्छ्वसिति, निरुच्छ्वासितशत्रुशरीरास्रधारापातेन रोदिति, विपक्षवनिताचक्षुषा ददाति जलं, स श्रेयान् । नेतरः । न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु बध्नन्ति बन्धुबुद्धिं प्रबुद्धाः । स्थास्नुनि यशसि हि बान्धवधीर्धीराणाम् । अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावं च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशत्येव तेजस्विनं शोकः । स त्वं सत्त्ववतामग्रणीः प्राग्रहरः प्रज्ञावतां, प्रथमः समर्थानां, प्रष्ठोऽभिजातानाम्, अग्रेसरस्तेजस्विनाम्, आदिरसहिष्णूनाम् । एताश्च सततसन्निहितधूमायमानकोपाश्रयः सुलभासिधारातोयतृप्तयो विकटबाहुवनच्छायोपगूढा वीरसाया निवासशिबिरभूमयः स्वायत्ताः सुभटानामुरःकवाटभित्तयः । यतः किं गौडाधिपेनैकेन । तथा कुरु, यथा नान्योऽपि किञ्चिदाचरत्येवं भूयः । सर्वोर्वीश्रद्धाकामुकानाम् अलीकविजिगीषूणां सञ्चारय चामरमारुतान्

---

उच्छ्वसितम् उद्गतश्वासीकृतम् । निष्प्राणीकृतमित्यर्थः । आश्वसितमिति च । निरुच्छ्वासितः निष्प्राणीकृतः । हत इत्यर्थः । अस्रधारा रुधिरधारा, बाष्पवारीति च । जलं बाष्पजलम्, [1]पितृनिवापमिति च । क्षणिकेषु क्षणस्थायिषु । प्रबुद्धाः विद्वांसः । तेजः प्रतापः, दीप्तिश्च । मणिप्रदीपं प्रदीपवद् दीपनशीलं मणिम् । कलुषः कुत्सितः, मलिनश्च । तेजस्विनं परिभवासहिष्णुं, तेजोयुक्तं च । सत्त्ववतां बलवताम् । प्राग्रहरः श्रेष्ठः । प्रष्ठः अग्रेसरः । सततेत्यादि । कोपाधारा बाहवः शिबिरोपकरणभूता अश्रितोयवनत्वेन रूप्यन्ते । सुलभासिधारातोयतृप्तयः सुलभाः शत्रुभिः स्वात्मनि पात्यमानानाम् असीनां धारागतैः तोयैः तृप्तयो यासाम् । स्वायत्ताः स्वविधेयाः । श्रद्धाकामुकानां स्वेच्छामात्र-

---

१. 'निवापजलमिति च'-क.

अन्तःपुरपुरन्ध्रीनिःश्वसितैः। छिन्धि रुधिरगन्धान्धगृध्रमण्डलच्छादनैः छत्रच्छायाव्यसनानि। अपाकुरु कदुष्णशोणितोष्णोदकस्वेदैः कुलक्ष्मीकुलटाकटाक्षचक्षूरागरोगान्। उपशमय निशितशरसिराव्यथाशोणितव्ययैरकार्यशौर्यश्वयथून्। उन्मूलय लोहनिगलापीडमालामलमहौषधैः पादपीठदौर्हृददुर्ललितपादमान्द्यानि। क्षपय तीक्ष्णाज्ञाक्षरक्षारपातैः जयशब्दश्रवणकर्णकण्डूः। अपनय चरणनखमरीचिचन्दनचर्चाललाटलेपैः अनमनस्तिमितमस्तकस्तम्भविकारान्। उद्धर करदानसन्देशसन्दंशैः द्रविणदर्पोष्मायमाणदुश्शीललीलाशल्यानि। भिन्धि मणिपादपीठदीधितिदीपिकाभिः शुष्कसुभटाटोपभ्रुकुटिबन्धान्धकारान्। त्याजय चरणपतनलङ्घनलाघवगलितशिरोगौरवारोग्यैः मिथ्याभिमानमौनमहासन्निपातान्। म्रदय सन्ततसेवाञ्जलिमुकुलितकरसम्पुटोष्मभिः इष्वसनगुणकिणकार्कश्यानि। येनैव च ते गतः पिता, पितामहः

---

कामुकानाम्। अन्धः मत्त इत्यर्थः। कदुष्णम् अल्पोष्णम्। कुशब्द ईषदर्थः। 'पापकुत्सेषदर्थे कुः' इत्यमरः। कुशब्दस्य 'कोः कत्तत्पुरुषेऽचि' (पा० सू० ६. ३. १०१.) इति कदादेशः। 'कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु' इत्यमरः। उष्णोदकं क्वथितजलम्। स्वेदैः सम्पीडनैः (കാൽക)। कुलक्ष्मीकुलटा कुत्सितलक्ष्म्याख्या असती। 'असती कुलटेत्वरी' इत्यमरः। कटाक्षचक्षूरागरोगान् चक्षूरागः स्त्रीपुंसोः प्रथमदर्शने जायमानः स्नेहोद्भेदः, कटाक्षनिरीक्षणाद् अन्योन्यसञ्जातस्नेहोद्भेदाख्यरोगानित्यर्थः। सिराव्यथा सिरावेधः। व्ययैः मोक्षणैः। श्वयथून् शोफान्। निगलापीडाः निगलसमूहाः। मान्द्यानि व्याधीन्। क्षारः क्षतेषु दोषक्षरणार्थं दत्तमौषधम्। कण्डूः कण्डूतिः। ललाटलेपैः ललाटलेपौषधैः। स्तम्भविकारान् स्तब्धताविकृतीः। सन्दंशैः शल्योद्धरणसाधनैः (ചവണ)। 'सन्दंशः स्यात् कङ्कमुखः' इति वैजयन्ती। दुश्शीललीला दुरनुवर्तशीलचेष्टा। शुष्कः निरर्थकः। आटोपभ्रुकुटिः सम्भ्रमजातभ्रुकुटिः। लङ्घनम् उपवासः। 'लघि भोजननिवृत्तौ' इति धातुः। इष्वसनगुणः धनुर्मौर्वी।

प्रपितामहो वा तमेव मा हासीस्त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरीव कुरङ्गीं राजलक्ष्मीम्। देव! देवभूयं गते नरेन्द्रे, दुष्टगौडभुजङ्गजग्धजीविते च देवे राज्यवर्धने, वृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः। समाश्वासय अशरणाः प्रजाः। क्षमाभृतां शिरस्सु शरत्सवितेव प्रयच्छ ललाटन्तपान् पादन्यासान्। अहितानामभिनवसेवादीक्षादुःखसन्तप्तनिःश्वासधूममण्डलैः नखम्पचैः प्रचलितचूडामणिचक्रवालबालातपैश्च याहि कल्माषपादताम्। अपि च, हते पितरि एकाकी तपस्वी वनमृगैः सह संवर्धितः सहजब्राह्मण्यमार्दवसुकुमारमनाः कृतनिश्चयश्चण्डचापवनाटनिटङ्कारनादनिर्मदीकृतदिग्गजं गुञ्जज्ज्यारवजनितगजज्वरं समग्रमुद्यनमेकविंशतिकृत्वः क्षत्त्रवंशमुत्खातवान् राजन्यकं रामः। किं पुनर्नैसर्गिककायकार्कश्यः कुलिशायमानमानसो मानिनां मूर्धन्यो देवः। तदद्यैव कृतप्रतिज्ञो गृहाण गौडाधिपध्वस्तये जीवितसङ्कलनाकुलाकाण्डदण्डयात्राचिह्नध्वजं धनुः। न ह्ययमरातिरक्तचन्दनचर्चाशिशिरोपचारम्

---

देवभूयं देवत्वम्। भवतिधातोः 'भुवो भावे' (पा० सू० ३. १. १०७.) इति क्यप्। वृत्ते सम्भूते। महाप्रलये महानाशे। शेषः अवशिष्टः, अनन्त इति च। क्षमाभृतां राज्ञाम्, पर्वतानां च। शिरस्सु मूर्धसु, शिखरेषु च। पादः चरणः, किरणश्च। नखम्पचैः उष्णातिशयैः नखानामपि दाहकैः। अत्युष्णैरिति यावत्। कल्माषपादतां शबलचरणतां, कल्माषपादाख्यराजताम् इति च। चापवनं चापसमूहम्। अटनिः कार्मुकाग्रम्। 'कार्मुककोटिर्भवेद् अटनिः' इति हलायुधः। टङ्कारनादनिर्मदीकृतदिग्गजं टङ्कारशब्दाद् उपजन्यमानेन भयेन शुष्यद्दिग्गजम्। गजज्वरं गजस्य व्यसनम्। एकविंशतिकृत्वः एकविंशतिवारान्। 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति (पा० सू० ५. ४. १७.) कृत्वसुच्। क्षत्त्रवंशः क्षत्त्रियकुलम्। राजन्यकं क्षत्त्रियसमूहः। 'अथ राजकम्। राजन्यकं च नृपतिक्षत्त्रियाणां गणे क्रमात्' इत्यमरः। मूर्धन्यः प्रधानः। ध्वस्तये वधाय। सङ्कलनाकुलाः एकत्रकरणतत्पराः। दण्डयात्रा सेनाप्रयाणम्। रक्तचन्दनं रक्ताख्यचन्दनं, हरिचन्दनमिति च। चर्चा आलेपनम्।

अन्तरेण शाम्यति परिभवानलपच्यमानस्य देवस्य दुःखदाहज्वरः। सुदारुणनिकारसन्तापपरिक्षये हिडिम्बामुखचुम्बनास्वादितमिव रिपुरुधिरामृतम् अमन्दरोपायमपायि पवनात्मजेन। जामदग्न्येन च शाम्यन्मन्युशिखिशिखासञ्ज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजमहाह्रदेषु अस्नायि' इत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षः तं प्रत्यवादीत्— 'करणीयमेवाभिहितं मान्येन। इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायाददृष्टिरीर्ष्यालोर्भुजस्य। उपरि गच्छतीच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम्। अनमत्सु शैलेष्वपि कचग्रहमभिलषति दातुं करः। तेजोदुर्विदग्धान् अर्ककरानपि चामराणि ग्राहयितुमीहते हृदयम्। राजशब्दरुषा मृगराजानपि शिरांसि वाञ्छति पादः पादपीठीकर्तुम्। स्वच्छन्दलोकपालस्वेच्छागृहीतानाम् आक्षेपादेशाय दिशामपि स्फुरत्यधरः। किं पुनरीदृशे दुर्जाते जाते चामर्षनिर्भरे मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य। अपि च, हृदयविषमशल्ये मुसल्ये जीवति

---

शिशिरोपचारः, उष्णतप्तानां तापशान्तये क्रियमाणः परिहारविशेषः। निकारः परिभवः। परिक्षये अभावे। *[हिडिम्बामुखचुम्बनास्वादितं— हिडिम्बा, काचिद् राक्षसी। तस्याः मुखचुम्बनास्वादितं मुखचुम्बने जातरसम्। सर्वदा रुधिरपायितया हिडिम्बाया मुखे रुधिरमस्तीत्यभिप्रायः। अमन्दरोपायम् अनल्पशरगतिप्र]भूतशराख्यसाधनयुक्तमित्यर्थः, मन्दरपर्वताख्योपायरहितम् इति च। पवनात्मजेन भीमसेनेन।

गृहीतभुवि धृतभुवि, आत्तभुवि इति च। भोगिनाथे अनन्ते, राजनि इति च। दायाददृष्टिः ज्ञातिबुद्धिः। उपरि ऊर्ध्वभागे, शिरोपरीति च। अनमत्सु अप्रह्वेषु, अप्रणमत्सु इति च। तेजः किरणः, प्रताप इति च। ईहते इच्छति। आक्षेपादेशाय प्रतिषेधोक्तये। किं पुनरीदृशे दायाददृष्टिविधानादिति शेषः। दुर्जाते दुर्जनने, नीचजनन इत्यर्थः। जाते चामर्षनिर्भरे मनसीति पाठः। मुसल्ये मुसलेन वधार्हे। तदर्ह इत्यर्थे 'दण्डादिभ्यो यत्'

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

जाल्मे जगद्विगर्हिते गौडचण्डाले, जिह्नेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा शूत्कर्तुम् । अकृतरिपुबलाबलाविलोललोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम् । अदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमप्यश्रुसलिलम् । श्रूयतां च मे प्रतिज्ञा । शपामि आर्यस्यैव पादपांसुस्पर्शेन । यदि परिमितैरेव दिवसैः सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगळां निर्गौळां वा महीं न करोमि, ततस्तनूनपाति पीतसर्पिषि पतङ्ग इव पातकी पातयाम्यात्मानम्' इत्युक्त्वा च महासन्धिविग्रहाधिकृतम् आवन्तिकमन्तिकस्थम् आदिदेश— 'लिख्यताम् । आरविरथचक्रचीत्कारचकितचारणमिथुनमुक्तसानोरुदयाचलाद्, आ च *त्रिकूटकटककुट्टाकटङ्कलिखितकाकुत्स्थलङ्कालुण्ठनव्यतिकरात् सुवेलाद्, आ च वारुणीमदस्खलितवरुणवारनारीनूपुररवमुखरकुहरकुक्षेरस्तगिरेः, आ च गुह्यकगेहिनीनिधुवनपरिमलगन्धिगन्धपाषाणगुहागृहाच्च गन्धमादनात् सर्वेषां राज्ञां सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रहणाय वा । गृह्यन्तां दिशश्चामराणि वा ।

---

(पा० सू० ५. १. ६६.) इति यप्रत्ययः । 'विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः' इत्यमरः । जाल्मे अनिरूप्यकारिणि । §'जाल्मोऽनिरूप्यकारी स्याद्' इत्यमरः । पोटा स्तनश्मश्रवादिसंयुता । 'पोटा स्त्रीपुंसलक्षणा' इति वैजयन्ती । रिपुबलं रिपुसेना । शपामि शपथं करोमि । रणरणायमानं रणरणेति शब्दायमानम्, उत्सुकायमानमिति वा । तनूनपाति अग्नौ । आ रविरथेत्यादिषु वाक्येषु आङभिविधौ वर्तते । उदयाचलादिभिर्विशेष्यैः सह सम्बध्यते च । त्रिकूटतट इति लङ्कोच्यते । कुट्टाकः छेदकः । 'जल्पभिक्षे'त्यादिना (पा० सू० ३. २. १५५.) षाकन् प्रत्ययः । लुण्ठनं [1]विलोठनम् । कुहरं कन्दरः । गन्धपाषाणः गन्धवान् शिलाभेदः । करः बलिः । गृह्यन्तां दिशश्चामराणि वा स्वविषयं परित्यज्य पलायनेन दिशो गृह्यन्ताम् ।

---

१. 'विलोपनं'—4. * 'त्रिकूटतटकुट्टाक' इति व्याख्यानुसारी पाठः,

§ 'जाल्मोऽसमीक्ष्यकारी' इति मुद्रितामरकोशपाठः ।

नमयन्तु शिरांसि धनूंषि वा। कर्णपूरीक्रियन्ताम् आज्ञा मौर्व्यो वा। शिरस्सु शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा। घट्यन्तामञ्जलयः करिघटाबन्धा वा। मुच्यन्तामिषवो भूमयो वा। समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा। सुदृष्टः क्रियतामात्मा मच्चरणनखेषु असिदर्पणेषु वा। परागतोऽहम्। पङ्गोरिव मे निर्वृतिः कुतस्तावद् यावन्न कृतः सप्तद्वीपान्तरसञ्चारी सकलनरपतिमकुटमणिशिलालोकमयः पादालेपः' इति। कृतनिश्चयश्च मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भकाङ्क्षी सभाम् अपाङ्क्षीत्। उत्थाय च स्वस्थवन्निःशेषमाह्निकमकार्षीत्। अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शाम्यदूष्मा दिवसस्त्रिभुवनस्य।

ततश्च निजाधिकारापहारभीत इव भगवत्यपि क्वापि गते गततेजसि तिग्मतेजसि, तामरसवनेष्वपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु, विहगगणेष्वपि समुपसंहृतनिजपक्षविक्षेपविकारनिश्चलेषु भियेव मूकीभवत्सु, भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिरिव जने सकले, स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकारवलयकीलितास्विव बहलतिमिरमालातिरोधीयमानासु दिक्षु, प्रदोषास्थाने नातिचिरं तस्थौ। नमन्नृपलोकलोलांशुकपवन-

---

महत्सेवनार्थं चामराणि वा गृह्यन्तामित्यर्थः। शिरस्त्राणि युद्धेषु शिरोरक्षार्थं बध्यमानानि शिरस्त्राणि। घट्यन्तां बद्ध्यन्ताम्। अन्यत्र युद्धार्थं सङ्गताः क्रियन्ताम्। [1]कुन्तः प्रासः। आत्मा शरीरम्। परागतः आगतः। सभामपाङ्क्षीत् सभां विसृष्टवानित्यर्थः। अगलदित्यादि। दर्पप्रसर इव दिवसोऽप्यगलत्। उभयमपि गलितमित्यर्थः। ऊष्मा दर्पः, औष्ण्यं च।

गततेजसि गलत्प्रभे, गतप्रताप इति च। तिग्मतेजसीति पाठः। सूर्य इत्यर्थः। शिलीमुखालापः भृङ्गध्वनिः, शरकथा च। सङ्कुचत्सु मुकुलीभवत्सु, संक्षिप्यमाणेषु च। समुपसंहृतं सङ्कुचितम्। पक्षविक्षेपः पत्रविततिः। अन्यत्र सहायभूतानां राज्ञां दण्डयात्रा। दीयमानं सम्पाद्यमानम्।

---

1. कुन्तः தோமரம்—क.

नमितशिखैः दीपिकाचक्रवालैरपि प्रणम्यमान इव प्राहिणोल्लोकम्। प्रतिषिद्धसकलपरिजनप्रवेशश्च शयनगृहं प्राविशत्। उत्तानशयितश्च मुमोचाङ्गानि शयनतले। दीपद्वितीयं च तमभिमर इव लब्धान्तरः तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्शाग्रजम्। उपर्युपरि भ्रातृजीवितान्वेषणायेव प्रसस्रुः निःश्वासाः। धवलांशुकपटान्तेनेव अश्रुजलप्लवेन मुखमाच्छाद्य निश्शब्दमतिचिरं रुरोद। चकार च चेतसि— 'कथं नामाकृतेस्तादृश्या युक्तः परिणामोऽयमीदृशः। पृथुशिलासङ्घातकर्कशकायबन्धात् तातादू, अचलादिव लोहधातुः कठिनतर आसीदार्यः। कथं वास्य मे शठहृदयस्य आर्यविरहे सकृदपि युक्तमुच्छ्वसितुम्। इयं सा प्रीतिर्भक्तिरनुवृत्तिर्वा। बालिशोऽपि कः सम्भावयेदार्यमरणे मज्जीवितम्। तत्तादृशमैक्यमेकपद एव क्वापि गतम्। अयत्नेनैव हतविधिना पृथक्कृतोऽस्म। दग्धरोषान्तरितशुचा सुचिरं रुदितमपि न कृतं मुक्तकण्ठं कृतघ्नेन मया। सर्वथा लूतातन्तुच्छटाच्छिद्रुरास्तुच्छाः प्रीतयः प्राणिनाम्। लोकयात्रामात्रनिबन्धना बान्धवता। यत्राहमपि नामापर इवार्ये स्वस्थे स्वस्थवदासे। किञ्च दैवहतकेन फलमासादितमीदृशि परस्परप्रीतिबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथुने विघटिते। य एवं चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य लब्धचिताश्रय इवार्यस्य त एव दहन्ति मां गुणाः।' इत्येतानि चान्यानि हृदयेन पर्यदेवत। प्रभातायां च क्षपायां प्रातरेव उत्थाय प्रतीहारमादिदेश— 'अशेषगजसाधनाधिकृतं मित्रगुप्तं द्रष्टुम्

---

दीपद्वितीयः दीपैकसहायः। अभिमरः स्वबलभयम्। 'संयुगे स्यादभिमरः स्वबलादपि साध्वसे' इति वैजयन्ती। परिणामः विपाकः। सङ्घातकर्कशः सङ्घातेन कर्कशः, सङ्घातवत् कर्कशश्च। लोहधातुः अयः। लूतातन्तुः तन्तुवायः। कृमिलालानिर्मितं सूत्रम्। 'लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः' इत्यमरः। (ചിലന്തിനൂൽ)। तुच्छाः क्षुद्राः। स्वःस्थे स्वर्गस्थे। दैवहतकेन किं फलमासादितमित्यन्वयः। लोकान्तरीभूतस्य लोकान्तरगतस्य, मृतस्येत्यर्थः। पर्यदेवत विललाप। गजसाधनं गजाख्यसेनाङ्गम्।

इच्छामि' इति ।

अथ युगपत्प्रधावितबहुपुरुषपरम्पराहूयमानो स्वमन्दिरादप्रति-पालितकरेणुः चरणाभ्यामेव ससम्भ्रमः, दण्डिभिरुत्सार्यमाणजनपदः, पदे पदे जीर्णपटलोष्णीषपट्टप्रधावितोत्तमाङ्गान् अतिविस्तीर्णकीर्णतन्तु-सन्तानकलितपुस्तकपूलिकालङ्कृतककुदान् प्रणमतः प्रतिदिशम् इभ-भिषग्वरान् वारणानां विभावरीवार्ताः पृच्छन्, उच्छ्रितशिखिपिञ्छ-लाञ्छितवंशलतागहनगृहीतदिगायामैः विन्ध्यवनैरिव वारणबन्धविमर्दो-द्वेगागतैः, पुरःप्रधावद्भिः अनामुक्तमण्डलैराधोरणगणैश्च मरतकहरितं घासमुष्टिं दर्शयद्भिः नवग्रहगजपतींश्च प्रार्थयमानैः, लब्धाभिमतमत्त-मातङ्गमुदितमानसैश्च सुदूरमुपसृत्य नमस्यद्भिः, आत्मीयमातङ्गमदांश्च निवेदयद्भिः, डिण्डिमाधिरोहणाय च विज्ञापयद्भिः, अपरैः प्रमादापतितापराधहृतद्विरददुःखधृतदीर्घश्मश्रुभिः अग्रतो गच्छद्भिः, अभिनवोपसृतैश्च कर्पटिभिः वारणार्पणप्रत्याशया सेवमानैः, गणिकाधिकारिगणैश्च लब्धान्तरैः उत्थितकर्मकर्मण्यकरेणुकाकथनाकुलैः[1]

---

स्वमन्दिराच्चरणाभ्यामेव राजकुलं विवेशेति सम्बन्धः । अप्रतिपालितकरेणुः अन-वेक्षितगजः । जनपदः जनः । उच्छ्रितेत्यादि । उच्छ्रितानां शिखिपिञ्छैः आभरणभूतमयूरपिञ्छैः लाञ्छितानां वंशलतानां गजतोदनसाधनवेणुदण्डानां गहनेन समूहेन गृहीतदिगायामैः छादितदिग्विस्तारैः । वंशलता (ചുരിക്കോൽ) । अन्यत्र उच्छ्रितानां शिखिपिञ्छलाञ्छितानां उपरिपतितमयूरपिञ्छलाञ्छितानां वंशलतानां वेणुलतानां गहनेन वनेन गृहीतदिगायामैः । वारणबन्धविमर्दो-द्वेगागतैः गजग्रहणव्यसननिमित्तविषादागतैः । अनामुक्तः गजानामग्रधावकः (ചുരിക്കാരൻ) । नवग्रहः नवगृहीतः । प्रार्थयमानैः शिक्षार्थमिति भावः । प्रमादापतितः अनवधानादागतः । कर्पटिभिः वैदेशिकैः । कर्मभिरिति च पाठः । शिक्षाकुशलैरित्यर्थः । अर्पणप्रत्याशया दानाशया । गणिकाधिकारी करिणीनाम् अध्यक्षः । 'वेश्याकरिण्योर्गणिका' इति वैजयन्ती । उत्थितकर्मकर्मण्यकरेणु-कथनाकुलैः उत्थितकर्मणामुद्भूतकर्मशिक्षाणां कर्मण्यानां कर्मणि साधूनां करेणूनां

---

१ 'कथाकुशलैः'-ख. ग.

उल्लासितपल्लवचिह्नैः अरण्यपालपङ्क्तिभिश्च निष्पादितनवग्रहनागनिवह-निवेदनोद्यताभिः उत्तम्भिततुङ्गतोत्रलताभिः महामात्रपेटकैश्च प्रकटित-करिकर्मचर्मपुटैः अभिनवगजसाधनसञ्चरणवार्तानिवेदनविसर्जितैश्च नाग-वनवीथीपालदूतवृन्दैश्च प्रतिक्षणं प्रत्यवेक्षितकरिकवलकूटैश्च* कटभङ्गसङ्ग्रहं ग्रामनगरनिगमेषु निवेदयद्भिः कटुककदम्बकैः क्रियमाणकोलाहलः, स्वामिप्रसादसम्भूतेन महाधिकाराविष्कारेण स्वाभाविकेनावष्टम्भाभोगेन उद्भासीनोऽन्यादिशन्निव आह्वयन् कर्णशङ्खसम्पत्सम्पादनाय समुद्रान्, आज्ञापयन्निव शृङ्गारगैरिकपङ्काङ्गरागसङ्ग्रहाय गिरीन्, मुष्णन्निव दिग्-गजाधिकारं ककुभाम्, ऐरावतमपि हरन्निव हरेः, हरपदनमितकैलासगिरि-

---

करिणीनां कथाकुशलैः। 'एषा करेणुः सम्यगुद्भूतशिक्षा। अतः सर्वकर्मसु योग्या' एवं कथनाकुलैरित्यर्थः। कर्मण्य इति 'तत्र साधुः' (पा० सू० ४.४.९८.) इति यत्प्रत्यये रूपम्। उल्लासितं प्रकाशितम्। अरण्यपालः गजवनाधिपतिः। निवेदनं ज्ञापनं, प्रदानं वा। उत्तम्भितम् उपरिधृतम्। तोत्रलता गजानां तोदनदण्डः (വടിക്കോൽ)। महामात्रपेटकैः आधोरणप्रधानानां समूहैः। 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः। तत्प्रधाना महामात्राः' इति वैजयन्ती। करिकर्मचर्मपुटः करिणां वधशिक्षार्थं चर्मनिर्मितः पुरुषाकारः। गजसाधनसञ्चरणं गजाख्यसेनाङ्गसञ्चारः। नागवनवीथीपालः गजाकराधिपः। कवलसमूहं यवसादिभक्ष्यसमूहम्। कटभङ्गः कटोद्भेदनः। कटोऽनेन भज्यत इति कटभङ्गः, मदसाधनौषधमित्यर्थः। सङ्ग्रहं सम्पादनम्। ग्रामः विप्राणां निवास-देशः। नगरं वनमध्यनगरम्। उक्तं च— 'काननवनदेशे वा सर्वजनावास-सङ्कीर्णम्। क्रयविक्रयिकैर्युक्तं पुरमुदितं यत्तदेव नगरमिति॥' निगमः— 'चातुर्वर्ण्यसमेतं सर्वजनावाससङ्कीर्णम्। बहुकर्मकारकयुतं यन्निगमं तत्समुद्दिष्टम्॥' इति। कटुक आधोरणः(?)। महाधिकाराविष्कारेण महाधिकारसूचकेन। अवष्टम्भाभोगेन और्जित्यगौरवेण। कर्णशङ्खं कर्णानां शङ्खाभरणम्। शृङ्गारगैरिक-पङ्काङ्गरागः शृङ्गाराख्यो गैरिकपङ्काख्योऽङ्गरागः। शृङ्गारो गजानां भूषणम्।

---

*'कवलसमूहैश्च' इति व्याख्यानुसारी पाठः।

गुरुभिः पादन्यासैः गुरुभारवहनगर्वदुर्ग्यां संहरन्निव, गलितमविलोलस्य आजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपैः आलानशिलास्तम्भपङ्क्तीमिव उभयतो निखनन्, ईषत्तुङ्गलम्बेनाधरबिम्बेन अमृतरसस्वादुना नवपल्लवकोमलेन कवलेनेव लक्ष्मीकरेणुकां विलोभयन्, निजनृपवंशदीर्घं नासावंशं दधानः, अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेनेव पिबन्नीक्षणयुगायामेन दिशामायामं, मेरुतटाभोगविपुलालिकः, सततम् अविच्छिन्नच्छत्रच्छायाप्ररूढिवशादिव नितान्तायतनीलकोमलच्छविसुभगेन स्वभावभङ्गुरकुन्तलभारवल्लरीवेष्टितविलासिना लुनन्निव लुप्तालोकानर्ककिरणान् बर्बरेण, अरिपक्षपरिक्षयपरित्यक्तसकलकार्मुककर्मापि सकलदिगन्तश्रूयमाणगुरुगुणध्वनिः, आत्मस्थसमस्तमत्तमातङ्गसाधनोऽपि अस्पृष्टो मदेन, भूतिमानपि स्नेहमयः, पार्थिवोऽपि गुणमयः,

---

'शृङ्गारो गजमण्डनम्' इति वैजयन्ती। निखनन् स्थापयन्। मेरुतटाभोगविपुलालिकः मेरुतटविस्तारवद् विशालललाटः। 'ललाटमलिकम्' इत्यमरसिंहः छायाप्ररूढिः छायायामुद्भवः। कुन्तलभारवल्लरीवेष्टितविलासिना कुन्तलभाराख्यया वल्लर्या वेष्टितत्वाद् भासनशीलेन। वेल्लितविलासेनेति च पाठः। वेल्लितम् आधूतं, वेष्टितं वा। लुनन् छेदयन्। बर्बरेण केशविन्यासेन। 'बर्बरः केशविन्यासे पारसीकजनेऽधमे' इत्यजयः। कार्मुककर्मा कार्मुककर्तव्यः। गुणध्वनिः ज्याशब्दः। मुख्यार्थः— सद्गुणवादः। आत्मस्थसमस्तमत्तमातङ्गसाधनः स्वशरीरस्थसमस्तगजसाधनः। अस्पृष्टो मदेन अस्पृष्टो मदजलेन। आत्मस्थगजस्य मदजलेनासंस्पृष्टत्वं विरुद्धम्। मुख्यार्थः— आत्मस्थेत्यादि। आत्माधीनसमस्तगजतन्त्रः। अस्पृष्टो मदेन अस्पृष्टो गर्वेण। भूतिमान् भस्मयुक्तः। स्नेहमयः आर्द्रतामयः, तैलमयः इति वा। भूतिः स्नेहस्य शोषकरीति भावेन विरोधः। मुख्यार्थः— भूतिमान् विभववान्। स्नेहमयः सर्वेषु प्रेममयः। पार्थिवः पृथिवीद्रव्यविकारः। गुणमयः शब्दादिगुणमयः। पृथिव्यप्तेजोवाय्वाकाशानां क्रमाद् गन्धरसरूपस्पर्शशब्दा गुणाः। अत्र तु पृथिवीद्रव्यविकारस्य शब्दादिगुणमयत्वं विरुद्धमित्येतावदेव विवक्षितम्।

करिणामिव दानवतामुपरि स्थितः, स्वामितामिव स्पृहणीयां भृत्यता-मप्युपरिभूतामुद्वहन्, एकभर्तृभक्तिनिश्चलां कुलाङ्गनामिव अनन्यगम्यां प्रभुप्रसादभूमिमारूढः, निष्कारणबान्धवो विदग्धानाम्, अभृतकभृत्यो भजताम्, अक्रीतदासो विदुषाम्, मित्रगुप्तो विवेश राजकुलम्। दूरादेव च उभयकरकमलावलम्बितां स्पृशन् मौलिना महीं नमस्कारम् अकरोत्।

उपविष्टं च नातिनिकटे तं जगाद देवो हर्षः— 'श्रुतविस्तर एवासि-आर्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च। यतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षमते स्वल्पमपि आर्यपरिभवपीडा। पावकः प्रयाणपरिलम्बम्' इति। एवमभिहितश्च प्रणम्य व्यज्ञापयत्— 'कृतमवधारयतु स्वामी सन्दिष्टम्। किन्तु विज्ञाप्यमल्पमस्ति भर्तृभक्तेः' तदाकर्णयतु देवः। देवेन हि पुष्यभूतिवंशप्रभवस्याभिजनस्य सहजस्य

---

मुख्यार्थः— पार्थिवः पृथिव्यां विदितः ईश्वरः। 'तस्येश्वरः' (५. १. ४२.) इति च सूत्रकारः। 'तत्र विदित इति च' (पा० सू० ५. १. ४३.) इति सूत्रेण अञ् प्रत्ययः। गुणमयः सद्गुणमयः। करिणामिव दानवताम् उपरि स्थितः, यथा दानवतां मदवतां करिणामुपरि स्थितः अधिपतीभूतः तथा दानवतां त्यागिनां पुरुषाणामुपरि स्थितः उत्कृष्टभूतः। स्वामितामित्यादि। उपरिभूतां स्पृहणीयां स्वामितामिव उपरिभूतां सर्वभूतेभ्यः उत्कृष्टभूतां स्पृहणीयां, भृत्यतामप्युद्वहन् इत्यर्थः। भर्ता स्वामी, पतिश्च। अनन्यगम्याम् अनन्यसाधारणाम्। उभयत्र समानम्। अभृतकभृत्यः अभृतिभोक्ता दासः। 'भृतको भृतिभुग्' इत्यमरः।

श्रुतविस्तरः श्रुतप्रपञ्चः। विस्तर इति 'स्तॄञ् छादने' इति धातोः 'प्रथने वावशब्दे' (पा० सू० ३. ३. ३३.) इति घञभावपक्षे 'ऋदोरप्' (पा० सू० ३. ३. ५७.) इत्यपि रूपम्। वृत्तान्तचिकीर्षितयोः वाचा कथनीयत्वात् शब्दमयत्वमङ्गीकृत्य विस्तर इति प्रयुक्तम्। अत्र अमरः— 'विस्तारो विग्रहो व्यासः स तु शब्दस्य विस्तरः' इति। प्रचारनिर्गतानि

तेजसो दिक्करिकरप्रलम्बस्य च बाहुयुगलस्यासाधारणस्य सोदर्यस्नेहस्य च सर्वमनुरूपमुपक्रान्तम्। काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ते निकारं, किमुत भवादृशास्तेजसां राशयः केवलम्। राज्यवर्धन-देवोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनानां दौरात्म्यम्। ईदृशाः खलु लोकस्वभावाः प्रतिग्रामं प्रतिनगरं प्रतिविषयं प्रतिद्वीपं प्रतिदिशं च भिन्ना वेषाश्च आचाराश्च आकाराश्च आहाराश्च व्यवहाराश्च जानपदानाम्। तदियम् आत्मदेशाचारोचिता स्वभावमृदुसरलहृदयजा त्यज्यतां सर्व-विश्वासिता। प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त एव देवः। तद्यथा नागकुलजन्मनः शारिकास्रावितमन्त्रस्य आसीन्नाशो नागसेनस्य पद्मावत्याम्। शुकश्रुतरहस्यस्य च श्रीरशीर्यत श्रुतवर्मणः *श्रावस्त्याम्। स्वप्नायमानस्य मन्त्रभेदोऽभून्मृत्यवे मार्त्तिकावतस्य सुवर्णचूडस्य चूडामणिलग्नलेखप्रतिबिम्बवाचिताक्षरा च चामरग्राहिणी यमतां ययौ यवनेश्वरस्य। लोभबहुलं च बहुलनिशि निधानमुत्खनन्तम्

---

जनपदेषु सञ्चारार्थं निर्गतानि। परिलम्बं विलम्बम्। अभिजनस्य जननस्य। काकोदरः सर्पः। निकारं परिभवम्। केवलं तेजसां राशय इत्यन्वयः॥ उदन्तेन वृत्तान्तेन। अभिषङ्गेषु सङ्गेषु। 'अभिषङ्गः सङ्गमेऽपि' इत्यमरः। नागेत्यादि। स्रावितं क्षारितम्। प्रकाशितमित्यर्थः। ईदृशः प्रयोगो दश-कुमारचरिते चास्ति — 'रहस्यं च न स्रवति।' 'रहस्यश्रवणादनर्थं आशङ्कचेत।' इति च। पद्मावत्यां नगर्याम्। शुकेत्यादि। शुकश्रुतरहस्यस्य इति पाठः। श्रावस्त्यां नगर्याम्। श्रावस्त्यामिति केचित् पठन्ति। स्वप्नायमानस्य इत्यादि। स्वप्नायमानस्य स्वपतो भवतः। अस्वप्नः स्वप्नवान् भवतीत्यर्थे लोहितादिसूत्रेण लोहितादेराकृतिगणत्वात् क्यष्। एतेन पदेन स्वप्नावस्थायां निद्रापरवशतया मन्त्रितं जल्पितमित्ययमर्थोऽत्र विवक्षितः। मृत्यवे मरणाय। मार्त्तिकावतस्य मृत्तिकावत्यां नगर्यां भवस्य। चूडेत्यादि। यमतां मृत्युताम्। यवनः देशविशेषः। लोभेत्यादि। निधानं निधिम्। उत्खनन्तम् उद्धरन्तम्।

---

* व्याख्यानुसारी पाठः।

उत्खातखड्गप्रमाथिनी मथुरायां माथुरं बृहद्रथं वरूथवरूथिनी । नागवन-विहारशीलं च मायामातङ्गाङ्गनिर्गता महासेनसैनिका वत्सपतिम् अयंसिषुः । अतिदयितलास्यस्य शैलूषमध्यमध्यास्य मूर्धानमसिलतया मृणालमिवालुनात् अग्निमित्रात्मजस्य सुमित्रस्य मूलदेवः । प्रियतन्त्रीवाद्यस्य वालवीणाभ्यन्तरसुषिरनिहितनिशिततरवारयो गान्धर्वच्छात्रच्छद्मना चिच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः । प्रज्ञादुर्बलं च बलदर्शनव्यपदेशदर्शिताशेषसैन्यः सेनानीः अनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम् । आश्चर्यकुतूहली च चण्डीपतिः दण्डोपनतयवन-निर्मितेन नभःस्थलयायिना यन्त्रयानेनानीयत क्वापि । काकवर्णं

---

उत्खातः कोशादाकृष्टः । प्रमाथिनी प्रहारिणी । माथुरं मथुरायां भवम् । अत्र मध्यमाक्षरं तवर्गद्वितीयं, मध्यदेशम् । मथुरपदस्य 'मथे विलोडने' इति धातुः । 'मधुरा तु मधूलिका, मथुरा च मधूपघ्ना' इति वैजयन्ती । वरूथः राजा । नागेत्यादि । महासेनः प्रद्योतो राजा । वत्सपतिम् उदयनम् । अयंसिषुः बबन्धुः । अतीत्यादि । अग्निमित्रः शूद्रकः । 'शूद्रकस्त्वग्निमित्रः स्याद्' इत्यमरः । सुमित्रस्य राज्ञः । मूलदेवः कर्णीसुतः । प्रियेत्यादि । तन्त्रीवाद्यं तन्त्रीभिः वाद्यत इति वीणोच्यते । सुषिरं विवरम् । 'कुहरं सुषिरं विवरं बिलम्' इत्यमरः । निशिततरवारयः तीक्ष्णखड्गाः । 'रिष्टिरसि-चन्द्रहासौ तरवारिर्मण्डलाग्रं च' इति हलायुधः । गान्धर्वं गानविद्या । अश्मकः देशविशेषः । प्रज्ञेत्यादि । प्रज्ञादुर्बलं बुद्धिहीनम् । बलदर्शनं भटप्रदर्शनम् (परेडमार्च)। दंसितः बद्धकवचः । 'सन्नद्धो दंसितः सज्ज' इत्यमरः । सेनानीः सेनापतिः । अनार्यः नीचस्वभावः । मौर्यं मौर्यापत्यम् । पुष्यमित्रः सेनापतेर्नाम । आश्चर्येत्यादि । चण्डी नगरी । दण्डोपनतः शत्रुभ्यो भीतः स्वरक्षणक्षमं राजानमाश्रित्य वर्तमानो राजा । उक्तं च— 'दुर्बलो बलवत्सेवी विरुद्धः शङ्किताादिभिः । वर्तेत दण्डोपनतो भर्तर्येवमवस्थितः ॥' इति । यवनः यवनदेशाधिपतिः । काकवर्णः राजा ।

**शैशुनागिं च नगरोपकण्ठे कण्ठं चकर्त निस्त्रिंशेन। अतिस्त्रीसङ्गम् अनङ्गपरवशं शौङ्गममात्यो वसुदेवो देवभूतिं स्वदासीदुहित्रा देवीव्यञ्जनया विगतजीवितमकारयत्। असुरविवरव्यसनिनं चापजह्रुः अपरिमितरमणीयरमणीमणिनूपुरक्वणक्वणाह्लादरभसया मागधं गोधनं गिरिसुरुङ्गया स्वविषयं मेखलाधिपमन्त्रिणः। महाकालमहे च महामांसविक्रयवातालं वेतालस्तालजङ्घो जघान जघन्यजं प्रद्योतस्य पौर्वकं कुमारम्। कुमारसेनो रसायनरसावेशिनश्च वैद्यव्यञ्जनः सुबहुपुरुषान्तरप्रकाशितौषधिगुणो गणपतिर्विदेहराजस्य राजयक्ष्माणमजनयत्। स्त्रीविश्वासिनश्च महादेवीगृहे गूढभित्तिभागं भूत्वा भ्राता भद्रसेनस्यागमत् कालिङ्गस्य**

---

शैशुनाभिमित्यादि। अत्र वाक्ये ग्रन्थो लेखकैः प्रमादात् पातितः न च दृश्यमानेषु कोशेषु उपलभ्यते। शुद्धः कोशो लब्धश्चेत् तत्र निरीक्ष्यताम्। शैशुनागिं शिशुनागस्यापत्यम्। शौङ्गं शुङ्गस्यापत्यम्। देवभूतिं राजानम्। देवीव्यञ्जनया महिषीचिह्नधारिण्या। असुरेत्यादि। अत्रेदमभिप्रेतम्— सर्वेऽपि बिलप्रदेशव्यसनिनो नागकन्यादिसिद्धिमुद्दिश्य हि बिलप्रदेशे वर्तन्ते। अत एतेऽप्यसुरविवरव्यसनिनमेनं नागकन्याकामीति ज्ञात्वा स्वयमेव सुरुङ्गायां काश्चन रमणीर्निवेश्य तासां नूपुरशब्देन अस्य नागकन्यकाभ्रान्तिमापादयन्तः छन्नं स्वविषयमाजह्रुः इति। असुरविवरव्यसनिनं बिलप्रवेशावेशवन्तम् आजह्रुः आनीतवन्तः। मागधं गोधनं, मगधदेशाधिपतिं राजानम्। सुरुङ्गा तिर्यग्भूखातः (७।७।७०)। मेखलः देशविशेषः। महाकालमहे महाकालदेवोत्सवे। वातालम् उन्मत्तम्। वेतालः पिशाचः। तालजङ्घः पिशाचस्य नाम। जघन्यजम् अनुजम्। पौर्वकं[2] पूर्वकस्यापत्यम्। कुमारं नाम। कुमारसेनश्चेत्यादि। कुमारसेन इति विदेहराजस्य विरोधिपक्ष्यः कश्चित् पुरुषः। रसायनरसावेशिनः शरीरसिद्धिकरौषधेच्छाभिनिविष्टस्य। वैद्यव्यञ्जनः वैद्यचिह्नः। राजयक्ष्माणं क्षयम्। स्त्रीत्यादि। कालिङ्गस्य कलिङ्गदेशाधिपतेः

---

१. 'ङ्गा भूमिखातः', २. 'पौर्णिकं पूर्णस्य' - क.

वीरसेनो मृत्यवे । मातृतूलीतलनिषण्णश्च तनयोऽन्यं तनयमभिषेक्तुकामस्याभून्मृत्यवे वज्रभवस्य करूशाधिपतेः । उत्सारणरुचिं च रहसि सलचिवमेव दूरीचकार चकोरनाथं शूद्रकदूतश्चन्द्रकेतुं जीविताम् । मृगयासक्तस्य मथ्नतो गण्डकान् उद्दण्डनड्वलवननिलीनाश्च चम्पाधिपचमूचारभटाः चामुण्डीपतेराचेमुः प्राणान् पुष्करस्य । बन्दिरागपरवशं च परमुक्तजयशब्दमुखरमुखा मङ्खा मूर्खं मौखरिं क्षेत्रवर्माणमुदखनन् । नलिनपुरे च परकलत्रकामुकं कामिनीवेषगुप्तो गुप्तश्चन्द्रगुप्तं शकपतिम् अशातयत् । प्रमत्तानां च प्रमदाकृतश्चापि प्रमादाः श्रुतिविषयमागता एव देवस्य । मधुमोदिनं मधुरसलिप्तैर्लाजैः पुत्रराज्यार्थं महासेनं काशिराजं सुव्रता जघान । जारजनितकन्दर्पदर्पा च दर्पणेन क्षुरपर्यन्तेन

---

मातृतूलीत्यादि । मातृतूलीतलनिषण्णः मातृशयनीयाधोभागस्थितः । 'तूली शय्याकूर्चिकयोः' इति वैजयन्ती । मातृशयनीयतूलीय इत्यपपाठः । वज्रभवस्य राज्ञः । मृत्यवेऽभवदिति शेषः । करूशः देशविशेषः । उत्सारणरुचिं पार्श्ववर्तिजननिरसनरुचिम् । चकोरं पुरम् । चन्द्रकेतुर्नाम राजा । मृगयेत्यादि । मथ्नतः हिंसतः । गण्डकान् खड्गमृगान् । 'गण्डके खड्गखड्गिनौ' इत्यमरः । नड्वलं नडयुक्तस्थलम् । 'नडप्राये नड्वान् नड्वल इत्यपि' इत्यमरः । चम्पा नगरी । चारभटाः शूरयोधाः । 'शूरो वीरश्च विक्रान्तो भटश्चारभटोऽपि च' इति वैजयन्ती । चामुण्डी नगरी । आचेमुः भक्षितवन्तः । बन्दीत्यादि । बन्दिरागः बन्दिषु श्रद्धा । मङ्खाः स्तुतिपाठकाः, इत्युणादिवृत्तिकारः । मूर्खम् अज्ञम् । मौखरिं मुखरस्यापत्यम् । उदखनन् हतवन्तः । नलिनपुरे नलिनाख्यपुरे । गुप्तः नाम । शकः देशविशेषः । मध्वित्यादि । मधुमोदिनं मधुविषये रागवन्तम् । मधुरसलिप्तैः क्षौद्रादिकमधुमिलितविषोपलिप्तैः । मधूलरसलिप्तैरिति च पाठः । तदानीमपि अर्थे विशेषो नास्ति । 'मधूलं तु मधुनि स्त्री', 'रसो रागो विषे वीर्ये' इति वैजयन्ती । सुव्रता काशिराजमहिषी । जारेत्यादिषु सर्वेष्वपि वाक्येषु जघानेत्यनुवर्तते । कन्दर्पदर्पः कामावेशः । क्षुरपर्यन्तेन क्षुरः केशवपनशस्त्री । 'क्षुरोऽस्य वपनं शस्त्रम्' इति वैजयन्ती । तस्य पर्यन्तमिव पर्यन्तं यस्य सः

अयोध्यापतिं परन्तपं रत्नवती जालूथम् । विषचूर्णचुम्बित-मकरन्देन कर्णेन्दीवरेण देवरानुरक्ता देवकी देवसेनं सौह्मम् । योग-परागविसरवर्षिणा च चरणमणिनूपुरेण वल्लभा सपत्नीरुषा वैरन्त्यं रन्तिदेवम् । वेणीनिगूढेन शस्त्रेण बिन्दुमती विडूरथं वृष्णिम् । रस-दिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनम् । अधृष्यागद-लिप्तवदना च विषवारुणीगण्डूषपायनेन पौरवी पोदनेश्वरं सोमम्' इत्येतावदुक्त्वा विरराम । स्वाभ्यादेशसम्पादनाय च निर्जगाम ।

देवोऽपि हर्षः सकलराज्यस्थितीश्चकार । ततश्च तथा कृतप्रतिज्ञे प्रयाणं विजयाय दिशां दित्सति देवे हर्षे गतायुषां प्रतिसामन्तानाम् उदवसितेषु बहुरूपाण्युपलिङ्गानि वितेनिरे । तथा हि— अविप्रकृष्ट-कालदूतहृष्टय इव इतस्ततश्चेलुश्चटुलाः कृष्णसारपङ्क्तयः । प्रचलित-

---

क्षुरपर्यन्तः । रत्नवती परन्तपस्य महिषी । जालूथं जलूथापत्यम् । विषचूर्ण-चुम्बितं विषचूर्णसम्बद्धम् । देवरः भर्तुरनुजः । देवकी देवसेनस्य महिषी सौह्मं सुह्मदेशाधिपतिम् । योगेत्यादि । योगपरागः विषचूर्णः । वल्लभा रन्तिदेवमहिषी । वैरन्त्यं विरन्तिनगर्यां भवम् । वेणीत्यादिषु वाक्येष्वपि सपत्नी-रुषेत्यनुवर्तते । वेणीनिगूढेन केशबन्धगोपितेन । शस्त्रेण केशवपनशस्त्र्या (മയിർക്കത്തി) । 'क्षुरोऽस्य वपनं शस्त्रम्' इति वैजयन्ती । वृष्णिं वृष्णि-वंशोद्भवम् । रसेत्यादि । रसदिग्धं विषदिग्धम् । सौवीरं सौवीरदेशाधिपतिम् । अधृष्येत्यादि । अधृष्यागदः विषादिभिरनपहार्यवीर्यमौषधम् । 'भेषजौषध-भैषज्यान्यगदोऽजायुरित्यपि' इत्यमरः । विषवारुणी विषमिश्रा वारुणी । पोदनं नगरम् । नागकुलजन्मेत्यादीनां वाक्यानां श्रुतप्रमाददोषाभिषङ्गवार्तेन भवताप्येवंविधेषु प्रमादेषु पराङ्मुखेन भवितव्यमिति भावः । एतां च कथां बुभुत्समानैः साकल्येन बृहत्कथायाम् अनुसन्धेयः ।

प्रतिसामन्तानां प्रत्यर्थिनां राज्ञाम् । उदवसितेषु गृहेषु । 'गृहं गेहोदवसितम्' इत्यमरः । उपलिङ्गानि उत्पाताः । 'उपलिङ्गमरिष्टं स्याद्' इति हलायुधः । कृष्णसारः कृष्णमृगः । अन्यत्र कृष्णश्च शारश्च ।

लक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासङ्घातझङ्कारा जह्रादिरे । विकृत-विकृतवदनविवरनिसृतवह्निविसरा वासरेऽपि विरसं विरेसुरुपशिबिरम् अशिवाः शिवाः । शवपिशितप्ररूढप्रणया इव कपिपोतकपोलकपिल-पक्षतयः काननकपोताः पेतुः । आमन्त्रयमाणा इवादुः कालकुसुमानि समप्रुपवनतरवः । तरलतरकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सौध-सालभञ्जिकाः । ददृशुरासन्नकठिनकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिवात्मानं कबन्धम् आदर्शोदरेषु योधाः । चूडामणिषु च चक्रशङ्खकमललक्ष्माणः प्रादुरभवन् पादन्यासा राजमहिषीणाम् । चेटीनां चामराण्यकस्माद् अधावन्त पाणिपल्लवात् । प्रणयकलहेऽप्यदत्तपृष्ठाश्चिरमभवन् भटाः पराङ्मुखा मानिनीनाम् । करिणीकपोलेषु मधुलिहामघटन्त मद्यमदिरा-पानगोष्ठ्यः । समाघ्रातयममहिषगन्धा इव ताम्यन्तः स्तम्बकरिष्वपि

---

मधुसरघाः मधुमक्षिकाः । जह्रादिरे शब्दितवत्यः । विकृतं भीषणम् । विसृतं व्याप्तम् । विरेसुः शब्दितवत्यः । पोतः शिशुः । पक्षतयः पक्षाः । कपोतः पक्षिविशेषः (পায়রা) । आमन्त्रयमाणा इत्यादि । अत्र स्व-समीपाद् गमनार्थमुच्चलितान् सम्मानार्हान् पुरुषान् पुष्पाद्युपहारप्रदानेन सम्मान्य आमन्त्रयमाणस्य पुरुषस्य समाधिर्विवक्षितः । आमन्त्रयमाणाः प्रश्नं कुर्वन्तः । आमन्त्र्यमाणा इति केषुचित् कोशेषु पाठः । अदुः 'डु दाञ् दाने' इति धातुः । तस्य लुङि प्रथमपुरुषबहुवचने रूपम् । उद्भ्रान्तम् ऊर्ध्वमपसृतम् । चूडामणिषु इत्यादि । अत्र भर्तॄन् निहत्य आसां चूडामणिषु हर्षेण पादन्यासाः करिष्यमाणाः सूचिताः । पादन्यासाः पादाङ्काः । चेटीनामित्यादि । चेटीनां राजमहिषीदासीनाम् । चामराणि अधावन्त— भर्तृवधेन त्वत्स्वामिनीनाम् आधिपत्यं चिरेण अपयास्यति, किं मुधा वीज्यमानैरस्माभिः इत्यधावन्तेति भावः । पराङ्मुखाः पुरेति शेषः । समाघ्रातयममहिषगन्धा इवताम्यन्त इति, महिषोऽश्वानां बाधक इति भावः । स्तम्बकरिं, यद्यपि स्तम्बकरिशब्दः 'स्तम्बशकृतोरिन्' (पा० सू० ३. २. २४.) इति सूत्रेण 'व्रीहिवत्सयोरिति वक्तव्यम्' इति (वा०) वचनाद् व्रीहावेवाभिधेये व्युत्पादितः तथाप्यत्र स्तम्बकारकत्वमात्रमेवैतेन विवक्षितमिति । वर्षान्तिजल-

हरयो हरितं नवयवसं न चेरुः । चलवलयावलीवाचालबालिका-बाहुलतिकातालिकातोद्यलालिता अपि ननृतुर्न मन्दमदा मन्दिरमयूराः । निशि निशि च रजनिकरहरिणनिहितनयन इवोन्मुखः तारमुपतोरणम् अकारणादेवाकाणीत् कौलेयकगणः । गणयन्तीव गतायुषः तर्जन-तरलया तर्जन्या दिवसमाट कटकेषु कोट्टवी । कुट्टिमेषु कुटिल-हरिणखुरवेणीतरङ्गिण्य इव तृणराजयोऽजायन्त । जनितवेणीबन्धानि निरञ्जनलोचनरुचीनि निजचषकमधुनि मुखकमलप्रतिबिम्बान्यदृश्यन्त सुभटभटीनाम् । समासन्नात्पापहारचकिता इव चकम्पिरे भूमयः । वध्यालङ्काररक्तचन्दनरसच्छटा इव अलक्ष्यन्त पतिताः शूराणां शरीरेषु विकसितबन्धूककुसुमशोणशोचिषः शोणितवृष्टयः । पर्यग्नीकुर्वाणा इव अविनश्वरीं श्रियम् अविरलस्फुरत्स्फुलिङ्गाङ्गारोद्गारदग्धतारागणा गणशः पतन्तः प्रज्वलिता न व्यरंसिषुरुल्कादण्डाः । प्रथममेव च प्रतिहारीवा-पहरन्ती प्रतिभवनं चामरातपत्रव्यजनानि परुषा बभ्राम वात्या । इति ॥

॥ इति श्रीहर्षचरिते राजप्रतिज्ञा नाम षष्ठ उच्छ्वासः ॥

---

सेकाद् बहुशाखं प्रवर्धमानमित्यर्थः । हरयः अश्वाः । चेरुः भक्षितवन्तः । चलेत्यादि । तालिकातोद्यं हस्ततालम् (൧൧കൊട്ടു൧ക) । स्त्रीणां करतलघट्टनेन लालिता मयूरा नृत्यन्तीति प्रसिद्धम् । उक्तं च— 'तालैः शिञ्जद्वलयसुभगै-र्नर्तितः कान्तया मे यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥' इति । उपतोरणं बहिर्द्वारसमीपे । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । अकाणीत् शब्दितवान् । कौलेयकः श्वा । तर्जन्या उपलक्षिता । तर्जनी प्रदेशिनी (ചൂണ്ടാണി)। आट चचार । कोट्टवी पिशिताशिनी नग्निका (പിശാചിനി) । 'स्त्री नग्निका कोट्टवी स्याद्' इत्यमरः । तृणराजयः दूर्वापङ्क्तयः । सुभटभटीनां सुभटस्त्रीणाम् । वध्यालङ्कारः वधार्हाणां कर्तव्योऽलङ्कारः । पर्यग्नीकुर्वाणाः पर्यग्नीकरणं कुर्वन्तः । अग्निषु प्रज्वलितैः दर्भैः क्रियमाणः संस्कारः पर्यग्नी-करणम् । प्रथममेव हर्षस्योद्योगात् पूर्वमेव । वात्या मण्डलवायुः ।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने षष्ठ उच्छ्वासः ।

## अथ सप्तम उच्छ्वासः ।

अङ्कणवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य पुरुषस्य ॥
धृतधनुषि शौर्यशालिनि शैला न नमन्ति यत्तदाश्चर्यम् ।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥

अथ व्यतीतेषु कतिपयेषु दिवसेषु मौहूर्तिकमण्डलेन शतशः परिगणिते प्रशस्तेऽहनि, दत्ते चतसृणामपि दिशां विजयप्रयोग्ये दण्डयात्रालग्ने, सलिलमोक्षणविशारदैः शारदैरिवाम्बुदैः विचित्रैः कालधौतैः

---

अथ गौडेश्वरविजिगीषाप्रसङ्गेन हर्षस्य विश्वमहीमण्डलविजययात्राप्रदानं, तत्संरम्भश्रवणभीतस्य प्रभवतः प्राग्ज्योतिषेश्वरस्य सप्राभृतप्रदानं, सौहृदसम्पादनं चेति सप्तमोच्छ्वासार्थः । तदेतद् द्वाभ्यामार्याभ्यां सङ्गृह्याह — अङ्कणवेदीति । वर्धितकोऽन्नपिण्डैः किरिक इति केचित्(?) । वल्मीकश्चेति पाठः । कृतप्रतिज्ञस्य पुरुषस्य वसुधाजलधिपातालसुमेरव उत्साहबाहुल्यादङ्कणवेद्यादिवत् सुखसाधना इत्यर्थः । *[अत्र केचित् कृतप्रतिज्ञस्येत्येतस्माद् मात्राच्युतकमिति मन्यन्ते । तत्पक्षे कृताप्रतिज्ञस्येति मात्राधानं कृत्वा अर्थोऽनुसन्धेयः । तदानीम् अङ्कणवेदीकुल्यास्थलीवार्धितका वसुधादिवद् दुःखसाध्या भवन्तीत्यर्थः ।] शैला न नमन्ति यत् तदाश्चर्यं, शैलानामप्यवश्यं नमनं भवितव्यमेव । तन्न भवतीति यत् तदेवाश्चर्यमित्यर्थः ।

अथेत्यादि । दत्ते सम्पादिते । दण्डयात्रालग्ने सेनाप्रयाणमुहूर्ते । सलिलमोक्षणविशारदैः सलिलमोक्षणे प्रगल्भैः, पटुभिरित्यर्थः । 'विद्वत्सुप्रगल्भौ विशारदौ' इत्यमरसिंहः । अन्यत्र सलिलमोक्षणे विशेषेण शारदैः शालीनैः असमर्थैः इत्यर्थः । 'शारत्पक्वादिशालीनौ प्रत्यग्रोऽब्जश्च शारदः' इति वैजयन्ती । अथवा सलिलमोक्षणेन विशेषेण शारदैः शुद्धैः । शारदशब्दः शुद्धवाचीति शारदशब्दव्याख्यानप्रदेशे क्षीरस्वामिना प्रदर्शितम् । शारदैः

---

* कोष्ठकान्तर्गतो भागः [illegible] ।

शातकुम्भैश्च कुम्भैः स्नात्वा, विरचय्य परमया भक्त्या भगवतो नीललोहितस्य अर्चाम्, उदर्चिषं हुत्वा प्रदक्षिणावर्तशिखाकलापमसितवर्त्मानं, दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रशः तिलपात्राणि कनकपत्रलतालङ्कृतशफशृङ्गशिखरा गाश्चार्बुदशः, समुपविश्य विततव्याघ्रचर्मणि भद्रासने, विक्षिप्य प्रथमविक्षिप्तायुधो निजयशोधवलेनाचरणाच्चन्दनेन शरीरं, परिधाय राजहंसलक्ष्मणी सदृशे दुकूले, परमेश्वरचिह्नभूतां शशिकलामिव कल्पयित्वा सितकुसुममुण्डमालां शिरसि, नीत्वा कर्णाभरणमरतकमयूखमिव कर्णपूरगोचरतां गोरोचनाच्छुरितमभिनवदूर्वापल्लवं, विन्यस्य सह शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे, परिपूजितप्रकृष्टपुरोहितकरकीर्यमाणशान्तिसलिलशीकराभ्युक्षितशिराः सम्प्रेष्य वरार्हाणि वाहनानि बहलरत्नालोकविक्षिप्तककुम्भि भूषणानि च भूभुजां, संविभज्य क्लिष्टकार्पटिककुलपुत्रलोकम् उचितैः प्रसाददानैः, उन्मुच्य सर्वबन्धनानि, नियुज्य तत्कालस्फुरणेन कथितात्मानम् इव अष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भम्, अहमहमिकया सेवकैरिव

---

शरत्कालसम्भवैः। नीललोहितस्य महादेवस्य। अर्चां पूजाम्। असितवर्त्मानम् अग्निम्। शफं खुरः। 'शफं क्लीबे खुरः पुमान्' इत्यमरः। शृङ्गशिखरं शृङ्गाग्रम्। अर्बुदशः कोटिशः। भद्रासने सिंहासने। *[नृपासनं तु यद्भद्रासनं सिंहासनं तु तत्। हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्॥' इत्यमरः।] राजहंसलक्ष्मणी उत्कीर्णराजहंसाकारचिह्निते। परमेश्वरः राजा, महादेवश्च। कर्णपूरगोचरतां कर्णपूरस्थानस्थायिताम्। शासनवलयेन, शत्रूणां शासनार्थं प्रतिज्ञया धृतं वलयं शासनवलयम्। प्रतिसरं हस्तसूत्रम्। सम्प्रेष्य दत्त्वा इत्यर्थः। संविभज्य धनान्यंशीकृत्य दत्त्वा। क्लिष्टकार्पटिककुलपुत्रलोकं क्लिष्टानां दारिद्र्यदुःखतप्तानां कार्पटिकानां सहयात्राशायिनां कुलपुत्राणां लोकम्। बन्धनानि कारागृहबन्धान्। अधिकारे कृत्ये। अहमहमिकया— 'अहमहमिका तु सा स्यात् परस्परं यो भवेदहङ्कारः' इत्यमरः।

---

* कोष्ठकान्तर्गतोभागः खगपाठयोर्नास्ति। १. खुरं—ङ. च. क.

सुनिमित्तैरपि समग्रैरग्रतोभवद्भिः प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात् कृतयुगकरणाय भवनान्निर्जगाम ।

नातिदूरे च नगरादुपसरस्वति निर्मिते महति तार्णे समुत्तम्भित-तुङ्गतोरणे तोरणवेदिविनिहितनवपल्लवललामहेमकलशे बद्धवन्दनमाला-दाम्नि धवलध्वजमालिनि भ्रमच्छुकवासलि पठद्द्विजन्मनि मन्दिरे प्रस्थानमङ्गलावस्थानमकरोत् । तत्रस्थस्य चास्य ग्रामाक्षपटलिकः सकल-करणपरिकरः 'करोतु देवो दिवसग्रहणमद्यैवावन्ध्यशासनः शासनानाम्' इत्यभिधाय वृषाङ्कामभिनवघटितां हाटकमयीं मुद्रामुपनिन्ये । जग्राह च तां राजा । समुपस्थापिते च प्रथममेव मृत्पिण्डे परिभ्रश्य कर-

---

अग्रतोभवद्भिः प्रथममेव सम्भवद्भिः । अन्यत्र अग्रभागे तिष्ठद्भिः । जन्यमानं क्रियमाणम् । कृतयुगकरणाय दुष्टनिग्रहेण कृतयुगं कर्तुम् ।

तार्णे तृणमये । तृणमयपूलिकाभिः छादितपटल इत्यर्थः । तोरणवेदिः बहि-र्द्वारवेदिः । पल्लवललामं पल्लवचिह्नम् । 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठे भूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु ॥' इति वैजयन्ती । वन्दनमालादाम्नि तोरणमालादाम्नि । प्रस्थानमङ्गलावस्थानमिति पाठः । ग्रामाक्षपटलिकः— 'अक्षाण्यायमुखानि' इति क्षीरस्वामी । अक्षाणां पटले समूहे नियुक्तः आक्ष-पटलिकः । 'तत्र नियुक्तः' (पा० सू० ४. ४. ६९.) इति ठक् । ग्रामसम्बन्ध्यक्ष-पटलाध्यक्ष इत्यर्थः (പ്രവൃത്തിക്കാരൻ) एतत्तु कौटल्यशास्त्रसिद्धं नाम । करणपरिकरः, करणः लेखकः तत्परिकरः परिच्छदः । तत्सहाय इत्यर्थः । 'करणोऽक्षरजीवनः' इति वैजयन्ती (കണക്കൻ) । दिवसग्रहणं दिवसानां प्रथमारम्भः (നാൾകൊള്ളുക) । शासनानां पत्राणाम् (തിട്ടൂരം) । वृषाङ्कां लेखारूपवृषलाञ्छनाम् । अनेन हर्षस्य महेश्वरत्वं सूचितम् । मुद्राम् अङ्गुलीयादि-

---

१. 'भागे सद्भिः' २. 'कृतयुगवत् कालं कर्तुम्' ३. वन्दनमाला= தோப்பமாலை, ४. 'सम्बन्ध्यक्ष'. ५. புரவன் திருக்கூறு செய்வான்—क. ६. करणपरिकरः लेखकसहायः ख. ग.

कमलादधोमुखी महीतले पपात मुद्रा। मन्दाश्यानपङ्कपटले मृदुमृदि सरस्वतीतीरे परिस्फुटं व्याज्यन्त राजयो वर्णानाम्। अमङ्गलाशङ्किनि विषीदति परिजने नरपतिरकरोन्मनसि—'अतत्त्वदर्शिन्यो भवन्ति अविदग्धानां धियः। तथाहि—एकशासनमुद्राङ्का भूर्भवतो भविष्यति इति निवेदितमपि सुनिमित्तेनान्यथा गृह्णन्ति ग्राम्याः।' इत्यभिनन्द्य च मनसा महानिमित्तं ततः सीरसहस्रसमितसीम्नां ग्रामाणां शतमदाद् द्विजेभ्यः। निनाय च तत्र तं दिवसम्। प्रतिपन्नायां च शर्वर्यां सम्मानितसर्वलोकः सुष्वाप।

अथ गलति तृतीये यामे सुप्तसकलसत्त्वनिःशब्दे दुकुञ्जगुञ्जन्मार्जनाजृम्भमाणगम्भीरध्वनिः प्रयाणपटहो दध्वान। स्थित्वा च मुहूर्तमिव पुनः प्रयाणकोशसञ्चाख्यापकाः स्पष्टमष्टावदीयन्त प्रहाराः पटहे पटीयांसः।

---

रूपेण चिह्नार्थं निर्मितं वस्तु (இலச்சினை)[1]। मन्दाश्यानम् अल्पशुष्कम्। व्याज्यन्त स्वयमेव व्यक्ता अभवन्। राजयः लेखाः। वर्णानाम् अक्षराणाम्। 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' इत्यमरः। अतत्त्वदर्शिन्यः यथातत्त्वदर्शनासमर्था इत्यर्थः। ग्राम्याः जळाः। सीरेत्यादि। सीरसहस्रसमितसीम्नां सीरसहस्रसङ्गतसीम्नाम्। यावती सीराणां सहस्रेण कर्षणीया तावत्या सीमयोपेता(नां) ग्रामाणां शतमदादित्यर्थः। [*'नौवयोधर्म—' (पा० सू० ४. ४. ९१.) इत्यादिसूत्रे सीत्यशब्दार्थभूतसमितशब्दोऽत्र कवेरभिमतः। अतः सीरसहस्रसम्मितसीम्नामिति पाठोऽपपाठः।] प्रतिपन्नायाम् उपस्थितायाम्।

मार्जनाजृम्भमाणः मार्जनालेपनेन जृम्भमाणः। 'मुखेषु मद्दलादीनामन्नेन मृदितेन यत्। क्रियते भस्ममिश्रेण लेपनं सा तु मार्जना॥' इति। प्रयाणकोशः प्रयाणयोग्यः कोशः। कोशः (குரோசம்)[2]। *['गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः। गव्यूत्यर्धं क्रोशः।]

---

१. இலச்சினை, २ क्रोशः=கூப்பிடுதூரம்—क.

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

ततो रटत्पटहे, नदन्नान्दीके, गुञ्जद्गुञ्जे, क्रोशत्काहले, शब्दायमान-शङ्खे, क्रमेणोपचीयमानकटककलकले, परिजनोचितव्यापृतव्यग्रसमग्रगृह-व्यवहारिणि, द्रुतद्रुघणघातघट्यमानकोणिकाकीलकोलाहलकलितककुभि, बलाधिकृतबोध्यमानपाटिकपेटके, जनज्वलितोल्कासहस्रालोकलुप्यमान-त्रियामातमसि, यामचेटीचरणचालनोत्थाप्यमानकामिमिथुनके, कटुकटुक-निर्देशनश्यन्निद्रोन्मिषन्निषादिनि, प्रबुद्धहास्तिकशून्यीक्रियमाणशय्यागृहे, सुप्तोत्थिताश्वीयविधूयमानसटे, रटत्कटकमुखरखनित्रखन्यमानक्षोणीपाशे, समुत्कील्यमानकीलशिञ्जानहिञ्जीरे, उपनीयमाननिगलतालकरवोत्ताल-

नान्दी मङ्गलपटहः । गुञ्जा वाद्यभाण्डम् । 'गुञ्जा स्याद् वाद्यभाण्डेऽपि काकचिञ्चयामपि क्वचिद्' इत्यजयः । काहला (കാളം) । व्यापृतः व्यापार-वान् । गृहव्यवहारी गृहनिर्वाहकः । द्रुघणः कीलाघट्टनसाधनम् । द्रुः वृक्षः हन्यतेऽनेनेति द्रुघणः । हन्तिधातोः 'करणेऽयोविद्रुषु' (पा० सू० ३. ३. ८२.) इत्यप् । 'द्रुघणो मुद्गरघनौ' इत्यमरः ([1]കൊട്ടാപ്പുളി) । घातः प्रहारः । घट्यमानं विचाल्यमानम् । 'घट्ट चलने' इति धातुः । कोणिका पटगृहम् । 'दूष्यं स्थूलं पटकुटी गुणलयनी *कोणिका तुल्या' इति वैजयन्ती । कीलः शङ्कुः । 'शङ्कौ चापि द्वयोः कीलः' इत्यमरः । कलितं सम्बद्धम् । बलाधिकृतः सेनापतिः । पाटिकः कर्मकरः । पटदाने नियुक्त इति केचित् ([2]പുടവ-ഴിടിപ്പാർ) । पेटकं समूहः । उल्का काष्ठदीपः (ചൂട്ട) । यामचेटी यामशायिनी दासी । कटुः तीक्ष्णः । कटु(कः) आधोरणः । निषादी हास्तिपकः । हास्तिकं हस्तिसमूहः । आश्वीयम् अश्वसमूहः । सटा स्कन्धरोम । कटकः [3]वलयः । [4]खनित्रं खननसाधनम् (കൈക്കോട്ട്) । क्षोणीपाशः अश्वानां पादबन्धनो भूमिनिखातो रज्जुविशेषः । समुत्कील्यमानम् उत्पाट्यमानम् । 'कील बन्धने' इति धातुः । कीलः, कीलशब्देनात्र निगलमुखबन्धन(मर्मा)णिर्विवक्षितः (ആണി) । हिञ्जीरः गजबन्धनलोहशृङ्खलः । 'हिञ्जीरो लोहशृङ्खलः' इति वैजयन्ती । तालकः [5]निगलमुखबन्धनकीलः (ഇരിമ്പുതാഴ്) । उत्तालं त्वरितम्, उन्नतं वा ।

१. கொட்டாப்புளி, २. புடவைபிடிப்பார், ३. वलयः=வளை ४. खनित्रं=பாரை, ५, निगलबन्धनयन्त्रं= இரும்புத்தாள்-க *'केणिका' इति मुद्रितवैजयन्त्याम् ।

तुरङ्गतरङ्ग्यमाणाग्रखुरपुटे, लेशिकमुच्यमानमदस्यन्दिदन्तिसन्दानशृङ्खला-खणखणानिनादनिर्भरभरितदशदिशि, घासपूलकप्रहारप्रमृष्टपांसुलकरि-पृष्ठप्रसार्यमाणप्रस्फोटितचर्मणि, गृहचिन्तकपेटकसंवेष्ट्यमानपटकुटीकाण्ड-पटपटमण्डपपरिवल्लपटवितानके, कीलककलापपूर्यमाणचिपिटचर्मपुटे, सम्भाण्डयमानभाण्डागारिणि, भाण्डागारवहनवाह्यमानबहुबलिवाहके,

---

'उत्तालस्त्वरितो ज्ञेयः', 'उत्तालमुक्तेऽपि[1]' इति च हलायुधः। तरङ्ग्यमाणं प्रविचाल्यमानम्। लेशिकः गजानां पुरोधावकः (പരിക്കാരൻ)। सन्दान-शृङ्खला बन्धननिगलः। 'अन्दुको निगलो ने स्त्री हिन्दुकः शृङ्खला त्रयी[2]' इति वैजयन्ती। घासपूलकं तृणबन्धः। प्रमृष्टं शोधितम्[3]। पांसुलं पांसुयुक्तम्। प्रसार्य-माणं विस्तीर्यमाणम्। प्रस्फोटितं विधूतम् (ഉതറപ്പെട്ടതു[4])। चर्मणि आस्तरणे। गृहचिन्तकः गृहकर्मधुरन्धरः[5]। संवेष्ट्यमानं संकुञ्च्यमानम् (ചുരുട്ടുക[6])। पटकुटी पटगृहम् (പാടകം[7])। 'दूष्यं स्थुलं पटकुटी' इति वैजयन्ती। काण्डपटं तिरस्करिणी (തിര)। 'काण्डपटः स्यादपटी' इति वैजयन्ती। पटमण्डपः पटकृतमण्डपः। परिवल्लं गृहादिषु परितो बध्यमाना तिरस्करिणी। पटवितानः पटकृतवितानः (മേൽക്കെട്ടി)। चिपिटचर्मपुटः विस्तृतचर्मप्रसेवकः (തോകലിയ തോലു)। 'चिपिटः पिच्छितो व्यूढे' इति वैजयन्ती। पुटशब्देन उदरं विवक्षितमिति केचित्। सम्भाण्डयमानः भाण्डं समाचिन्वन्। भाण्डं संचिन्वदित्यर्थः। भाण्डशब्दात् 'पुच्छभाण्डचीवराण्णिङ्' (पा० सू० ३. १. २०.) इति समाचयनेऽर्थे णिङ्प्रत्ययः। भाण्डशब्देन मूलधनमुक्तम्। 'स्याद् भाण्डमश्वाभरणे मन्त्रे मूलवणिग्धने' इत्यमरः। भाण्डागारिणि भाण्डागाराध्यक्षे (പണ്ടാരി)। भाण्डागारवहनवाह्यमानबहुबलिवाहके भाण्डा-गारशब्देन तत्स्थं धनं लक्ष्यते। भाण्डागारवहनार्थमानीयमानानेकबलवद्-बोढरि। भाण्डागारवहनवाह्यमानमिति पाठः। भाण्डागारनेतृभिः वाह्यमाना

---

१. 'पि च' इति मङ्खः. २. 'लोऽस्त्री स्याद्' इत्यमरः. ३. प्रमृष्टं=துடைக்கப்பட்டது. ४. विधूनितं=உதரப்பட்டது. ५. धुरन्धरः=அதிகாரி. ६. सङ्कोच्यमानं=சுருட்டப்படாநின்றது. ७. கூடாரம்.

निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलशपेडापीडसङ्कटायमान-सामन्तौकसि, दूरगतदक्षदासेरकक्षिप्यमाणोपकरणसम्भारभारीक्रियमाण-दुष्टदन्तिनि, तिर्यगानमज्जाघनिककरकुट्याकृष्टलम्बमानपरतन्त्रतुन्दिल-चुन्दीजनजनितजनहासे, पीड्यमानशारिवरत्रात्रिगुणग्राहितगात्रविकार-बृंहद्बहुबृहदुन्मदकारिणि, करिघटाघटमानघण्टाटङ्कारक्रियमाणकर्णज्वरे, पृष्ठप्रतिष्ठाप्यमानकण्ठालकदर्थितकूजत्करभे, अभिजातराजपुत्रप्रेष्यमाण-

---

नीयमाना बहुबलिवाहका यस्मिन्। निषादी निषण्णः। अनेकानेकपारोप्यमाणम् अनेकेषु अनेकपेषु गजेषु आरोप्यमाणम्। कोशकलशः धननिधानघटः। पेडापीड. मञ्जूषासमूहः (३)। 'पेडां वदन्ति मञ्जूषाम्' इति हलायुधः। दास एव दासेरकः भृत्यः। भारीक्रियमाणं भारयुक्तीक्रियमाणम्। तिर्यगित्यादि—चुन्दी वेश्या। 'दासी कुट्टनी शम्फली चुन्दी' इति वैजयन्ती। गजस्योपरि गृहीत्वारोपणार्थं तिर्यगानमता जाघनिकेन जैघनोपविष्टेन पुरुषेण। कराकृष्ट्या करेणोर्ध्वमाकृष्टया। लम्बमानया गजपृष्ठभूतलयोर्मध्ये विलम्बमानया। आरोहणाधःपतनयोः स्वतोऽशक्तया तुन्दिलया बृहदुदरिकया चुन्द्या जनितो जनानां हासो यस्मिन्। पीड्यमानेत्यादि। शारिः पर्याणम्। वरत्रा वध्री। गात्रं गजानां पूर्वपादः। सर्वत्र वैजयन्ती—'ना पर्याणे विहङ्गेऽस्त्री शारिर्द्यूतगुडे नषण्' । 'वध्री नध्री वरत्रा च गात्रं पूर्वोऽङ्घ्रिरस्य तु' इति। *[अत्र गात्रं गजानां पूर्वार्धभाग इति केचित्। 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमाद्' इत्यमरः।] पीड्यमानया दृढमाकृष्यमाणया शारिवरत्रया शारिबन्धनवरत्रया। त्रिगुणग्राहितस्य त्रिवेष्टनबद्धस्य गात्रस्य विकारेण क्लेशेन बृंहन्तः गर्जन्तः। बहुबृहदुन्मदकरिणि बहवो बृहन्त उन्मदाः करिणो यस्मिन्। घटमानं सङ्गतीभवत्। कर्णज्वरः श्रोत्रव्यसनम्। कण्ठालः पर्याणविशेषः। मद्दलविशेष इति केचित्। लवणाद्यावपनगोणिकेति केचित्। कदर्थितः क्लेशितः। करभः उष्ट्रः।

---

१. 'हुलव', २. निषण्णः=[Tamil text], ३. मञ्जूषासमूहः=[Tamil text], ४. इति भट्टः, ५. 'धनभागोप', ६. 'मध्ये लम्ब' ७, 'या वरत्रया आरो' ८. 'दुदरया कयाचिद् जनितो जनहासो यस्मिन्', ९. 'पादभागः'-क.

*कोष्ठकान्तर्गतो भागः क्वचित्पाठकोऽनास्ति.

**कुलप्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने, गमनवेलालब्धवारणाधोरणान्विष्यमाणनवमेवके, प्रसादवित्तपत्तिनीयमाननरपतिवल्लभवरवाजिनि, चारुचारभटसैन्यन्यस्यमाननासीरमण्डनाडम्बरस्थूलस्थासके, स्थानपालकपर्याणलम्ब्यमानलवणलायिकाकिङ्किणीनालिकासङ्कलिततलसारके कुण्डलीकृतावरक्षणीजालजटिलवल्लभपालाश्वघाटानिवेश्यमानशाखामृग, परिवर्धकाकृष्यमाणार्धजग्धप्राभातिकयुग्याशनप्ररोहके, व्याघ्रकोशी-**

---

कुलप्रयुक्तः कुलक्रमागतः। कलत्रवाहने कलत्रवहनार्थे वाहने। गमनवेलालब्धः गमनकालप्राप्तः। गमनवेलाविलब्ध इति च पाठः। तदानीं गमनवेलायां स्वामिना दत्त इत्यर्थः[1]। प्रसादवित्तः प्रसादधनः, अन्तरङ्ग इत्यर्थः। पत्तिः पदातिः। चार्वित्यादि। चारभटसैन्याः शूरसैनिकाः। नासीरः युद्धेषु अन्येभ्योऽग्रतः प्रवेशः (മുഖി)। स्थासकः चर्चा। सर्वत्र वैजयन्ती— 'शूरो वीरश्च विक्रान्तो भटश्चारभटोऽपि च।' 'नासीरोऽस्त्र्यग्रयानं स्यात्' 'स्थासको हस्तबिम्बः स्यात्।' इति। चारवः चारभटसैन्यन्यस्यमानाः रच्यमाना नासीरमण्डनाडम्बरार्थाः स्थूलाः स्थासका यस्मिन्। स्थानपालकः मन्दुरादिस्थानरक्षकः। लवणदायिकाः अश्वानां लवणप्रदानाय चर्मादिविरचितः प्रसेवकः। नालिका अश्वानां तैलप्रदानाय चर्मादिविरचितः प्रसेवकः। उभयत्र वैजयन्ती— 'लवणस्य प्रदानाय कृता¶लवणदायिका। तैलस्य नालिका' इति। सङ्कलितं बद्धम्। तलसारकम् अश्वानां वक्षःपट्टकम्। अत्र वैजयन्ती— 'वक्षःपट्टे तलिका तलसारकम्' इति। कुण्डलीकृतं मण्डलिताकारं बद्धम्। अवरक्षणी अश्वानां मुखरज्जुः (ചിറവായ്കയറ്)[3]। 'मुखरज्जुस्तु सा स्याद् दन्तालयवरक्षणी' इति वैजयन्ती। वल्लभपालः राजाभिमताश्वग्राहकः। अश्वघाटाः अश्वस्य अवटुप्रदेशः (പിടലി)। 'घाटामवटुं कृकाटिकामाहुः' इति हलायुधः। परिवर्धकेत्यादि— प्ररोहकः अश्वादीनां मुद्गादिप्रदानप्रसेवकः (പൊക്കണം)[4]। 'युग्याशनप्रसेवे तु द्वौ बोक्काणप्ररोहकौ' इति वैजयन्ती। परिवर्धकेन अश्वग्राहिणः अकृष्यमाणार्धजग्धेन अर्धभक्षितेन प्राभातिकेन प्रभातकालयोग्येन युग्याशनेन मुद्गाद्यश्वाशनेन युक्तः प्ररोहको यस्मिन्। व्याघ्रकोशी

---

1. വഴങ്കപ്പട്ടത്, 2. മുഖ്ക്കാരി, 3. ചിറവായ്കയറ്, 4. പൊക്കണി-ക

*'लवणदायिके'ति व्याख्यानुसारी पाठः। ¶'लवणलायिके'ति मुद्रितवैजयन्त्याम्।

विजृम्भमाणघासिकघोषे, गमनसम्भ्रमभ्रमदुत्तुण्डतरुणतुरङ्गलभ्यमाना-रोहमन्दुरा[1]विमर्दने, सज्जीकृतकरेणुकारोहाह्वानसत्वरसुन्दरीदीयमानमुखा-लेपने[2], चलितप्राकृततुरङ्गप्रधावितप्राकृतप्रातिवेश्यलोकलुण्ठ्यमाननिर्घास-सस्यसञ्चये, सञ्चलत्तैलचक्राक्रान्तचक्रीवति, चक्रचीत्कारमुखरगन्त्रीगण-गृह्यमाणमहलवर्त्मनि, अकाण्डोड्डीयमानभाण्डभरितानडुहि, निकटघास-लाभलुभ्यल्लुम्बनप्रथमप्रसार्यमाणसारसौरभेये, प्रमुखप्रवर्तमानमहासामन्त-महानसे, पुरप्रधावद्ध्वजवाहिनीप्रियशतोल्लापलभ्यमानसङ्कटकुटीरान्तराळ-निस्सरणे, करिचरणचलितपठकोत्थितलोकलोष्ठाहन्यमानमेण्ठकक्रियमाणा-

---

परम्पराह्वानम् । घासिकः यवसाहारकः (തെപ്പക്കാരൻ) । उत्तुण्डः उन्मुखः । आरोहः आरोहणम्, आधोरण इति वा । दीयमानं सम्पाद्यमानम् । मुखा-लेपनं कस्तूर्यादिभिः मुखालेपकरणम् । प्राकृतः निहीनः । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः । प्रातिवेश्यलोकः पार्श्वनिवेशवासी जनः । लुण्ठ्यमानः यथेष्टं विलुप्यमानः । निर्घासः उपयुक्तशेषयवसः । सस्यं मह्यादि । तैलचक्रं तिलपीडनयन्त्रम् (ചക്ക) । चक्रीवति गर्दभे । 'चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः' इति सिंहः । गन्त्री शकटः । 'क्लीबेऽनः शकटोऽस्त्री स्याद् गन्त्री कम्बलिवाह्यकम्' इत्यमरः । महलः बहुशो जनसञ्चरणेन विशालीकृतः । अकाण्डोड्डीयमानं कालनियमरहित[3]मुत्प्लवमानं सन्ततमुत्प्लवमानम् इत्यर्थः । भाण्डभरितः भाण्डेन सञ्जातभरः । निकटघासः निकटस्थयवसः । लुम्बनः उत्सपालकः (ഏത്തുവാണിയൻ) । प्रसार्यमाणः बाध्यमानः । सारः दृढः । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । सौरभेयः उक्षा । 'अनड्वान् सौरभेयो गौः' इत्यमरः । प्रमुख-प्रवर्तमानम् अग्रतो गच्छत् । महानसं पाकस्थानम् । 'समानौ रसवत्यां तु पाकस्थानमहानसे' इत्यमरः । अत्र पाकोपकरणं लक्ष्यते (ॳടുക്കളപ്പാത്രം[4]) । उल्लापः परस्परं भाषणम् । 'उल्लापो भाषणं मिथः' इत्यमरः । कुटीरं पत्रगृहम् (കുടിൽ) । लोष्टं कपालः (ഓട്') । (मेण्ठरः ? मेण्ठकः) हस्तिपकः ।

---

१. പുൽമേയ്പ്പാൻ' २. 'मुखानुलेपन' ३. 'राहित्येनोत्प्लव'

४. ॳടുക്കളപ്പാത്രം-

सत्रसाक्षिणि, सङ्घट्टविघट्टमानव्यालपल्लीपलायमानक्षुद्रकुटुम्बके, कलकलोपद्रवद्रवद्द्रविणबलीवर्दविद्राणवणिजि, पुरस्सरदीपिकालोकनिरलायमानलोकोत्पीडप्रस्थितान्तःपुरकरिणीकदम्बके, हयारोहाहूयमानलम्बितशुनि, सरभसचरणनिपतननिश्चलगमनसुखायमानखट्क्षत्रियस्तूयमानठक्कुरगुणे, त्रस्नुवेसरविसंवादसीदद्दाक्षिणात्यसादिनि, रजोजग्धजगति, प्रयाणसमये प्रतिदिशमागच्छद्भिर्गजवधूसमारूढैराधोरणैः, ऊर्ध्वध्रियमाणहेमपत्रभङ्गभास्वरशार्ङ्गैः, अन्तरासनासीनान्तरङ्गगृहीतासिभिः, ताम्बूलिकाविधूयमानचामरपल्लवैः, पार्श्वासनिकार्पितभस्त्राभरणभिण्डिपालफलकैः, पत्रलताकुटिलकलधौतनलकपल्लवितपर्याणैः, पर्याणपक्षक-

सङ्घट्टेत्यादि— पल्ली कुटीरं (കടിൽ)। 'कुटीरस्तु कुटी पल्ली' इति वैजयन्ती। सङ्घट्टा जनसम्मर्दाः। विघट्टमानव्यालत्वाद् विश्लिष्यद्दुष्टगजत्वात् पल्लीभ्यः पलायमानं क्षुद्रकुटुम्बं यस्मिन्। कलकलेत्यादि— कलकलोपद्रवाद् जनकोलाहलाख्योपद्रवाद् द्रवद्द्रविणबलीवर्दत्वाद् धावमानसम्भारवाहकोक्षत्वाद् विद्राणो विषण्णो वणिग् यस्मिन्। उत्पीडः सम्मर्दः। अन्तःपुरकरिणी राजस्त्रीवाहिका करिणी। हयारोहः अश्वसादी। लम्बितशुनि पश्चात्कृतविश्वम्भसारमेये। खट्क्षत्रियः अश्वाचार्यः, क्षत्रियविशेष इत्युपदेशः (ഏറാ-വാരിയർ)। *[खिट्करक्षत्रिय इति केचित्। खट्कर इति कश्चिद्देशविशेषः। तत्रत्यः क्षत्रियः। अश्वाचार्यः क्षत्रियविशेष इति केचित्।] ठक्कुरः राजिगर्दभः (വാൾക്കഴുത)। गुणः अनेनात्र शैघ्र्यं विवक्षितम्। त्रस्नुः त्रसनशीलः। वेसरः अश्वतरः (കോവർകഴുത)। विसंवादः प्रातिकूल्यम्। पत्रभङ्गः परिच्छेदः। शार्ङ्गं धनुः। 'शार्ङ्गं चापे हरेश्चापे' इति वैजयन्ती। अन्तरासनासीनः आसनं गजस्कन्धदेशः। 'आसनं स्कन्धदेशः स्याद्' इत्यमरः। आसनान्तरस्थित इत्यर्थः। आसनशब्देन आसनमेवोच्यते इति केचित्। पार्श्वासनिकार्पितं पार्श्वोपवेशिनि निहितम्। भस्त्राभरणं चर्मकृतम् इषुभाजनम्। भिण्डिपालः आयुधविशेषः (പിണ്ടിവാളം)। फलकं चर्म (കടക)। पत्रलता पत्ररेखा। नलकः समायोगः, कुड्कुर इति केचित्। पर्याणं(പല്ലണ)। पर्याणेत्यादि—

१. 'सम्भारक्लेशितोक्षकत्वात्', २. ஏற்றுயகம் செய்வார், ஆசாரியார்-क.

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

परिक्षेपपट्टिकाबन्धनिश्चलपट्टोपधानस्थिरासनैः, प्रचरत्पादपुलिका-स्फालस्फायमानपदबन्धमणिशिलाशब्दैः, उचितनेत्रसुकुमारस्थगनस्थगित-जङ्घाकाण्डैश्च, कार्दमिककाषायासितपिङ्गकार्पासैश्च, अलिनीलमसृण-सतुलासमुत्पादितसितसमायोगपरभागैश्च, अवदातदेहवर्णविराजमान-राजावर्तपट्टमेचककञ्चुकैश्च, वीध्रचीननिचोलकैश्च, तारमुक्तास्तबकस्तबकित-स्तबरकवारबाणैश्च, नानाकषायकर्बुरकूर्पासकैश्च, शुकपिञ्छच्छायाच्छादनैश्च, व्यायामोल्लुप्तपार्श्वप्रदेशप्रविशद्बाहुचलस्तबन्धविभक्तत्रिकैश्च, गतिवशवेल्लित-

---

पर्याणस्य गजोपरि स्थापितस्य पल्ययनस्य पक्षकपरिक्षेपपट्टिकया पार्श्ववेष्टनकक्ष्यया कृतेन बन्धेन निश्चलैः पट्टोपधानैः पट्टवस्त्रकृतैः उपधानैः स्थिरमबाधानम् आसनं येषाम्। पादपुलिकास्फालः पादनिधानफलककृत आघातः। पादपुलिका (७०४.७५३)। 'पादपुल्यां पादपुली' इति वैजयन्ती। स्फायमानः वर्धमानः। 'स्फायी वृद्धौ' इति धातुः। पदबन्धः पादाभरणम्। नेत्रस्थगनं नेत्रपट्टकृत-कूर्पास। स्थगितं संवृतम्। कार्दमिकेत्यादि— कार्दमिकाः कर्दमेन रक्ताः, काषायाः कषायेण रक्ताः, अत एवासिताः पिङ्गलाश्च पिङ्गाः कूर्पासविशेषा येषाम्। *[अलीत्यादि— समायोगः सङ्गः। अलिवन्नीलाभिः स्थूलाभिश्च सतुलाभिः कूर्पास-विशेषैः समुत्पादितस्य समायोगस्य परभागो गुणोत्कर्षः येषाम्।] राजावर्तपट्टः नीलपट्टः। वीध्रचीननिचोलकैः विमलचीनपट्टकृतकूर्पासैः। वीध्रचीनचोलकै-रिति च पाठः। उभयत्र वैजयन्ती— 'निचोलः कञ्चुकश्चोलः कूर्पासश्चाङ्गिको-ऽस्त्रियाम्' इति। तारेत्यादि — स्तबकः (७७८.७६०)। ताराणां मुक्तानां शुद्धानां मुक्तानां स्तबकेन पुञ्जेन स्तबकितः दन्तुरितः स्तबरकवारबाणः स्तबरककृतः कञ्चुको येषाम्। कर्बुरः नानावर्णः। कूर्पासः कञ्चुकविशेषः (८५५.७७०)। शुकपिञ्छं शुकपक्षम्। 'पिञ्छं बर्हे खगच्छदे' इति वैजयन्ती। आच्छादनं प्रावरणम्। व्यायामोल्लुप्तं व्यायामकृशमित्यर्थः। पार्श्वं बाहुमूलाधोभागः। 'बाहुमूले उभे पक्षौ पार्श्वमस्त्री तयोरधः' इत्यमरः। प्रविशत् घटमानम्। चलस्तबन्धः चलवीरम्। वेल्लितं प्रेङ्खितम्।

---

१ 'पादफुली' इति मुद्रितवैजयन्तीपाठः। * कोष्ठकान्तर्गतो भागः क्वपाठयोर्नास्ति।

हारलताग्लगल्लोलकुण्डलोन्मोचनप्रधावितपरिजनैश्च, चामीकरपत्राङ्कुरदन्तुरकर्णपूरविघट्टनवाचालकवालपाश्यैश्च, उष्णीषपट्टावबद्धकर्णोत्पलनालैश्च, कुङ्कुमरागकामलोत्तरीयान्तरितोत्तमाङ्गैश्च, चूडामणिखण्डखचितक्षौमनिचोलैश्च, मायूरातपत्रायमाणशेखराङ्गीयमानषट्पदपटलैश्च, मार्गागतशारीरशारिवाहिवेगदण्डैश्च, पुरश्चच्चामरकिर्मीरकार्मरङ्गचर्ममण्डलमण्डनोङ्गीयमानडामरचटुलचारभटभरितभुवनान्तरैः आस्कन्दत्काम्बोजवाजिशतशिञ्जानजातरूपायानरवमुखरितदिङ्मुखैः निर्दयप्रहतलम्बापटहशतपटुरवबधिरीकृतश्रवणविवरैः उद्घुष्यमाणनामभिः उन्मुखपादातप्रतिपाल्यमानाज्ञापातैश्च राजभिरापुपूरे राजद्वारम्।

उदिते च भगवति दिनकृति राज्ञः समायोगग्रहणशंसी सस्वान संज्ञाशङ्खो मुहुर्मुहुः। अचिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव गगनविलोलकर्णतालविलासैः कुर्वाणया करेणु-

लगत् सज्यमानम्। उन्मोचनं त्याजनम्। चामीकरपत्राङ्कुरदन्तुरकर्णपूरः चामीकरमयैः पत्रैः दलैः अङ्कुरैश्च दन्तुरः कर्णपूरः। विघट्टनं ताडनम्। वालपाश्यैः ललाटोपरिभागे बन्धनीयैः पट्टैः केशाभरणविशेषैः। 'वालपश्या पारितथ्या पत्रपाश्या ललाटिका' इत्यमरः। अवबद्धम् प्रतिबद्धम्। नालैः दण्डैः (கம்பு)। रागः रञ्जनम्। क्षौमनिचोलैः क्षौममृतशिरश्छादनैः (மூக்கு)। शारीरः शरीरयोग्यः। शारिवाही बद्धपर्याण इत्यर्थः। वेगदण्डैः गमैः। [1]किर्मीरः शबलः। 'चित्रं किर्मीरशबलकल्माषैताश्च कर्बुरे' इत्यमरः। कार्मरङ्गचर्म कर्मरङ्गाख्याजिनविशेषबद्धं फलकं (ஒருவகைத் தோல்கேடயம் கேடகம்)। 'फलकोऽस्त्री फलं चर्म' इत्यमरः। केचित् कार्मरङ्गचर्म कार्मरङ्गाख्यचर्म अजिनमिति व्याचक्षते। डामरः भयङ्करः। आस्कन्दन् आस्कन्दिताख्यया गत्या गच्छन्। आयानम् अश्वालङ्कारः। लम्बापटहः पटहविशेष (பேரிகை)। पादातं पदातिसमूहः। 'पादातं पत्तिसंहतिः' इत्यमरः। आज्ञापातैः आज्ञाप्रदानैः।

समायोगग्रहणं सन्नाहबन्धः। सस्वान शब्दितवान्। कर्णतालविलासैः

१. क्षौमनिचोल = முக்காடு २. किर्मीरः कर्बुरः, ३. फलकं = பரிசை-கே

कया सिद्धियात्रयोद्यमानः, वैडूर्यदण्डविकटेनोपरि प्रत्युप्तपद्मरागखण्ड-मयूखखचिततया सूर्योदयदर्शनकोपादिव लोहितायता ध्रियमाणेन मङ्गलातपत्रेण, कदलीगर्भाभ्यधिकम्रदिम्ना च नवनेत्रनिर्मितेन द्वितीय इव भोगिनामधिपतिः अङ्गलग्नेन कञ्चुकेन, अमृतमथनदिवस इव क्षीरोद-फेनपाण्डराम्बरवाही, पारिजातपादप इवाखण्डलभूमिमारूढः, विधूय-मानचामरमरुद्विधूनेन कर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरण-चूर्णेनेव दिशश्च्छुरयन्, अभिमुखचूडामणिघटमानपाटलप्रतिबिम्बम् उदयमानं सवितारमपि पिबन्निव तेजसा, बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराण्योष्ठमुद्रयानुरागस्य महार्हहारमरीचिचक्रवालानि

---

कर्णप्रहारकरणैः । सिद्धियात्रया— 'यस्यां तु यात्रासमये समारूढे नराधिपः । प्राप्नोति महतीं सिद्धिं सिद्धियात्रेति सा स्मृता ॥' इति । सूर्योदयः सूर्योद्गतिः, सूर्यस्य अभिवृद्धिरिति च । लोहितायता लोहित-वर्णायमानेन आतपत्रेण उपलक्षितः । कदलीत्यादि उभयत्र समानम् । नवनेत्रनिर्मितेन नवनेत्रपट्टविरचितेन । अन्यत्र नवमन्थनरज्जुत्वेन निर्मितेन । अङ्गस्य अङ्गलग्नस्य च कञ्चुकस्याभिन्नतया एवमुक्तम् । 'नेत्रं नाड्यां तरोर्मूले वस्त्रे दृशि मथो गुणे' इति वैजयन्ती । भोगिनाम् अधिपतिः वासुकिः । कञ्चुकेन वारबाणेन, निर्मोकेण च । फेनपाण्डराम्बरवाही फेनवत् पाण्डरवस्त्रवाही । अन्यत्र फेनैः पाण्डराकाशवाही । अखण्डलभूमिमारूढः अखण्डां भुवमारूढः । समस्तामपि भुवमाक्रान्तवानित्यर्थः । 'खण्डोऽस्त्री खण्डलम्' इत्यमरशेषे । अथवा आखण्डलस्य इति छेदः । भूमिः वेषः । आखण्डलस्य भूमिमारूढः । आखण्डलसदृश इत्यर्थः । अन्यत्र आखण्डलभूमिम् आखण्डलस्थानं स्वर्गं अधिरूढः । तेजसा प्रभावेण, किरणेन च । ताम्बूलसिन्दूरं ताम्बूलरसरागाख्य-सिन्दूरम् । मुद्रापक्षे ताम्बूलरसरागवर्णं सिन्दूरम् । विलभमानः प्रयच्छन् । ओष्ठमुद्रया ओष्ठाख्यमुद्रया । मुद्रा (இலச்சினை)[3] । अनुरागस्य विलभमानः

---

१. महेन्द्रसदृश-ख.　२. विलभमानः=வழங்கம்.　३. இலச்சினை-क.

चामराणीव दिशो ग्राहयन्, राजकेक्षणोत्क्षिप्तत्रिभागया त्रीनपि लोकान् करदानायाज्ञापयन्निव सविभ्रमं भ्रूलतया, द्राघीयसा बाहुप्राकारेण परिक्षिपन्निव रिरक्षिषया सप्तापि सागरमहाखातानि, अखिलमिव क्षीरोदमाधुर्यमादायोद्गतया लक्ष्म्या समुपगूढः, गाढममृतमय इव पीयमानः कुतूहलोत्तानकटकलोकलोचनसहस्रैः, स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेणेव मज्जन्निव, मज्जानमपि लिम्पन्निव सौभाग्यद्रवेण द्रष्टॄणाम्, अमरपतिरिव अग्रजन्मवधकलङ्कप्रक्षालनाकुलः, पृथुरिव पृथिवीशोधनाधानसङ्कल्पितसकलमहीभृत्समुत्सारणैः पुरस्सरैरालोकशब्दकारकैः सहस्रसङ्ख्यैरर्क इव किरणैः अधिकारचातुर्यचञ्चलचरणसञ्चलनचटुलैः व्यवस्थास्थापननिष्ठुरैः भयपलायमानलोककोलाहलव्रीडान्तरिता दिशोऽप्यादेशं ग्राहयद्भिरिव चकितकदलिकासम्पातभीतप्रचारं पवनमपि विनये स्थापयद्भिरिव द्रुतचरणोद्धूतधूलीपटलावधूतान् दिनकरकिरणानप्युत्सारयद्भिरिव कनकवेत्रलतालोक-

अनुरागपरवशं कुर्वन्नित्यर्थः। राजकं राजसमूहः। 'अथ राजकम्। राजन्यकं च नृपतिः क्षत्रियाणां गणे क्रमात्॥' इत्यमरः। परिक्षिपन् परिवेष्टयन्। सागरमहाखातानि सागराख्यमहापरिखाः। माधुर्यं प्रियताम्, साधुतामिति च। *[स्वादुत्वं च। 'स्वादुप्रियौ तु मधुरौ क्रूरौ कठिननिर्दयौ' इत्यमरः।] मज्जानम् अस्थ्यन्तर्गतं स्नेहम्। अग्रजन्मवधकलङ्कप्रक्षालनाकुलः गौडाधिपेन अग्रजन्मनो ज्येष्ठस्य वधाद् जनितात्मकलङ्कस्य प्रक्षालनाकुलः गौडहनने व्यापृत इत्यर्थः। अन्यत्र वृत्राख्यब्राह्मणवधपापशोधनाकुलः। इन्द्रो वृत्रनामानं ब्राह्मणं निहत्य महापातकाभिभूतः तत्क्षालनाय आकुलोऽभूद् इति कथा। शोधनाधानं निष्कण्टकीकरणम्। अन्यत्र समीकरणम्। सङ्कल्पितं प्रतिज्ञातं, सम्यक् कृतं च। महीभृत्समुत्सारणं राज्ञां निरसनम्, पर्वतानां क्षेपणं च। आलोककारकैः आलोकशब्दस्य प्रयोक्तृभिः। अन्यत्र तिमिरनाशात् प्रकाशकारिभिः। कदलिकासम्पातः करिकेतुसङ्गतिः।

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति। १. 'क्षपेक्ष' २. 'शनात्'-क.

विक्षिप्यमाणं दिनमपि दूरीभावयद्भिरिव दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः।

अवनमति च विनयनमितवपुषि भयचकितमनसि चलनशिथिलमणिकनकमकुटकिरणनिकररुचिरशिरसि विलुलितकुसुमशेखररजसि राजचक्रे प्रभामुचां चूडामणीनाम् अवाञ्चस्तिर्यञ्चश्च चञ्चन्तो मरीचयः चाषराशय इव सुशकुनसम्पादनाय चेलुः। मेघायमानरेणुमेदुरं मन्दिरशिखण्डिनः खमुड्डीयमानाः कोमलकल्पपादपपल्लववन्दनमालाकलापा इवाबध्यन्त दिग्द्वारेषु। दिक्पालैः प्रणम्यमानश्च नेत्रत्रिभागैश्च कटाक्षैश्च समग्रेक्षितैश्च भ्रूवलितैश्च अर्धस्मितैश्च परिहासैश्च छेकालापैश्च कुशलप्रश्नैश्च प्रतिप्रणामैश्च आज्ञादानैश्च क्रीणन्निव मानमयान् प्राणान् प्रणयदानैः वीराणां वीरो यथानुरूपं संविबभाज राजकम्।

अथ प्रस्थिते राजनि कलकलत्रस्तदिङ्नागफीत्काररव इव इतस्ततस्तारतरस्तूर्याणां तस्तार प्रतिध्वानिः आशातटेषु। आशागजेभ्यः

---

परिकरः समूहीभावः।

अवाञ्चः अवाङ्मुखाः। चञ्चन्तः लोलाः। चाषेत्यादि — चाषः पक्षिविशेषः (കാടൻ)। शकुनं निमित्तम्। चाषदर्शनादिकं मङ्गलमिति नैमित्तिकाः। उक्तं च— 'भरद्वाजमयूरस्य चाषस्य नकुलस्य च। गमने दर्शनं पुण्यं दुर्लभं तु प्रदक्षिणम्॥' इति। मेदुरं पीवरम्। वन्दनमाला तोरणमाला। प्रणम्यमानो राजकेनेति शेषः। कटाक्षैः अपाङ्गदर्शनैः, ईषदक्षिनिरीक्षणैः। भ्रूवलितैः भ्रूरेचनैः। परिहासैः नर्मालापैः। छेकालापैः विदग्धोक्तिभिः। 'छेको विदग्धे गृह्ये च' इति वैजयन्ती।

तस्तार छादितवान्। आशागजेभ्यः 'क्रुधद्रुह०' (पा० सू० १.४.३७)

---

* 'जनपरिकर.' इति स्याद् व्याख्यानुसारी पाठः।

१. शाकुनिकाः, २. मयूराणां, ३. एतेषां, ४. भ्रूचञ्चलितैः भ्रूविलासैः—क.

प्रकुपितानां त्रिप्रस्रुतानां करिणाम् मदप्रस्रवणवीथीभिरलिकुलकालीभिः कालिन्दीवेणिकासहस्राणीव सस्यन्दिरे। सिन्दूररेणुराशिभिररुणायमानबिम्बे रवौ अस्तमयमाशशङ्किरे शकुनयः। पद्मादकुलकोलाहलमांसलैः कर्णतालनिस्वनैस्तिरोदधिरे दुन्दुभिध्वनयः। दोधूयमानः सचराचरमाचचाम चामरसङ्घातो विश्वम्। अश्वीयश्वासविक्षिप्तैः शिश्विते सिन्दुवारदामशुचिभिर्निरन्तरमन्तरिक्षं फेनपिण्डैः। पिण्डिततगरस्तबकपाण्डराणि पपुरिव परस्परसङ्घट्टनष्टाष्टदिशं दिवसमुच्चचामीकरदण्डानि आतपत्रवनानि। रजोरजनीनिमीलितोऽपि मकुटमणिशिलावलीबालातपेन विचकास वासरः। राजतैर्हैरण्मयैश्च मण्डनकभाण्डमण्डलैर्ह्रादमानैः हरीणामपहृतापरह्रादा हरितो बधिरतामिव दधुः। अरिप्रतापानलनिर्मूलनायेव मदोदशीकरैः शिशीकिरे करिणः ककुभां चक्रवालम्। चक्षुषाम् उन्मेषं मुमुषुस्तटित्सन्निभानि चूडामणीनाम् अर्चींषि। स्वयमपि विसिष्मिये सम्पदा समापततां बलानां भूमिपालः। सर्वतो

---

इत्यादिना सम्प्रदानसंज्ञा। त्रिप्रस्रुतानां त्रिधा मदजलनिष्यन्दिनाम्। गण्डाभ्यां गुह्यस्थानेन च मदजलक्षारिणामित्यर्थः। वीथीभी राजिभिः। वेणिका जलप्रवाहः। मांसलैः प्रभूतीकृतैरित्यर्थः। दोधूयमानः पुनःपुनः धूयमानः। आचचाम भक्षितवान्, तिरस्कृतवानित्यर्थः। विश्वं जगत्। शिश्विते श्वेतवर्णीबभूव। 'श्विता वर्णे' इति धातुः। शुचिभिः श्वेतैः। पिण्डिततगरस्तबकं पिण्डीकृतनन्द्यावर्तपुष्पगुच्छम्। 'नन्द्यावर्ते तु तगरः' इति वैजयन्ती। डिण्डीरस्तबक इति च पाठः। फेनपुञ्ज इत्यर्थः। 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। निमीलितः तिरस्कृतः। विचकास प्रकाशीबभूव। मण्डनकभाण्डं मण्डनार्थम् आभरणम्। 'स्याद् भाण्डमश्वाभरणे' इत्यमरः। हरीणाम् अश्वानाम्। हरितो बधिरतामिव दधुः। हरितो दिशोऽन्यत्र शब्दविषया नाभूवन्नित्यर्थः। निर्मूलनाय निर्मूलीकरणाय। शिशीकिरे सिषिचुः। 'शीकृ सेचने' इति धातुः। उन्मेषम्

विक्षिप्तचक्षुश्चाद्राक्षीद् आवासस्थानात् प्रतिष्ठमानं स्कन्धावारम् अधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकम्, अम्भोनिधिमिव कुम्भभुवो वदनात् प्लावितभुवनम् अभिनिष्पतन्तम्, अर्जुनबाहुदण्डसम्पिण्डितमुक्तमिव सहस्रधा प्रवर्तमानं नर्मदाप्रवाहम् 'इत्थं मातः किं लम्बसे, लगति तुरङ्गकः। भद्र! भग्नचरण इव सञ्चरसि, तिष्ठ यावदमी पुरस्सराः सञ्चरन्ति। सरभसमुपरि किं वाहयसि वाहम्, उक्षिण किं न पश्यसि निश्शूक! शिशुकं शयानम्। वत्स रामिल! रजसि यथावन्न पश्यसि, गलति सक्तुप्रसेवकः। किमेवमित्वर! त्वरसे। सौरभेयसरणिमपहाय हयमध्यं धावसि धीवरि!। प्रविशसि

---

उन्मीलनम्। स्कन्धावारं सेनाम्। प्लावितम् आक्रान्तम्। अर्जुनः सहस्रबाहुः। इत्थमित्यादि— लम्बसे विलम्बसे। लगति संसजति (ஒட்டிக்கொ)। भद्रेत्यादि— भद्र भग्नचरण इव सञ्चरसि गच्छसि। अमी पुरस्सराः पुरोगमनोद्युक्ताः यावत् सरन्ति तावत्तिष्ठ(न्ति?)। *[एते सर्वे शीघ्रं गच्छन्ति। त्वं तु भग्नचरण इव सञ्चरसि। एवमनुष्ठीयमाने किमस्माभिः गतैर्भवितव्यम्। शीघ्रं गच्छ इति। सरभसमित्यादि— निश्शूकः निर्दयः। उक्षिण शयानं शिशुकं न पश्यसि। तदुपरि सरभसं वेगवन्तं वाहयसि प्रेरयसि। 'अनुक्रोशः कृपा शूकम्' इति भट्टः। वत्सेत्यादि—] वत्स रामिल रामदत्त! रजसि सति यथावन्न पश्यसि। कुत इति चेद्, गलति सक्तुप्रसेवकः सक्तुनिधानभस्त्रा गलति। प्रसेवकस्य रन्ध्रैः सक्तवो गलन्तीत्यर्थः। रजस्सादृश्याद् गलतः सक्तूनपि रज इति बुद्ध्यसे। तस्माद् रजोमहत्त्वे तव दृष्टिः यथावन्न पश्यतीत्यर्थः। रामिलः, रामदत्तशब्दाद् 'घनिलचौ च' (पा० सू० ५. ३. ७९.) इत्यनुकम्पायामिलच्। ततः 'ठाजादावूर्ध्वं द्वितीयादचः' (पा० सू० ५. ३. ८३.) इति रामदत्तशब्दसमुदायस्य द्वितीयादचः परस्य लोपः। ततो रामिलेति रूपम्। किमित्यादि— इत्वरः धावनशीलः। धीवरी कैवर्तकुटुम्बिनी (வலைச்சி)।

---

*कोष्ठान्तर्गतो भागः खगपाठयोर्नास्ति.

मर्तुकामा मातङ्गि! मातङ्गमार्गम्। अङ्ग! गलति तिरश्चीना चणकगोणी। गणयसि न मां रटन्तम्, अवटतटेनावतरसि। सुखमास्स्व स्वैरिणि! भग्नः सौवीरकुम्भः। मन्थरक! खादिष्यसि गतः सन्निक्षून्। उक्षणः प्रसारय। कियच्चिरमुच्चिनोषि चेटक! बदराणि, दूरं गन्तव्यम्। किमद्यैव विद्रासि द्रोणक! द्राघीयसी दण्डयात्रा। विनैकेन निष्ठुरकेण निष्ठेयम्

---

'कैवर्ते दाशधीवरौ' इत्यमरः। अङ्गेत्यादि — अङ्गेत्यामन्त्रणे। चणकः हरिमन्थकः (കടല)। 'चणको हरिमन्थकः' इति वैजयन्ती। गोणी (ഗോണിക)। गलति स्रंसते। गणयसीत्यादि — रटन्तं क्रोशन्तम्। अवटतटेन निम्नप्रदेशेन। सुखमित्यादि — कीलालकुम्भवहनेन खिद्यमानां कांचिदुद्दिश्य कोपेन कस्यचिद् वचनम्। स्वैरिणी असती। सौवीरकुम्भः विक्रयार्थं नीयमानः कीलालकुम्भो भग्नः। अतो गतभारतया सुखमास्स्व। मन्थरकेत्यादि — इक्षुभक्षणतत्परतया मन्दं गच्छन्तं कञ्चिदुद्दिश्य कस्यचिद् वचनम् — हे मन्थरक! गतः गन्तव्यदेशं समस्तं गतः सन् तत्र इक्षून् इक्षुकाण्डान् खादिष्यसि भक्षयिष्यसि। इदानीम् उक्षणः बलीवर्दान् प्रसारय प्रेरय। कियदित्यादि — हे चेटक! अस्माभिर्दूरं गन्तव्यम्। अतोऽत्र स्थित्वा बदराणि बदरफलानि कियच्चिरं कियन्तं दीर्घकालम् उच्चिनोषि उद्धरसि। बदरम् (ഇലന്തപ്പഴം)। किमित्यादि — हे द्रोणक! उपालम्भमिदम्। किमद्यैव विद्रासि विषीदसि, दण्डयात्रा द्राघीयसी ननु। दूरं गन्तव्ये किमद्यैव विषादः क्रियत इत्यर्थः। विनेत्यादि — सहाध्वगामिनां केषाञ्चिन्मध्ये मन्द-श्रमतया कश्चिदध्वानमतीत्य कुत्रचित्प्रदेशे निवासकरणाय अन्येषां निर्बन्धार्थं निष्ठुरचित्तमतिजवं कञ्चिदुद्दिश्य श्रान्तस्य पादतोदेन मन्दगामिनो यत्रकुत्रचि-न्निवासं कर्तुमिच्छतः कस्यचिद् वचनम्। एतेन निष्ठुरकेण एकेन निर्दयेन विना अस्माकम् इयं निष्ठा गमनावसानं स्थितिर्वा। अयं निष्ठुरः पुरस्ताद् व्रजतु इति भावः। *[अथवा मन्दगामिनं स्वतन्त्रं (प्रति)गत्य विलम्ब्य गच्छतां स्वजनानां

---

१. 'गलति स्रवति', २. 'म्भभङ्गेन' क. *कोष्ठकान्तर्गतो भागः खपाठयोर्नास्ति·

**अस्माकम्। अग्रतः पन्थाः स्थपुटः स्थावरक! यथा न भनक्षि फाणितस्थालीम्। गरीयान् गण्डुक! तण्डुलभारो न निवहति दम्यः। दामक! मार्षीणादमुतो द्राग् दात्रेण मुखघासपूलकं लुनीहि, को जानाति यवसगतिम् अग्रगतानाम्। हे वाह! वारय बलीवर्दान्, वाहिकरक्षितमिदं क्षेत्रम्। लम्बिता शाकटिक! शकटी, शाकरं धुरि धवलं युङ्क्ष्व। उक्षपालक! प्रपदाः पिनक्षि, अक्षिणी ते किं स्फुटिते।**

---

विषादवचनम्। एतेन निष्ठुरकेणैकेन विना एनं वर्जयित्वा अस्माभिरेव गन्तव्यमिति शेषः। नो चेद् एतदनुसारेण गमने प्रवर्त्यमाने इयं निष्ठा भवेद् नाशो भवेद्, अस्माभिर्हतैर्भवितव्यमिति भावः।] अग्रत इत्यादि— हे स्थावरक! अग्रतः पन्थाः पुरतो मार्गः। स्थपुटः निम्नोन्नतो भवति। अतो यथा फाणितस्थालीं खण्डशर्कराभाण्डं, फाणितं खण्डशर्करा गुलविकारो वा, तद्भाण्डं न भनक्षि न भिनत्सि तथा समवधेहीति शेषः। 'मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता' इत्यमरः। गरीयानित्यादि— हे गण्डुक! अयं तण्डुलभारो गरीयान् भवति। गण्डुक गण्डुकवत् कन्दुकवत् खर्वदृढगात्र! इमम् अयं दम्यः बालवत्सः न निवहति गन्तव्यदेशं यावन्न वहति। अतो भारं लघयेति भावः। 'दम्यवत्सतरौ समौ' इत्यमरः। दामकेत्यादि— हे दामक! रज्जुहस्त! अमुत अमुष्माद् मार्षीणाद् माषभवनक्षेत्रात्। दात्रेण मुखघासपूलकम् उक्षादीनां भक्ष्यतृणबन्धं लुनीहि। इन उवरे देशे यवसगतिं यवससद्भावं को जानाति। मार्षीण इति माषाणां भवनं क्षेत्रमिति 'धान्यानां भवने क्षेत्रे खञ्' (पा० सू० ५. २. १.) इति खञ्। दात्रम् (അരിവാൾ)। 'दात्रं लवित्रम्' इत्यमरः। हे वाहेत्यादि— हे वाहक! उक्ष्णां प्रसारक! इदं क्षेत्रं क्षेत्रिभी रक्षितम्। अतस्तत्र गतान् बलीवर्दान् वारय। लम्बितेत्यादि— हे शाकटिक! शकटाजीव! शकटी विलम्बिता। अतो धुरि यानमुखे धवलं युवानं शाकरं वृषं युङ्क्ष्व योजय। उक्षेत्यादि— हे उक्षपाल! प्रपदाः पिनक्षि सम्बाधसे। किमिदं ते अक्षिणी स्फुटिते।

हतहस्तिपको नेदीयसि करी करचण्डः समदः। सम्मर्दकर्दमे कर्दमिन (?) स्खलसि। भ्रातः! भव विधुरे बन्धुः, उद्धर पङ्कादनड्वाहम्। इत एहि माणवक! घनेभघटावघट्टनसङ्कटे नास्ति निस्सरणसरणिः' इत्यादि-प्रवर्तमानानेकसंलापं, क्वचित् स्वेच्छामृदितोद्दामसस्यघासविघससुखसम्पन्नान्नपुष्टैः केलिकिलैः किलिकिलायमानैः मेण्ठवेण्ठवठरलम्बनलेशिककुट्टाकलुण्टाकचेटकचाटकचारभटचण्डालमण्डलैः अण्डीरैः स्तूयमानं, क्वचिद् असहायैः क्लेशार्दितैः कुग्रामटिकाकुटुम्बिसम्पादितसीदत्सौरभेयशम्बलसंवाहनायासयोगागतसंवेगैः स्वयं गृहीतगृहोपकरणैः इयमेका

---

हतेत्यादि— हतहस्तिपकः समदः मत्तः करचण्डो नाम करी नेदीयसि आसन्ने वर्तते। सम्मर्देत्यादि— हे कर्दमिन(?) सम्मर्दकर्दमे सम्मर्दोपेते कर्दमे पङ्के स्खलसि। भ्रातरित्यादि— हे भ्रातः! विधुरे व्यसने त्वं सर्वेषामेव बन्धुर्भवसि। अतोऽनड्वाहं पङ्कमग्नम् अमुष्मात् पङ्कादुद्धर। इत इत्यादि— हे माणवक! वटो! घनेभघटावघट्टनसङ्कटे घनगजघटासम्मर्द-सम्बाधे तत्र निस्सरणसरणिः निर्गमनमार्गो नास्ति। अतस्तत्र मा गमः। इत एहि। संलापः सम्भाषणम्। स्वेच्छेत्यादि— स्वेच्छामृदितानाम् उद्दामानां प्रभूतानां सस्यरूपाणां घासानां विघसेन शेषेण सम्पन्नैः अन्नैः पुष्टैः समृद्धि गतैः। केलिकिलैः क्रीडकैः। 'वैहासिकः केलिकिलः' इति वैजयन्ती। किलिकिलायमानैः हर्षातिशयेन किलिकिलशब्दं कुर्वाणैः। मेण्ठः हस्तिपकः। वेण्ठः निष्कुटुम्बतया एकचारी। वठि एकचर्यायामिति धातुः। 'वठरो मूर्खः' इत्युणादिवृत्तिकारः। लम्बनः उक्षपालः। लेशिकः गजानां पुरोधावकः। कुट्टाक वनादीनां छेदकः (വെട്ടിയാൾ)। लुण्ठकः आस्कन्दकः (കൊള്ള-ക്കാരൻ)। चेटकः दासः। चाटकः दस्युः। अण्डीरैः समर्थैः। 'अण्डीरो शक्तपूरुषौ' इति वैजयन्ती। क्लेशार्दितैरित्यादि— शम्बलं पाथेयम्। 'पाथेयं शम्बलं मतम्' इति हलायुधः। क्लेशार्दितैः दुःखोपद्रुतैः। कुग्रामटिका-कुटुम्बिसम्पादितेन क्षुद्रग्रामवासिभ्यः कुटुम्बिभ्यः सम्पादितेन, सीदता दुर्बलेन, सौरभेयेण उक्ष्णा, शम्बलस्य संवाहनायासयोगात् नयनक्लेशसंयोगाद्, आगतसंवेगैः

---

१. 'अग्रवाचक' क.

कथञ्चिद्दण्डयात्रा यातु । यातु वा पातालतलम् । तृष्णाभूतेरभवनिरेव भवतु । शिवं सेवा करोतु । स्वस्ति सर्वदुःखकूटाय कटकाय' इति दुर्विधवृद्धकुलपुत्रकैर्निन्द्यमानं, क्वचिदतितीक्ष्णसलिलस्रोतःपातिनौगतैरिव ग्रथितैरिव च पङ्क्तीभूतैर्जनैरतिद्रुतं वहद्भिः, कृष्णकठिनस्कन्धकूटरूढगण्डैः गृहीतसौवर्णपादपीठिकापर्यङ्ककरककलशपतद्ग्रहावगाहैः प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्वारैः सर्वमेव बहिष्कुर्वद्भिः, भूपतिभृतकहारिकैः महानसोपकरणवाहिभिश्च बद्धवराहवध्रीवाध्रीणसैः लम्बमानहरिणचटुकचटकजूटजाङ्गलैः, शुष्कशशकशाकपत्रवेत्राग्रसङ्ग्रहग्राहिभिः

---

प्राप्तविषादैः । अभवनिः जननाभावः । भवतिधातोः 'आक्रोशे नञ्यनिः' (पा० सू० ३. ३. ११२.) इत्यनिः । कूटाय समूहाय । दुर्विधः दरिद्रः । 'निस्स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतिश्च सः' इत्यमरः । अतितीक्ष्णः अतिवेगः । स्रोतःपाति स्रोतोगतम् । नौरिति तरणसाधनम् (തോണി) । 'स्त्रियां नौ तरणिस्तरिः' इत्यमरः । स्कन्धकूटं स्कन्धशिखरम् । रूढगण्डैः रूढमांसग्रन्थिभिः (കുമൽ)(?) । पीठिका अल्पपीठः । पर्यङ्कः शय्या वा खट्वा वा । 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । करकः (കരകം) । कलशः घटः । पतद्ग्रहः आचमनपात्रम् (പാളിക്കം) । 'पतद्ग्रहः प्रतिग्राहः' इति वैजयन्ती । अवगाहः (പാത്തൊരി)(?) । 'अवगाहो जलद्रोणिः' इति वैजयन्ती । प्रत्यासन्नं सन्निकृष्टम् । दुर्वारैः उद्धतैरित्यर्थः । बहिष्कुर्वद्भिः औद्धत्याद् न्यक्कुर्वद्भिः । भृतकहारिकैः भृत्यर्थं भारवाहकैः वराहवध्री वराहचर्म (പന്നി വാർ) । वाध्रीणसः खड्गमृगः । अत्र तन्मांसम् अभिप्रेतम् । केचिद् वाध्रीणस इति पठन्ति । हरिणचटुकः हरिणान्निकृत्तोऽवयवः । 'चटुश्चाटुश्च राजादिस्तुतौ पशुपिचिण्डके' इति वैजयन्ती । 'पिचिण्डस्तु निकृत्तोऽवयवः पशोः' इति च तत्रैवोक्तम् । चटकजूटः कलविङ्कसमूहः (ഉറക്കുരുവിത്തിരൾ) । जाङ्गलं मांसम् । 'पिशितं जाङ्गलं मांसम्' इति हलायुधः । शुष्कशशकः शुष्कशशाख्यमृगः । अत्र शशस्य मांसम् अभिप्रेतम् (ഉണക്കുമുയൽ) । शाकपत्रं शाकभूतं पत्रम् (ഇലക്കറി) । वेत्राग्रं वेत्राङ्कुरम् (ചൂരൽപിൻ കഴുത്ത്) । सङ्ग्रहः समूहः ।

---

१ பருங்ஜாடி. २. हारिकाः கூலிக்குசுமப்பார் ३. மசல்கண்டம் ४. பிரம்பின்கைக்க-क

शुक्लकर्पटप्रावृतमुखैकदेशदत्ताद्रमुद्रागुप्तगोरसभाण्डैः तलकतपकहस्तकदर्वी-तापिकाताम्रचरुककटाहसङ्कटपिटकहारिकैः समुत्सार्यमाणपुरोवर्तिजनं, कचित् क्लेशोऽस्माकम्। उपरि फलकालेऽन्य एव चिटाः समुपस्थास्यन्ते' इति मुखरैः पदे पदे पततां दुर्बलबलीवर्दानां नियुक्तैः खेटकेन खलचेटखेटक-कटुकैः खेद्यमानासंविभक्तभोगिपुत्रलोकं, कचिद् नरपतिदर्शनकुतूहलाद् उभयतः प्रधावितग्रामेयकजनपदम् , मार्गग्रामनिर्गतैः आग्रहारिकजालमैश्च पुरःसरजरन्महत्तरोत्तम्भिताम्भःकुम्भैः उपायनीकृतदधिकुण्डकुसुमकरण्डकैः घनघटितपेटकैः सरभसमुपसर्पद्भिः प्रकुपितप्रचण्डदण्डिवेत्रवित्रासनविद्रुतैः

---

कर्पटं वस्त्रशकलम् । दत्तं रचितमित्यर्थः । गोरसभाण्डं तक्रभाण्डम् । तलकं यन्त्रनिर्मितं करकादीनामासनम् (കരകക്കാൽ) । 'तल प्रतिष्ठाने' इति धातोः रूपम् । तपकः व्यजनपचनस्थाली (കറുകാൽ) । 'तप सन्तापे' इति धातो रूपम् । हस्तकदर्वी (ചട്ടകം) । तापिका अङ्गारनिधानभाजनम् (അങ്ങാരച്ചട്ടി) । ताम्रचरुकः ताम्रलोहकृता स्थाली (ചെമ്പുപാത്രം) । उभयत्र वैजयन्ती— 'ताम्रं शुल्बे शुल्बनिभे', 'चरुः स्थाल्याम्' इति । कटाहः (മിടാവ്) । 'कटाहः कर्परो लट्ठः' इति वैजयन्ती । सङ्कटं निबिडम् । पिटकः मञ्जूषा (പെട്ടി) । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः । फलकाले यस्य कस्यचित् लाभसमये । खेटकेन उत्त्रासेन । 'खिट उत्त्रासे' इति धातुः । कटुकैः अप्रियवाक्यैः । 'कटुस्तिक्ताप्रियाकार्यसुरभ्यूषण-मत्सरे' इति वैजयन्ती । *[असंविभक्तभोगिपुत्रलोकम् अदत्तजीविकराजपुत्र-समूहम् । ग्रामेयकजनपदं ग्रामजातं जनम् । मार्गग्रामः मार्गगामी ग्रामः । आग्रहारिकः अग्रहारो ब्राह्मणग्रामः, तत्र भवः आग्रहारिकः । अध्यात्मादित्वात् ठक् । ब्राह्मण इत्यर्थः । महत्तरः श्रेष्ठपुरुषः, ग्रामप्रधान इत्यर्थः । उत्तम्भितम् ऊर्ध्वधृतम् । दधिकुण्डं दधियुक्तस्थाली । 'कुण्डं स्थाल्यां जलाधारविशेषेऽनल-गर्तके' इति वैजयन्ती । कुसुमकरण्डकं कुसुमपुटम् (പൂമ്പാട്ടിൽ) । 'करण्डी तु पुटी त्रयी' इति वैजयन्ती । घनघटितपेटकैः निरन्तरबद्धमण्डलैः । दण्डी

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

१. कटाहः=പാത്രം, २. 'कैः निबिडबद्धश्रेणिभिः'-क,

दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रनिहितदृष्टिभिरसतोऽपि पूर्वभोगिपतिदोषानुद्घोषयद्भिः अतिक्रान्तायुक्तकायुक्तशतानि च शंसद्भिः चिरन्तनचाटापराधांश्च अभिदधानैः मृग्यमाणसस्यसंरक्षणम्, अपरैरादिष्टपरिपालकपुरुषपरितुष्टैः 'धर्मः प्रत्यक्षो देवः' इति स्तुतीरातन्वद्भिः, अपरैर्लूयमाननिष्पन्नसस्यविकसितविषादैः क्षेत्रशुचा सकुटुम्बैरेव निर्गतैः प्ररूढप्राणच्छेदिपीडापरित्यजितभयैः 'क्व राजा, कुतो राजा, कीदृशो राजा, कस्य वा राजा' इति प्रारब्धनरनाथनिन्दैः, कैश्चित् पदे पदे प्रजवितप्रचण्डदण्डपाणिपेटकानुबद्धैः गिरीयकगुडैरिव हन्यमानैरितस्ततः सञ्चरद्भिः, अपरैर्युगपत् परम्परापतितमहाजनग्रस्तैस्तिलशो लुप्यमानैः अन्यैरनेकजन्तुजङ्घान्तरालनिस्सरणकुशलिभिः कुटिलिकाध्वंसितबहुसादिभिः पतल्लोष्टलगुडकोणकुठारकील-

---

द्वारपालः । 'द्वारपाले यमे दण्डी' इति वैजयन्ती । अतिक्रान्तायुक्तकायुक्तशतानि अतीतराज्यनिर्वाहकृतानि अन्यायशतानि । आयुक्तकाः ग्रामाध्यक्षाः । (ഭകാവിററമർ) अयुक्तशतानि अन्यायशतानि । चाटः दस्युः । मृग्यमाणं याच्यमानम् । आदिष्टः दत्तः । परिपालकपुरुषः सस्यादीनाम् उल्लुण्ठनार्थं सैन्यनिवारणाय प्रेषितः पुरुषः । निष्पन्नं सिद्धफलम् । शशकैः शशकमृगैः । प्रचण्डः निर्दयः । दण्डपाणिः कोणधारी । गिरीयकगुडैः दण्डेषु निधायोपरि क्षिप्यमाणं वस्तु गिरीयकगुडः (ത൦മ്മ൦ഠ൩) । 'गिरीयकगुडो गिरिः' इति वैजयन्ती । गिरिगुडकैरिति च पाठः । हन्यमानैः वध्यमानैः । अन्यत्र चण्डयष्टिना घट्यमानैः । कुटिलिकाध्वंसितबहुसादिभिः कुटिलगत्या वञ्चितबहुसादिभिः । कुटिलिकया सादिनो वञ्चयित्वा गतैः इत्यर्थः । 'ध्वंसितं स्यादनादृतः' इति निघण्टुः । कुटिलिकाध्वंसितबहुश्वभिः इति च पाठः । लोष्टं घटशकलं(ഓട്) । लगुडः दण्डः (തടി) । कोणः ह्रस्वलगुडः (കുറുതടി) । कुठारः वृक्षच्छेदनसाधनम् । कीलः

कुन्तालखनित्रदात्रयष्टिभिरपि निस्सरद्भिः शशैरायुधोद्वशात् कृतकलकलम्, अन्यत्र सङ्ख्यशश्च यावसिकैः बुसधूलिधूसरघासजालजालकितजघनैश्च पुराणपर्णैकदेशडोलायमानदात्रैश्च शीर्णोर्णाशकलशिथिलमलिनमल्लकूटैश्च प्रभुप्रसादीकृतपाटितपटच्चरचोलकबोलकधारिभिश्च धावमानैः उद्धूयमानधूलिपटलं, क्वचिदेकान्तप्रवृत्ताश्ववारचर्च्यमानागामिगौडविग्रहं, क्वचित् पङ्किलप्रदेशापूरणाशाकुलसकललोकलूयमानतृणपूलकं, क्वचित् तलवर्तिवेत्रिवेत्रवित्रास्यमानशाखिशिखरगतविक्रोशद्वाचाटब्राह्मणं, क्वचिद् दण्डपाशविवशवेष्ट्यमानग्रामाकृष्टकौलेयकं, क्वचिदन्योन्यविभवस्पर्धोद्धुरराजपुत्रवध्यमानवाजिसङ्घट्टपणितम् इत्यनेकवृत्तान्ततया कौतुकजननं, प्रलयजलनिधिमिव जगद्ग्रहणाय प्रवृत्तं, पातालमिव महाभोगिनां गुप्तये

---

कुद्दः (ഉളക്ക്)। कुन्तालः खनित्रविशेषः (കന്നാലി)[1]। खनित्रम् अवदारणम् (കൊട്ടു°)। दात्रं लवित्रम् (അരിവാള)। यष्टिः कुशदण्डः[2] (മുറപ്പ്°)। शशैः कृतकलकलं शशनिमित्तं जनैः कृतकलकलम् इत्यर्थः। यावसिकैः यवसहारकैः (പൊടിമേയന്)। बुसः कडङ्करः[3]। 'कडङ्करो बुसं क्लीबे धान्यत्वचि तुषः पुमान्' इत्यमरः। शीर्णोर्णाशकलशिथिलमलिनमल्लकूटैः, ऊर्णा ऊर्णातन्तवः। मल्लकूटः वेष्टनकौपीनम् (ചുററക്കോവണം)। शीर्णोर्णाशकलाः शिथिला मलिनाश्च मल्लकूटा येषाम्। *[प्रभ्वित्यादि— बोलकं शिरश्छादनम्। प्रभुप्रसादीकृतानां प्रभूणां प्रसादेन दत्तानां पाटितैः पटच्चरचोलैः जीर्णवर्णवस्त्रैः कृतानां बोलकानां शिरश्छादनानां धारयितृभिः। चलच्चोलकधारिभिरिति च पाठः।] चोलकः कञ्चुकः। प्रवृत्तं सञ्जातम्। अश्ववारः अश्वारोहकः। चर्च्यमानं पौनःपुन्येन कथ्यमानम्[4]। तलः मूलदेशः। दण्डपाशविवशः दण्डपाशबन्धेन विवशः। अग्रभागेषु मृगाणां बन्धनार्थेन पाशेन सम्बद्धो दण्डो दण्डपाशः (നാഞ്ഞൂഴി)। वाजिसङ्घट्टपणितम् अश्वधावनाख्यपणः। ग्रहणाय स्वीकरणाय। अन्यत्र ग्रसनाय इत्यर्थः। भोगिनां राज्ञां,

---

१. கழ்நிக்குக்காலி, २. कुशशाखा=மாறு ३. कडङ्करः=உமி ४. अभ्यस्यमानम् क.
*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

समुत्पादितं, कैलासमिव परमेश्वरवसतये सृष्टं, दृश्यमानसकलप्राणिसञ्चयं चतुर्युगसर्गकोशमिव प्रजापतीनां, क्लेशबहुलमपि तपःकरणमिव कारणं कल्याणानाम् । एवं च वीक्षमाणः कटकं जगाम ।

आसन्नवर्तिनां च 'तत्रभवता मान्धात्रा प्रवर्तिताः पन्थानो दिग्विजयाय । अप्रतिहतरथरंहसा रघुणा लघुनैव कालेनाकारि ककुभां प्रसाधनम् । शरासनद्वितीयः करदीचकार चक्रं क्रमागतभुजाभिजनधनबलमदावलिप्तानां पार्थिवानां पाण्डुः । पाण्डवः सव्यसाची चीनविषयमतिक्रम्य राजसूयसम्पदे कुप्यत्कुम्भ्यर्वधनुष्कोटिटङ्कारगुञ्जत्कुञ्जं हेमकूटपर्वतं पराजेष्ट । सङ्कल्पान्तरिततरस्विमहिमा हिमवद्गुहावहितोऽप्युवाह बाहुबलनिर्वृतिकरं करं वल्लं कौरवस्य किङ्कर इव कृती द्रुमः । नातिविजिगीषवः खलु पूर्वे । येनाल्प एव भूभागे भूयांसो भगदत्तदन्तवक्त्रक्राथकर्णकौरवशिशुपालसाल्वजरासन्धसिन्धुनाथप्रभृतयोऽभूवन् भूपतयः । सन्तुष्टो राजा युधिष्ठिरः । यो ह्यमहत समीप एव धनञ्जय-

---

सर्पाणां च । परमेश्वरः राजा, ईश्वरश्च । सर्गकोशं जन्तूनां सृष्टिरचनोपकरणसम्भारः । कारणं कल्याणानां स्कन्धावारम् अद्राक्षीद् इति पूर्वेण सम्बन्धः । एवं च वीक्षमाणः एवं स्कन्धावारं वीक्षमाणः । कटकं शिबिरम् ।

आसन्नवर्तिनां पार्थिवसुतानाम् आलापान् शृण्वन्निति सम्बन्धः । शरासनद्वितीयः शरासनैकसहायः । क्रमेत्यादि— मदशब्दो भुजादिना प्रत्येकं सम्बध्यते । सव्यसाची अर्जुनः । गुञ्जत्कुञ्जं शब्दायमानगह्वरम् । हेमकूटः गन्धर्वनिवासपर्वतम् । पराजेष्ट पराजितवान् । 'चैद्यः परान् पराजिग्ये' इति माघकाव्ये च । सङ्कल्पान्तरिततरस्विमहिमा स्वमनोव्यापारमात्रतिरोहितबलवन्महिमा । कौरवस्य दुर्योधनस्य । कृती कुशलः । 'वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि' इत्यमरः । द्रुमः किम्पुरुषराजः । सन्तुष्टो राजा युधिष्ठिर इति, क्षत्रियस्य सन्तुष्टता न युक्तेति भावः । उक्तं च—

---

१. 'नाग अण्डसृष्टि', २. 'पन्थाः'-क.

जनितजगत्कम्पं किम्पुरुषाणां राज्यम् । अलसश्चण्डाशोको यो न प्राविक्षत् क्षमां जित्वापि स्त्रीराज्यम् । हसीय एवान्तरं तुषारगिरिगन्धमादनयोः । उत्साहिनः किष्कुस्तुरुष्कविषयाः । प्रादेशः पारसीकदेशः । शशपदं शक्रस्थानम् । अदृश्यमानप्रतीहारे पारियात्रे यात्रैव शिथिला । शौर्यशुल्कसुलभो दक्षिणापथः । दक्षिणार्णवकल्लोलानिलचलितचन्दनलसौरभसुरभीकृतदरीमन्दिरो दर्दुरार्द्रैर्नेदीयसि मलये लघ्र एव महेन्द्रः' इत्येवंप्रायान् उद्योगद्योतकानालापान् पार्थिवसुतानां बाहुशालिनां शृण्वन्नेव आससाद वासमन्दिरम् । द्वारि च उभयतः सबहुमानं भ्रूलताभ्यां विसर्जितराजलोकः प्रविश्यावततार बाह्यास्थानमण्डपस्थापितं च आसनमाचक्राम । अपास्तसमायोगश्च क्षणमिवासिष्ट तत्र ।

---

'असन्तुष्टो द्विजो नष्टः सन्तुष्टः क्षत्रियस्तथा' इति । राज्यं राजत्वम् । अलसश्चण्डाशोक इति, अलसत्वं विजिगीषोर्दोष इति भावः । 'वैमनस्यं श्रमो वापि व्यापारैर्नैव जायते । यस्य रागश्च वर्धेत नरोऽसावलसेतरः ॥' इति दिवाकरः । एतद्गुणरहितोऽलस इति स्पष्टमेव । स्त्रीराज्यं स्त्रीनायकं राज्यम् । उत्साहिनः, 'सिद्धैरपि मुहुः कार्यैः यस्य तृप्तिर्न जायते । अनवाप्य पदं शाक्रमुत्साही स नरः स्मृतः ॥' इति दिवाकरः । किष्कुः सप्तकोष्ठकरमितः प्रदेशः (७७०) । 'किष्कुः स्यादवटो हस्तश्चतुर्विंशतिरङ्गुलाः' इति वैजयन्ती । प्रादेशः तर्जनीसहितेनाङ्गुष्ठेन मितः प्रदेशः (६११) । 'प्रादेशतालगोकर्णाः तर्जन्यादियुते तते । अङ्गुष्ठे' इत्यमरः । शशपदं[1] शशपदस्थानम् । प्रतीहारे द्वारिके । अपसरणादिति भावः । 'प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः' इत्यमरः । पारियात्रे[2] पारियात्राभिधाने पर्वतप्रधानदेशे । 'हिमवान् निषधो विन्ध्यो माल्यवान् पारियात्रकः' इत्यमरः । शौर्यशुल्कः शौर्यमूल्यम् । दाक्षिणापथः विन्ध्याद् दक्षिणदेशः । 'विन्ध्यात्तु दाक्षिणा देशा दक्षिणापथसंज्ञिताः' इति वैजयन्ती ।

---

१, शशपदं=Persia. २. 'पारियात्रकः कुलशैलेष्वन्यतमः'-क.

अथ प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान्—'देव! प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगो नामान्तरङ्गो दूतः तोरणमध्यास्ते' इति। राजा तु 'तमाशु प्रवेशय' इति सादरम् आदिक्षत्। दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात्। अनन्तरं च हंसवेगः सविनयमाकृत्यैव नयनानन्दसम्पादनसुभगाभोगभद्रया समुल्लिङ्ग्यमानगुणगरिमा प्रभूतप्राभृतकभृतां भृतकानां पुरुषाणां समूहेन महतानुगम्यमानः प्रविवेश मन्दिरम्। आरादेव च पञ्चाङ्गालिङ्गिताङ्गणः प्रणाममकरोत्। 'एह्येहि' इति सबहुमानमाहूतश्च प्रधावितोपसृतः पादपीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेनोपसृत्य च भूयो नमश्चकार। स्निग्धनरेन्द्रदृष्ट्यादिष्टमनतिविप्रकृष्टं प्रदेशम् अध्यास्त। ततो राजा तिरश्चीं तनुमीषदिव दधानश्चामरग्राहिणीम् अन्तरालवर्तिनीम् उत्सार्य सम्मुखीनस्तं सप्रश्रयं पप्रच्छ—'हंसवेग! श्रीमान् कच्चित् कुशली कुमारः' इति। स तमन्ववादीत्—'अद्य कुशली, यमेवं स्नेहस्नपितया सौहार्दद्रवार्द्रया सगौरवं गिरा पृच्छति देवः' इति।

स्थित्वा च मुहूर्तमिव पुनः सचतुरमुवाच—'चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भमपहार्यं हृदयमेकम् अन्यदनुरूपं

---

प्राग्ज्योतिषाः देशविशेषाः। तोरणं बहिर्द्वारम्। 'तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम्' इत्यमरः। आभोगः पूर्णता। 'आभोगः परिपूर्णता' इत्यमरः। समुल्लिङ्ग्यमानम् अनुमीयमानम्। प्राभृतकभृताम् उपहारहारिणाम्। *['घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः।] सम्मुखीनं सम्मुखस्थितम्।

चतुरम्भोधिभोगभूतिभाजनभूतस्य चतुरम्भोध्युपलक्षितराज्यैश्वर्यानुभवभाजनभूतस्य। 'भोगो राज्ये धने सौख्ये' इति वैजयन्ती। सद्भावं याथातथ्यम्। हृदयं सख्यम्। ¶'सौहार्दं सौहृदं मैत्री हृदयमजर्यं च' इति हृदयशब्दः

---

1. பாவாதல், 2, பாகுடம்-क. * कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

¶ 'सौहृदं सौहार्दं सौहृदीयमजर्यं च' इति मुद्रितपाठः

प्राभृतमेव दुर्लभं लोके। तथापि अस्मत्स्वामिना सन्देशमशून्यं नयता पूर्वजोपार्जितं वारुणमातपत्रम् आभोगाख्यमनुरूपस्थानन्यासेन कृतार्थीकृतमेतत्। अत्र हि कुतूहलकृन्ति बहूनि आश्चर्याणि दृश्यन्ते— प्रतिदिवसं प्रविशति शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिरस्मिन्। अस्मिन् प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्याश्च्योतन्ति चन्द्रभासामम्भसां मणिशलाकाभ्यो यावदिच्छमच्छा धाराः। प्रचेता इव च यश्चतुर्णामप्यर्णवानाम् अधिपतिर्भूतो भावी वा तमनुगृह्णाति छायया, नेतरम्। इदं च न सप्तार्चिर्दहति, न पृषदश्वो हरति, न उदकमार्द्रयति, न रजांसि मलिनयन्ति, न जरा जर्जरयति। एतत् तावदनुगृह्णातु दृशा देवः। सन्देशमपि विस्रब्धं पुनः श्रोष्यसि' इत्यभिधाय निवृत्यात्मीयं पुरुषमभ्यधात्— 'उत्तिष्ठ, दर्शय देवस्य' इति।

स वचनानन्तरमुत्थाय पुनरूर्ध्वीचकार तत्। धौतदुकूलकल्पिताच्च निचोलकाद् अकाक्षीत्। आकृष्यमाण एव च तस्मिन्नतिसितमहसि सरभसमहासीव हरेण, रसातलादुदलासीव शेषफणिफणामण्डलेन,

---

सौहार्दपर्यायत्वेन क्षीरस्वामिना पठितः। सन्देशमशून्यं नयता आत्मना प्रेष्यमाणस्य सन्देशस्य कैवल्यं परिहरता। प्राभृतादीनि वर्जयित्वा केवल एव सन्देशो न युक्त इति मत्वा प्राभृतेनैव सह सन्देशं प्रेषयता इत्यर्थः। अनुरूपस्थानन्यासेन अनुरूपस्थानभूते त्वयि निधानेन इत्यर्थः। दन्तवीणा शैत्यातिशयाद् दन्तपङ्क्त्योः परस्पराघातः (പല്ലുവരൽ)[1]। श्च्योतन्ति क्षरन्ति। अर्णवानां अर्णवोपलक्षिता देशा अर्णवशब्देन विवक्षिताः। अन्यत्र समुद्रा एव। सप्तार्चिषः अग्नयः। पृषदश्वः वायुः। निवृत्य पराङ्मुखीभूय।

निचोलकात् प्रच्छदपटात्। 'निचोलः प्रच्छदपटः' इत्यमरः। अकाक्षीद् आकृष्टवान्। 'कृष आकर्षणे' इति धातुः। एतद् 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (पा० सू० ६. १. ५९.) इति अमागमपक्षे रूपम्। अकार्क्षीदिति च पाठः। अमागमाभावे इदं रूपम्। उदलासि उद्धृतम्।

---

1. പല്ലുകിടുകിടുക—क.

अस्थापीव चक्रीभूयान्तरिक्षे क्षीरोदेन, अघटीव गगनाङ्गणे गोष्ठीबन्धः शारदेन बलाहकव्यूहेन, व्यश्रमीव विततपक्षतिना वियति पितामहविमानहंसयूथेन, अत्रिनेत्रनिर्गतस्य धवलधाममण्डलमनोहरो दृष्ट इव अनेन जन्मदिवसः कुमुदबन्धोः, प्रत्यक्ष्यकारीव उद्गमनक्षणो नारायणनाभिपुण्डरीकस्य, आहितेव कौमुदीप्रदोषदर्शनानन्दतृप्तिरक्षणाय, उदमाङ्क्षीदिव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे, परिवर्तित इव दिवसः पौर्णमासीनिशया, मन्दमन्दमिन्दूदयसन्देहदूयमानमानसैर्विघटितं विघटमानचञ्चुच्युतमृणालकोटिभिः आसन्नकमलिनीचक्रवाकमिथुनैः, शरज्जलधरपटलशङ्कासङ्कोचितकेकारवमूकमुखपुटैः पराङ्मुखीभूतं भवनशिखण्डिमण्डलैः, प्रबुद्धम् आबद्धचन्द्रोदयोद्दामोद्दलदलपुटाट्टहासविशदं कुमुदषण्डैः।

चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत् तिलकमिव त्रिभुवनस्य, शैशवमिव श्वेतद्वीपस्य, अंशावतारमिव शरदिन्दोः, हृदयमिव धर्मस्य, निवेशमिव शशिलोकस्य, दन्तमण्डलधवलं मुखमिव चक्रवर्तित्वस्य, मौक्तिकजालपरिकरासितं सीमन्तचक्रमिव दिवः, बहुलज्योत्स्नाशुक्लमैन्दवमिव परिवेषणवलयं, शौक्ल्यापहसितशङ्खश्रीकं श्रवणमण्डलमिव निश्चलतां गतमैरावतस्य, श्वेतगङ्गावर्तपाण्डरं

---

अघटि रचित इत्यर्थः। प्रत्यक्ष्यकारि प्रत्यक्षीकृतः। क्षणः कालः। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः। उदमाङ्क्षीद् उन्ममज्ज। अट्टहासः, अनेन धवलता लक्ष्यते।

शैशवं, शैशवे हि रूपमल्पमिति भावः। दन्तमण्डलधवलं गजदन्तमण्डलवद् धवलम्। अन्यत्र दशनसमूहेन धवलम्। परिकरः परिवेष्टनम्, सम्बन्धश्च। सितं बद्धं, धवलं च। सीमन्तचक्रं सीमन्ते निधीयमानं चक्राकारमाभरणम्। ज्योत्स्ना प्रभा, चन्द्रिका च। शङ्खश्रीः कम्बुशोभा, शङ्खाभरणशोभा च। श्वेतगङ्गावर्तपाण्डरम् आकाशगङ्गाया आवर्तवत् पाण्डरम्। अन्यत्र गङ्गावर्तनेन पाण्डरम्। वर्त इति 'वृतु वर्तने' इति धातोर्घञि रूपम्।

पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य, प्रचेतसः चूडामणिमरीचिशिखाभिरिव श्लिष्टाभिः मानसबिसतन्तुमयीभिश्चामरिकावलीभिः विरचितपरिवेषम्, उपरि चक्रवर्तिलक्ष्मीनूपुरस्वरश्रवणदोहदनिश्चलेनेव लक्ष्मणा विततपक्षेण हंसेन सनाथीकृतशिखरं, स्पर्शवता च प्रभावस्तम्भितेन मन्दाकिनीनलिनमृणालेनेव मुकुलितफणेन वासुकिनेव च नीतेन दण्डतां दण्डेन द्योतमानं, धवलिम्ना क्षालयदिव नक्षत्रपथं, प्रभाप्रभावप्रथिम्ना प्रावृण्वदिव दिवसम्, समुच्छ्रयेणाधःकुर्वदिव दिवम्, उपरिस्थितमिव सर्वमङ्गलानां, श्वेतमण्डपमिव श्रियः, स्तबकमिव ब्रह्मस्तम्बस्य, नाभिमण्डलमिव ज्योत्स्नाकामिन्याः, विशदहासमिव कीर्तेः, फेनराशिमिव खड्गधाराजलस्य, यशःपटलमिव शौर्यस्य, त्रैलोक्याद्भुतभूतं महातपत्रम्।

दृष्टे च राज्ञा तस्मिन् प्रथमं शेषमपि प्राभृतं प्रकाशयाञ्चक्रुः क्रमेण कार्माः। तद्यथा— पराध्यरत्नांशुशोणीकृतदिग्भागान् भगदत्तप्रभृतिपार्थिवपरम्परागतान् अनुपहतलक्षणान् अलङ्कारान् प्रभालेपिनां च मणीनामुत्कर्षान् क्षीरोदधेर्धवलताहेतूनिव च हारान् अनेकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौचक्षमाणि क्षौमाणि कुशलशिल्पिकोल्लिखितानां च शुक्तिशङ्खगलवर्कप्रमुखानां पान-

---

पदं पादम्। वन्दनीयं स्तुत्यं, नमस्कर्तव्यं च। 'वदि अभिवादनस्तुत्योः' इति धातुः। प्रचेतसः चूडामणिमरीचिशिखाभिरिव श्लिष्टाभिः प्रचेतसः वरुणस्य शिरसि धारणकाले लग्नैः। तस्य चूडामणिमरीचिभिरिव श्लिष्टाभिरित्यर्थः। लक्ष्मणा लक्षणभूतेन। स्पर्शवता सुखस्पर्शेन। ब्रह्मस्तम्बस्य त्रिभुवनस्य। स्तम्बशब्देन नालश्च गम्यते।

कार्माः कर्मशीलाः। 'कार्मस्ताच्छील्ये' (पा० सू० ६. ४. १७२.) इति निपातः। 'स कार्मः कर्मशीलो यः' इत्यमरः। प्रभालेपिनां स्वकीयप्रभाः समन्ततो लिम्पतामित्यर्थः। उत्कर्षान् अतिशयान्। वेत्रकरण्डः वेत्रदलविरचितं भाजनम्। शौचक्षमाणि जलक्षालनयोग्यानि। उल्लिखितानां तेजितानाम् (കടഞ്ഞെടുത്ത). 'उत्कीर्णे स्यादुल्लिखितमनुषक्ततनूकृते' इति

भाजनानां निचयान्, निचोलकरक्षितरुचां च रुचिरकाञ्चनपत्रभङ्गभङ्गुर-प्रतिबद्धपरिवेषाणां च कर्मरङ्गचर्मणां सम्भारान्, भूर्जत्वक्कोमलाश्च स्पर्शवतीर्जातिपट्टिकाः चित्रपटीरोचिषां च चर्मणां म्रदीयसां मसूरकोपधानादीन् विकारान्, प्रियङ्गुप्रसवभङ्गपिङ्गलत्वञ्चि चासनानि वेत्रमयानि, आगरववल्कलसञ्चयांश्च नवसुभाषितभाजः पुस्तकान्, परिणतिपाटलपटोलत्विषि च तरुणहारीतहरिन्ति च क्षीरक्षारीणि पूगानां पल्लवालम्बीनि सरसानि फलानि, लतासहकाररसानां च कृष्णागरुतैलस्य च कपोतकपिलकपोलिकापलाशकोशककवचिताङ्गीः स्थवीयसीर्वैणवीर्नाळीश्च,

---

वैजयन्ती । गल्वर्कः चषकः । काञ्चनेत्यादि— काञ्चनैः काञ्चनविकारैः । पत्रभङ्गैः पत्तिरेखाभिः । भङ्गुरं विषमं यथा । प्रतिबद्धपरिवेषाणां सम्बद्धसमन्तभागानाम् । जातिपट्टिकाः मुख्याकरोद्भूताः पट्टिकाः । चित्रपटी लिखितपटी (ചിത്രമെഴുതിന്ന പട്ടു°) । चर्मणाम् अजिनानाम् । मसूरकोपधानम् उपधानविशेषः (തലയിണ)(?) । 'समसूरकं प्रस्तरकपटं कुर्याद्' इति कामसूत्रम् । प्रियङ्गुप्रसवः फलिनीपुष्पम् (ഞാഴൽപൂ), कङ्गुफलमिति केचित् (തിന) । आगरववल्कलम् अगरुसम्बन्धिनी त्वक् । पटोलं पटोलफलं (പടലവൎഗം) । हरिन्ति हरितवर्णानि । पल्लवालम्बीनि पल्लवशब्देनात्र मञ्जरी विवक्षिता । एतदनुगुणप्रयोगः कादम्बर्यामपि दृश्यते— 'मरतकहरिन्ति अनपनीतत्वञ्चि चारुमञ्जरीभाञ्जि क्षीरक्षारीणि पूगफलानि' इति । लतेत्यादि । लतासहकारः लतारूपः सहकारः (കൊടിമാവ്) । रसानाम्, एतेन स्नेहो विवक्षितः । कपोतः पक्षिविशेषः (പിറാവു°) । कपोलिका[1] लताविशेषः । पलाशकोशकैः[2] पत्राख्यवेष्टकम् (പൊതക) । 'कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थौघे गृहे तनौ । गुह्येऽण्डे वेष्टके पेश्यां पुस्तकासिपिधानयोः ॥' इति वैजयन्ती । कवचितं छादितम् । स्थवीयसीः वैणवीः नाळीः वेणुमयीः तैलाद्यवसेचनपात्रीः (മുളംകുഴ) । 'नालिका चुल्लिका रन्ध्रे विवरे वेणुभाजने' इति वैजयन्ती । लतासहकाररसानां कृष्णागरुतैलस्य च नालीरित्यन्वयः । लतासहकाररसैः कृष्णागरुतैलेन च पूर्णा नालीरित्यर्थः ।

---

१ कपोलिका=പിറമുട്ടു, २. 'शकः पत्रपिधानम्'—क.

पट्टसूत्रप्रसेवकार्पितांश्च भिन्नाञ्जनचूर्णस्य कृष्णागरुणः गुरुपरितापमुषश्च गोशीर्षचन्दनस्य तुषारशिलाशकलशिशिरस्वच्छसितस्य च कर्पूरस्य कस्तूरिकाकोशानां च पक्वफलजूटकजटिलानां च तक्कोलपल्लवानां च लवङ्ग-पुष्पमञ्जरीणां च जातिफलस्तबकानां च राशीन्, अतिमधुरमधुररसा-मोदनिर्हारिणीश्च उल्लुककलशीः, सितासितस्य च चामरकलापस्य निकरान्, अवलम्बमानतूलिकालाबुकांश्च लिखितान् आलेख्यफलकसम्पुटान्, कुतूहलकृन्ति च कनकशृङ्खलानियमितग्रीवाणां किन्नराणां वनमानुषाणां जीवञ्जीवकानां जलमानुषाणां च मिथुनानि, परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गकान्, गृहपतिपरिचरणपरिचिताश्च चमरीः, चामीकररस-चित्रत्रपञ्जरीजुषो बहुसुभाषितजालजल्पाकजिह्वाश्च जातीः कौशिक-शुकशारिकाप्रभृतीनां पक्षिणां, प्रवाललतापञ्जरगतांश्च चकोरान्, जल-हस्तिनां च कुम्भमुक्ताफलदामदन्तुराणि दन्तखण्डकुण्डलानि ।

राजा तु छत्रप्रदर्शनात् प्रहृष्टहृदयः प्रथमप्रयाणशोभननिमित्तम्

---

प्रसेवकः स्यूतः । 'स्यूतप्रसेवौ कण्डोलपिण्डौ कटकिलिञ्जकौ' इत्यमरः । गोशीर्ष-चन्दनस्य हरिचन्दनस्य । 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः । कस्तूरिकाकोशानां कस्तूरिकामृगाण्डानाम् (പുഴുകിൻ കാട്ടം)। जूटकः समूहः । जातिफलम् (ജാതിക്കായ്)। मधुररसामोदनिर्हारिणीः मधुररसामोदसुरभीः । 'समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणे' इत्यमरः । उल्लुककलशीः काचमृत्तिका-घटितघटीः (കുപ്പിക്കലശം)। अवलम्बमानेत्यादि— तूलिकालाबुकान् चित्र-लेखनसाधनसहितालाबुपात्रान् । 'लेखनी तूलिका कूर्चिः' इति वैजयन्ती । सम्पुटान् बन्धनानि । अत्र तूलिकासहितानाम् आलेख्यफलकानां प्रेषणम् अत्रत्यानां शिल्पिनाम् एताभिरेव तूलिकाभिः स्वलिखितशेषस्य लेखनेनालेख्य-कौशलपरीक्षार्थमित्यनुसन्धेयम् । जीवञ्जीवकः पक्षिविशेषः (വല്വട്ടുവാൽ)। कस्तूरिकाकुरङ्गकान् कस्तूरिकामृगान् । परिचरणं सञ्चरणम् । कौशिकः उलूकः । दन्तखण्डकुण्डलानि दन्तच्छेदकृतकर्णाभरणानि ।

---

१ குப்பிக்குடம். २ तूलिका=சித்திரமெழுதும் சாலிகை.

३. सपुटानि सपिधानानि-क.

हृदमिति मनसा जग्राह । हंसवेगं च प्रीयमाणो बभाषे— 'भद्र ! सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्यास्य महातपत्रस्य महार्णवादिव कुमुदबान्धवस्य न कुमाराल्लाभो विस्मयाय । बालविद्याः खलु महतामुपकृतयः' इति । अपनीते च तस्मात् प्रदेशात् प्राभृतसम्भारे क्षणमिव स्थित्वा हंसवेगं 'विश्राम्यताम्' इति प्रतीहारभवनं विसर्जयाम्बभूव । स्वयमप्युत्थाय स्नात्वा मङ्गलाकाङ्क्षी प्राङ्मुखः प्राविशद् आभोगस्य छायाम् ।

अथ विशत एवास्यापि छायाजन्मना जडिम्ना चूडामणितामनीयतेव शिरसि शशिबिम्बम् । अम्बुबिन्दुमुचः चुचुम्बुरिव चन्द्रकान्तमणयो ललाटफलकम् । कर्पूररेणव इव व्यलीयन्त विलोचनयुगले । गले गलत्तुहिनकरकिरणनिकरकृतनीहारहारा इवाबध्यन्त । हरिचन्दनरसासारेणेवापाति सततमुरसि । कुमुदमयमिव हृदयमभवत् । अतिशिशिरमन्तर्हितहिमशिलेव विलीयमाना व्यलिम्पद् अङ्गानि । जातविस्मयश्च अकरोन्मन स— 'एकमजर्यम् अपहायास्य नास्त्यन्या प्रतिकौशलिका' इति । आहारकालेऽपि च हंसवेगाय धवलकर्पटप्रावृतकलधौतनालिकेरसमुद्गपरिगृहीतं विलिप्तशेषं चन्दनम् अङ्गस्पृष्टे च वाससी शरत्ताराकार-

---

भद्रेत्यादि— सकलरत्नधाम्नः परिकरभूतानां मौक्तिकादिसकलरत्नानां धामभूतस्य । *[एतत् कुमारादित्यस्य पदस्य विशेषणं वा । सकलानां विशिष्टवस्तूनां स्थानभूतादित्यर्थः ।] अत्र एतत् पञ्चम्यन्तम् । सकलरत्नधाम्नो महार्णवाद् इत्यन्वयः । परमेश्वरशिरोधारणार्हस्य सार्वभौमानां राज्ञां शिरउपरि धारणार्हस्य । अन्यत्र महादेवेन शिरसा धारणार्हस्य । बालविद्याः बाल्य एव सम्पन्ना विद्याः । एतदुक्तं भवति— एवंविधम् आतपत्रं कुमाराल्लब्धमित्येतद् न विस्मयाय, अत्यादरस्वभावानां कुमारादीनां महात्मनां बाल्यादारभ्य परोपकार एव विधेति यतः ।

अजर्यं सख्यम् । 'अजर्यं सङ्गतम्' (पा० सू० ३. १. १०५.) इति निपातः । 'मैत्री प्रीतिरजर्यम्' इति हलायुधः । अजर्यं सङ्गतम् इति यः पाठः स मुह्यमानानाम् । प्रतिकौशलिका प्रतिप्राभृतम् । नालिकेर-

---

१. 'यावद्दम् । अत्युदार'-क. * कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

मुक्तास्तबकितपदकं परिवेषं नाम कटिसूत्रम् अतिमहार्हपद्मरागालोकलोहिनीकृतदिवसं च तरङ्गकं नाम कर्णाभरणं प्रभूतं च भोज्यजातं प्राहिणोत्। एवंप्रायेण च क्रमेण जगाम दिवसः।

ततः कटकबलबहलधूलिधूसरितवपुः अंशुमाली मलीमसमङ्गमिव क्षालयितुम् अपरजलनिधिमवातरत्। आभोगातपत्रप्रदानवार्तामिव च आवेदयितुं वरुणाय वारुणीं दिशमयासीत्। मुकुलायमानसकलकमलवना प्रमुख एव बद्धसेवाञ्जलिपुटेव सद्वीपा भूरभूद् भूपतेः। नृपानुरागराशिमय इव निखिललोकाञ्जलिबन्धबन्धुः जगज्जग्राह सन्ध्यारागः। गौडापराधशङ्किनीव श्यामतां प्रतिपेदे प्राची दिक्। प्रचिततिमिरनिवहा निर्वाणान्यनृपप्रतापानलकलापेन कालिमानमतानीन्मेदिनी। मेदिनीशप्रदोषास्थानपुष्पप्रकरमिव विकचतगररुचिरं विचकरुडुनिकरमविरलं ककुभः। स्कन्धावारगन्धगजमदगन्धधावितस्येव मार्गो वियति रराज रजःपाण्डुरैरावतस्य। कुपितनृपव्याघ्राघ्राताम् उपसृष्टामिव पौरन्दरीं ककुभं

---

समुद्रपरिगृहीतं नालिकेरमयपात्रनिक्षिप्तम् (കളുങ്കയിൽ)। अङ्गस्पृष्टे अङ्गाच्छादितपरित्यक्ते (ചാർത്തിനാപടി[1])। पदकं (പതക്കം)। कटिसूत्रं कट्याभरणम्, कक्ष्येति केचित्। भोज्यजातं भक्ष्यसमूहम्। 'भोज्यं भक्ष्ये' (पा० सू० ७. ३. ६९.) इति निपातः।

प्रमुखे आदौ। निखिलेत्याद्युभयत्र समानम्। निर्वाणः शान्तः। तगरं नन्द्यावर्तकुसुमम्। विचकरुः निक्षिप्तवत्यः। स्कन्धावारेत्यादि— वियति मार्गः छायापथाख्यः। स्कन्धावारगन्धगजमदगन्धधावितस्य स्कन्धावारगतमत्तगजमदगन्धाघ्राणाद् द्रुततरमागतस्य, पलायितस्य वा ऐरावतस्य मार्ग इव रराज इत्यर्थः। रजःपाण्डुः पुष्परागवत् पाण्डुः। रजसा पाण्डुश्च। नृपव्याघ्राघ्रातां नृपश्रेष्ठाक्रान्ताम्। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥' इत्यमरः। व्याघ्रशब्देन शार्दूलश्च ध्वन्यते। उपसृष्टाम् उपद्रुताम्, उपद्रवयुक्ताम् इत्यर्थः। 'उपसर्ग उपद्रव-

---

१. சாத்துப்படி—க.

विहाय विहायस्तलमारुरोह रोहिणीरमणः। प्रयाणवार्तेव मानिनीनां हृदयभेदिन्यो ययुः इन्दुदीधितयो दश दिशः। नवनृपतिदण्डयात्रात्रासातुरा इव तरलितसत्त्ववृत्तयः चुक्षुभिरे पतयो वाहिनीनाम्। चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि क्षुक्तसर्वाशातिमिरसन्ततिः। प्रतिसामन्तचक्षुषामिव ननाश निद्रा कुमुदवनानाम्।

अस्यां च वेलायां वितानतलवर्ती नरेन्द्रो 'यात तावद्' इति विसृज्यानुजीविनो हंसवेगमादिष्टवान्— 'कथय कुमारसन्देशम्' इति। स प्रणम्य कथयितुं प्रास्तावीत्— 'देव! पुरा महावराहसम्पर्कसम्भृतगर्भया भुवा भगवत्या नरको नाम सूनुरसावि रसातले। वीरस्य यस्याभवन् बाल्य एव पादप्रणयिनश्चूडामणयो लोकपालानाम्। यस्य च त्रिभुवनभुजो भुजशौण्डस्य भवनकमलिनीचक्रवाकया अपि कोपकुटिलकटाक्षेक्षितो भयचकितारुणपरिवर्तितरथो माज्ञया विना रविरस्तमभजत। यश्च वरुणस्य बहिर्वर्ति हृदयम् इदमातपत्रमहार्षीत्। महात्मनस्तस्यान्वये भगदत्तवज्रदत्तपुष्यदत्तप्रभृतिषु व्यतीतेषु बहुषु

---

स्तथोत्पातः' इति हलायुधः। विहायस्तलम् आकाशतलम्। हृदयभेदिन्यः हृदयधाष्टर्यभेदिन्यः। अन्यत्र हृदयक्लेशकारिण्यः। एतत् प्रयाणसमये वियोगेन इत्यनुसन्धेयम्। *[सत्त्वं प्राणी व्यवसायश्च। उभयत्र वैजयन्ती— 'सत्त्वोऽस्त्री जन्तुषु क्ली तु व्यवसाये पराक्रमे। आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः॥' इति।] पतयो वाहिनीनां समुद्राः, राजानश्च। भूभृतां पर्वतानां, राज्ञां च। आशा दिग् अभिलाषश्च। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः। निद्रा सङ्कोचः स्वापश्च।

वितानम् उल्लोचः (മേൽക്കട്ടി)। 'अस्त्री वितानमुल्लोचः' इत्यमरः। असावि प्रसूतः। भुजशौण्डस्य भुजबलमत्तस्य। 'मत्ते शौण्डोत्कटक्षीबाः'

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

निरुपमेषु मरुन्महितेषु महत्सु महीपालेषु, प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मणः पुत्रो देवस्य कैलासस्थिरस्थितेः स्थिरवर्मणः सुरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिं मृगाङ्क इति यं जना जगुः। यो हि यमजेनेवाजायत सहाहङ्कारेण। यश्च बाल एव द्विजातीन् प्रीत्या, शक्त्या चारातीन् समग्रान् प्रतिग्रहान् अग्राहयत्। यत्र च अतिदुर्लभं लवणालयसम्भूतायाः परं माधुर्यमभूल्लक्ष्म्याः। तथा च यो वाहिनीशानां शङ्खान् जहार, न रत्नानि। पृथिव्याः स्थैर्यं जग्राह, न करम्। अवनिभृतां गौरवमादत्त, न नैष्ठुर्यम्। तस्य च सुगृहीत-

---

इत्यमरः। मरुन्महितेषु देवसम्मतेषु। प्रपौत्रः पौत्रपुत्रः। देवस्येत्युक्ते महादेवस्येति च गम्यते। कैलासस्थिरस्थितेः कैलासवत् स्थिरस्वभावस्य, कैलासे स्थिरासनवत इति च। यमजेन यमलजातेन (ഇരട്ടപ്പിറന്നള്ള)। प्रतिग्रहाः दानद्रव्याणि, सैन्यस्य पृष्ठभागाश्च। 'प्रतिग्रहः क्रियाकारे चमूपृष्ठे पतद्ग्रहे। दानद्रव्ये स्वीकृतौ च' इति वैजयन्ती। यत्र चेत्यादि— माधुर्यं प्रियता। अत्र लवणोत्पत्तिस्थानसम्भूताया माधुर्यं स्वादुताभूदिति विरोधश्च ध्वन्यते। 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। वाहिनीशानां शङ्खान् जहार न रत्नानि। धर्मविजयितया राज्ञां सार्वभौमत्वसूचकान् शङ्खान् जहार। न तु ऐश्वर्याङ्गानि रत्नानि जहार इत्यर्थः। *[रत्नं सर्ववस्तुषु श्रेष्ठं वस्तु। 'रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने' इत्यमरः। वाहिनी सेना। 'वाहिनी पृतना चमूः' इत्यमरः। नदी च। 'स्रवन्त्यामपि वाहिनी' इति च। तदीश्वरः राजा।] वाहिनीशशब्देन समुद्रोऽपि ध्वन्यते। पृथिव्याः स्थैर्यं जग्राह न करम्। उपादेयं पृथिव्याः स्थैर्यमेव स्वगुणत्वेन जग्राह; न तु अनुपादेयं निन्दास्पदं करं बलम् इति च। व्यवस्थिततया दृढत्वेन च पृथिव्या अपि स्थिरतर इत्यर्थः। पृथिवीशब्देन स्त्री च ध्वन्यते। करशब्देन हस्तश्च। अवनिभृतां गौरवमादत्त न नैष्ठुर्यम्। अवनिभृतां राज्ञाम्। गौरवं गुरुत्वम्। प्राभवमेव जग्राह न तु नैष्ठुर्यं निर्दयताम्। अवनिभृच्छब्देन पर्वतश्च ध्वन्यते। गौरवशब्देन

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति।

नाम्नो देवस्य महादेव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्मापरनामा तनयः शन्तनोर्भागीरथ्यां भीष्म इव कुमारः समभवत्। अस्य च आशैशवादयं सङ्कल्पः स्थेयान् 'स्थाणुपदारविन्दद्वयादृते नाहम् अन्यं नमस्कुर्याम्' इति। ईदृशश्चायं मनोरथः त्रिभुवनदुर्लभः त्रयाणामन्यतमेन सम्पद्येत सकलभुवनतलविजयेन वा मृत्युना वा यदि वा प्रचण्ड-प्रतापज्वलनजनितदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण। मैत्री च प्रायः कार्यव्यपेक्षिणी क्षोणीभृताम्। कार्यं च कीदृशं नाम तद् भवेद् यदुपन्यस्यमानम् उपनयेन्मित्रतां देवम्। देवस्य हि यशांसि सञ्चिचीषोः धनानि बहिरङ्गभूतानि। बाहावेव केवले निषण्णस्य शेषावयवानामपि साहायकसम्पादनमनोरथो निरवकाशः, किमुत बाह्यस्य जनस्य। चतुःसागरग्रासघस्मरस्य पृथिव्येकदेशदानोपन्यासेऽपि का तुष्टिः। अभिरूपकन्यकाविश्राणनविलोभनमपि लक्ष्मीमुखारविन्ददर्शनदुर्ललित-दृष्टेः अकिञ्चित्करम्। एवम् अघटमानसकलोपायसम्पदि पदार्थेऽस्मिन् प्रार्थनामात्रमेव केवलम् अनुरुध्यमानः शृणोतु देवः। प्राग्ज्योतिषेश्वरो हि, देवेन सहैकपिङ्ग इव अनङ्गद्विषा, दशरथ इव गोत्रभिदा,

---

अलघुता च। नैष्ठुर्यशब्देन कठिनता च। सङ्कल्पः समयः। स्थेयान् एकरूपतया स्थिरतरः। 'स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः' इत्यमरः। मैत्री मित्रत्वम्। उपन्यस्यमानम् उच्यमानम्। केवले एकस्मिन्नेव, अन्य-निरपेक्षे इत्यर्थः। घस्मरस्य भक्षणशीलस्य। 'भक्षको घस्मरोऽद्मरः। आद्यूनः स्यादौदरिकः' इत्यमरः। विश्राणनं दानम्। 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः। अघटमानम् असङ्गच्छमानम्। पदार्थेऽस्मिन् मैत्री-करणाख्ये वस्तुनि। एकपिङ्गः वैश्रवणः। 'यक्षैकपिङ्गैलविलः' इत्यमरः। अनङ्गद्विषा कामशत्रुणा। कामोपभोगपराङ्मुखेनेत्यर्थः, महादेवेन च। गोत्रभिदा गां भुवं त्रायन्त इति गोत्रा राजानः, तान् भिनत्तीति गोत्रभित्। प्रतिपक्षराज्ञां भेदकेनेत्यर्थः। अन्यत्र गोत्रान् पर्वतान् भिनत्ति इति, इन्द्रेण इत्यर्थः।

धनञ्जय इव पुष्कराक्षेण, वैकर्तन इव दुर्योधनेन, मलयानिल इव माधवेन अजर्यं सङ्गतमिच्छति। यदि च देवस्यापि मित्रीयति हृदयम्, अवगच्छति वा पर्यायान्तरितदास्यमनुतिष्ठन्ति सुहृद इति तद्विमृश्य समाज्ञाप्यताम्। अनुभवतु विष्णोर्मन्दरगिरिरिव विकटकेयूरकोटि-घट्टनरणितकटकमणिशिलाशकलानि गाढोपगूढानि देवस्य काम-रूपाधिकृतपतिः। अस्मिन्नातृप्तेः विमललावण्यसौभाग्यसुधानिर्झरिणि निर्मले मुखशशिनि चिराच्चक्षुषी क्षालयतु प्राग्ज्योतिषेश्वरश्रीः। नाभिनन्दति चेद्देवः प्रणयम् आज्ञापयतु किं कथनीयं मया अस्म-त्स्वामिने' इति।

विरतवचसि तस्मिन, अवनिपालः पूर्वोपलब्धैरेव गुरुभिर्गुणै-रारोपितबहुमाने कुमारे सुदूरमाभोगातपत्रव्यतिकरेण परां कोटिमारोपिते प्रेम्णि, लज्जमान इव सादरं जगाद— 'हंसवेग! कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ गुणिनां प्राग्रहरे परोक्षसुहृदि स्निह्यति

---

धनञ्जयः अर्जुनः। पुष्कराक्षेण पद्मपत्रसदृशलोचनेन[1]। अन्यत्र कृष्णेन। वैकर्तनः कर्णः। दुर्योधनेन योधयितुमशक्येन। 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज् वक्तव्यः' (वा० ३. ३. १२८.) इति खलर्थे युच् प्रत्ययः। अन्यत्र धार्तराष्ट्रेण। माधवेन मा श्रीः तस्या धवो भर्ता इति माधवः। 'क्षीरोद-तनया मा च'; 'भर्ता च भोक्ता धवः' इति च हलायुधः[2]। लक्ष्मीपतिने-त्यर्थः। अन्यत्र वैशाखमासेन। 'वैशाखे माधवो राधः' इत्यमरः। अजर्यं सख्यम्। मित्रीयति मित्रमात्मन इच्छति। पर्यायान्तरितं सख्यरूपेण पर्यायेणान्तरितं तिरोहितम्। कटकः पर्वतनितम्बः। कामरूपः प्राग्ज्योतिष-जनपदः। प्राग्ज्योतिषेश्वरश्रीः, 'सशब्दमभिषेकश्रीः' इत्यादिष्विवात्र श्रीशब्दो मङ्गलार्थः, प्राग्ज्योतिषेश्वर इत्यर्थः।

महाभिजने महावंशप्रसूते। प्राग्रहरे श्रेष्ठे। स्निह्यति स्नेहं कुर्वति।

---

१. पद्मसदृशेक्षणेन, २ बुधः। धवः प्रियः पतिर्भर्ता इति च अमरः-क.

यद्विधस्यान्यथा स्वप्नेऽपि प्रवर्तेत मनः । सकलजगदुत्तापनपटवोऽपि शिशिरायन्ते त्रिभुवननयनानन्दकरे कमलाकरे करास्तिग्मतेजसः । सुबहुगुणगणक्रीताश्च के वयं सख्यस्य । सज्जनमाधुर्याणाम् अभृतक-दास्यो दश दिशः । एकान्तावदातोत्तानस्वभावसम्भृतसादृश्यस्य कुमुदस्य कृते केनाभिहितः शिशिररश्मिः । श्रेयांश्च सङ्कल्पः कुमारस्य । स्वयं बाहुशाली मयि च समालम्बितशरासने सुहृदि हरादते किमन्यं नमस्यति । संवर्धिता च मे प्रीतिरमुना सङ्कल्पेन । यतः कुलोचितैव नः सकल-सुरासुरपरमगुरौ परमेश्वरे भगवति भूयसी भक्तवत्सले भक्तिरभूत् । एकभृत्यता हि जनयति जने परमं पक्षपातम् । अपि च अवलेपिनि पशौ केसरिण्यप्यस्ति बहुमानो हृदयस्य मे किं पुनः सुहृदि । तत् तथा यतेथाः, यथा न चिरमियमस्मान् क्लेशयति कुमारदर्शनोत्कण्ठा' इति ।

हंसवेगस्तु विज्ञापयाम्बभूव— देव ! किमपरमिदानीं क्लेशयति । अभिजातमभिहितं देवेन । सेवाभीरवो हि सन्तः, तत्रापि विशेषेणाय-महङ्कारधनो वैष्णवो वंशः । आस्तां तावद् अस्मत्स्वामिवंशः । पश्यतु

---

एकान्तावदातोत्तानस्वभावसम्भृतसादृश्यस्य एकान्तावदातम् अतिधवलम् उत्तान-स्वभावम् उन्मुखस्वभावम् । एकान्तावदाततया उत्तानस्वभावतया च सम्भृतात्म-सादृश्यस्य इत्यर्थः । *[शिशिररश्मिरपि एकान्तावदात उन्नतस्वभावश्च । एकान्तावदतोत्तानस्वभावप्रवृत्तस्येति च पाठः । तस्मिन् पक्षे वृत्तं वृत्ताकारम् । एकान्तावदातस्य च वृत्तस्य चेति पाठः । एतेन च कश्चित् पक्षो गम्यते । तदा वृत्तम् आचारः । 'वृत्तं पद्ये चरित्रे च' इत्यमरः । एकान्तावदातो-त्तानस्वभावाचारस्य इत्यर्थः । शिशिररश्मिशब्देन कश्चिद् राजा च गम्यते ।

अपरं त्वदन्यम् । कमपरमिति च पाठः । अभिजातं शोभनम् । सेवा विडम्बनम् ।] पुरुषस्येत्यादि— अत्र पुरुषस्येति पदस्य एवम्भूतस्य पुरुषस्य किं प्रायश्चित्तमित्यादिभिः वक्ष्यमाणैः सह सम्बन्धः । अत्र प्रभुसेवार्थम् उद्युक्तानां पुरुषाणां गृहाद्गमनोद्यागादिकः सकलोऽपि क्रम उक्त इत्यनुसन्धेयम् ।

---

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति ।

देवः। पुरुषस्य हि सेवां प्रति दुर्जनन्येवातिवृद्धया दुर्गत्या वा अभिमुखीक्रियमाणस्य, कुटुम्बिन्येवासन्तुष्टया तृष्णया वा प्रेर्यमाणस्य, दुरपत्यैरिव यौवनजनितैः नानाभिलाषिभिः असत्सङ्कल्पैर्व्याकुलीक्रियमाणस्य, जरत्कुमारीमिव वरमार्गणयोग्याम् अतिमहतीमवस्थां वा पश्यतः, स्वगृहे दुर्बन्धुभिरिव दुःस्थितैः समग्रैर्ग्रहैर्वा गृह्यमाणस्याभियोगं पुरातनैः अतिदुस्त्यजैर्भृत्यैरिव मलिनैः कर्मभिर्वानुवर्त्यमानस्य, सकलसन्तापकरं करीषाग्निमिव दुष्कृतिनः कृतचित्तस्य प्रवेष्टुं राजकुलम्, उपहतसकलेन्द्रियशक्तेरिव मिथ्यैव हृदयगतविषयग्रामग्रहणाभिलाषस्य, प्रथममेव तोरणतले वन्दनमालाकिसलयस्येव उपशुष्यतः, द्वाररक्षिभिर्निरुद्धस्य निपीडितस्य

---

दुर्जनन्येत्यादिषु जनन्यादीनाम् अनुचितसेवाकार्यप्रवर्तकत्वान्निकृष्टतासूचनार्थं दुरादयो निन्दाशब्दाः प्रयुक्ताः। अतिवृद्धया अतिप्रभूतया, अतिजरत्या च। दुर्गत्या दारिद्र्येण। असन्तुष्टया पर्याप्तबुद्धिहीनया। उभयत्र समानम्। यौवनजनितैः पुरुषस्य बाल्यवार्धकयोरशक्ततया यौवनसमय एवार्थार्जनव्यवसायकाल इति कृत्वा यौवनजनितैरित्युक्तम्। एतदुभयत्रापि समानम्। वरमार्गणं वरिष्ठपुरुषैः स्वस्मिन् क्रियमाणा याच्ञा। अन्यत्र जामातुरन्वेषणम्। अतिमहतीमवस्थाम् उच्छ्रितत्वं, स्पृहणीयतां च। दुर्बन्धुभिः दुर्ज्ञातिभिः। दुःस्थितैः दरिद्रैः। अन्यत्र दुःस्थानस्थितैरित्यर्थः। ग्रहैः आदित्यादिभिः नवग्रहैः। ग्रहदोषफलं सेवाभियोग इति भावः। अभियोगं कार्योद्योगम्। दुस्त्यजैरित्युभयत्र समानम्। भृत्यैः भर्तव्यजनैः। सन्तापः क्लेशः, तापश्च। करीषाग्निं गोमयाग्निम्। दुष्कृतिनः पापिष्ठस्य पातकिनश्च। पातकिनः करीषाग्निप्रवेशः प्रायश्चित्तमित्युक्तं च प्रायश्चित्ताधिकारे मनुना— 'प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः' इति। *[मिथ्या व्यर्थम्। विषयग्रामः रूपादिविषयसमूहः। अन्यत्र विषया देशाः। ग्रामा अग्रहारादयः। तोरणतले द्वारप्रदेशे, तोरणाख्यस्तम्भमूले च। वन्दनमालाकिसलयस्य तोरणरज्जु-

---

१. 'ष्ठान् पुरुषान् प्रत्युक्तिक्रियमाणा'–क.

*कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति.

**प्रविशतो द्वारे हरिणस्येव अपरैर्हन्यमानस्य, करिकर्मचर्मपुटस्येव मुहुर्मुहुः प्रतिहारमण्डलकरप्रहारैः निरस्यमानस्य, निधिपादपप्ररोहदारुमयदेहस्येव द्रविणाभिलाषादधोमुखीभवतः, दूरम् अमार्गणस्येवोपरि अतिकृष्ट-विधृतविसर्जितस्योद्वेगं व्रजतः, अकण्टकस्येव चरणतललग्नस्याकृष्य क्षेपीयः क्षिप्यमाणस्य, मकरकेतोरिव अकालोपसर्पणप्रकुपितेश्वरदृष्टि-**

---

किसलयस्य । हरिणस्य अन्यत्र दृष्टान्तत्वेन हरिणस्य, ग्रहणम् अस्यापि तत्सादृश्यसूचनार्थम् ।] करिकर्मचर्मपुटस्य करिणां वधादिशिक्षार्थं चर्मणा कृतस्य पुरुषाकारवस्तुनः । निरस्यमानस्य प्रहृत्य क्षिप्यमाणस्य । अन्यत्र जनानां पुरतः प्रेर्यमाणस्य । निधिपादपप्ररोहदारु निधियुक्तस्थलप्ररूढस्य पादपस्य प्ररोहरूपं दारु । प्ररोहः (വിഴുതുവേര്) । द्रविणं धनम् । अधोमुखी-भवतः प्रणमतः, अवाङ्मुखीभवतश्च । निधियुक्तस्थलप्ररूढः पादपः प्ररोह-युक्तायाः प्लक्षन्यग्रोधादिजातेरन्य एवापि धनप्रदेशेषु प्ररोहं मुञ्चति इति निधिवादिनां वादः । अमार्गणस्य याचनरहितस्य । वाचा किञ्चिदप्यायाच-मानस्य इत्यर्थः । मार्गणात् शरादन्यस्येति च । अतिकृष्टविधृतविसर्जितस्य अतिदूरमाकृष्य पूर्वं विधृतस्य निरुद्धस्य पश्चाद् विसर्जितस्य । अन्यत्र अतीव कृष्टस्य च, गृहीतविसर्जितस्य च । उद्वेगं व्रजतः विषादं प्राप्नुवतः । अन्यत्र उद्धतवेगं धावतः । *[एतदुक्तं भवति- मार्गण .... वातिकृष्टविधृतविसर्जितश्च उद्वेगं व्रजति । पुरुषः स्वमार्गणमपि अतिकृष्टविधृतविसर्जितः उद्वेगं व्रजति इति । अकण्टकस्य अशत्रुभूतस्य, द्रुमसूचेरन्यस्येति च । । चरणतललग्नस्य पादमूल एव सदा संसक्तस्य ।] अन्यत्र पादान्तस्थलेऽवलग्नस्य । क्षिप्यमाणस्य निरस्यमनास्य । अन्यत्र पादादुद्धृत्य अन्यतः क्षिप्यमाणस्य । एतदुक्तं भवति— कण्टकं एव चरणतललग्नः प्रकृष्य क्षिप्यते । पुरुषस्तु अकण्टको-ऽपि आकृष्य क्षिप्यत इति । अकालोपसर्पणप्रकुपितेश्वरदृष्टिदग्धस्य अनवसरेषु उपगमनेन प्रकुपितेन ईश्वरेण राज्ञा दृष्टिदग्धस्य सकोपदृष्टस्य इत्यर्थः । अन्यत्र अकालशब्देन निवृत्तिसक्तस्य ईश्वरस्य तपःसमाधिसमयो विवक्षितः । एतदुक्तं भवति— यदा तु देवस्य विषयोपभोगेषु श्रद्धा भवति तदा हि मकरकेतोः

---

कोष्ठकान्तर्गतो भागः खगपाठयोर्नास्ति,

दग्धस्य प्रलयमुपगच्छतः, कपेरिव कोपनिर्भर्त्सितस्यापि अभिन्नमुख रागस्य, ब्रह्मघ्न इव प्रतिदिवसं वन्दनोद्धृष्टशिरःकपालस्य स्पर्शनरहितस्य अशुभकर्माणि निर्वहतः, त्रिशङ्कोरिव उभयलोकभ्रष्टस्य नक्तन्दिवमवाक्शिरसस्तिष्ठतः, वाजिन इव कबलवशेन सुखवाह्यमात्मानं विदधानस्य, अनशनशायिन इव हृदयस्थापितजीवनाशस्य शरीरं

---

उपसर्पणयोग्यता, न तु अन्यदा। अतः तपःसमाधिकाले उपसर्पन्नयं प्रकुपितेन ईश्वरेण दृष्टया नयनाग्निना निर्दग्ध इति। प्रलयं राजसमीपे निश्चेष्टावस्थानम्। 'प्रलयो नष्टचेष्टता' इत्यमरः। 'प्रलयोऽस्पन्दनस्थितिः' इति वैजयन्ती। अन्यत्र नाशम्। मुखरागस्य मुखवर्णस्य, मुखगतरक्तवर्णस्य च। ब्रह्मघ्नः कृतब्रह्महत्यस्य। प्रतिदिवसमित्यादि उभयत्र समानम्। स्पर्शनं दानं, स्पृष्टिर्वा। अन्यत्र हस्तादिना स्पर्शनम्। अशुभकर्माणि नीचकर्माणि, पापकर्मफलानि च। निर्वहतः अनुतिष्ठतः, अनुभवतश्च। उभयलोकभ्रष्टस्य ऐहिकामुष्मिकगतिहीनस्य। अन्यत्र गुरुपुत्रशापेन चण्डालत्वप्राप्त्यास्माल्लोकाद् भ्रष्टत्वम्, इन्द्रेण स्वर्गात् पातनेन परलोकाद् भ्रष्टत्वम्। अवाक्शिरसः अवनतमुखस्य, अधोगतशिरसश्च। इक्ष्वाकुवंश्यस्त्रिशङ्कुरिति राजा शरीरेण सह स्वर्गं यियासन् याजयितुं पुरोधसं वसिष्ठमुपगम्य अयाचत। तेन तु अशक्यमिति प्रत्याख्यातः तत्पुत्रान् प्रार्थितवान्। ते चापि तं स्वपितुरवमन्तारं त्रिशङ्कुं कोपात् चण्डालो भव इत्यशपन्। स तैरप्यवधूतो विश्वामित्रमुपगम्य प्रार्थितवान्। सोऽपि तं स्वतपोबलेन शरीरेण सह स्वर्गमारोपितवान्। ततस्तम् इन्द्रः त्वं गुरुद्रोही चण्डालश्च स्वर्गनिवासयोग्यो न भवसीति स्वर्गादपातयत्। सोऽपि अवाक्शिराः पतन् विश्वामित्रेण तथैव आकाश एव स्थापित इति कथा। कबलवशेन कबलस्पृहया। अन्यत्र कबलायत्ततया कबलभक्षणोत्पन्नबलानुरूपमित्यर्थः। 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति वैजयन्ती। सुखवाह्यं बवयोरभेदः। सुखबहिष्कृतमित्यर्थः। अन्यत्र सुखेनाक्लेशेन वाह्यं वहनीयम्। स्थापितजीवनाशस्य स्थापितो जीवानां प्राणानां नाशो यस्य, परिभवासहिष्णुतया मरणम् अभिलषत इत्यर्थः। अन्यत्र स्थापिता जीवनेऽशने आशा काङ्क्षा यस्य।

क्षपयतः, शुन इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नमात्मानमुत्तानयतः, प्रेतस्येव अनुचितभूमिदीयमानान्नपिण्डस्य, बलिभुज इव जिह्वालौल्योपयुक्तान्यपुरुषवर्चसो वृथा विहितायुषो जीवतः, श्मशानपादपानिव पिशाचस्य दग्धभूत्या परुषीकृतान् राजवल्लभानुपसर्पतः, विपरीतजिह्वाजनितमाधुर्यैरोष्ठमात्रप्रकटितरागैः राजशुकालापैः शिशोरिव मुग्धविलोभ्यमानस्य, वेतालस्येव नरेन्द्रप्रभावाविष्टस्य न किञ्चिन्नाभिचरतः, चित्रधनुष इव अलीकगुणाध्यारोपणक्रियानित्यनम्रस्य, आलेख्यप्रदीपस्येव

---

क्षपयतः कृशीकुर्वतः। दारपराङ्मुखस्य सेवापरतया दारवियुक्तस्य इत्यर्थः। श्वानस्तु दारपराङ्मुखा भूत्वा मैथुनं कुर्वन्तीति भावः। जघन्यकर्म निकृष्टकर्म। अन्यत्र जघनभवं कर्म, सुरतमित्यर्थः। उत्तानयतः उत्तानं कुर्वतः, अगम्भीरयत इत्यर्थः, उन्मुखयतश्च। अनुचिता भूमिः अयोग्यस्थानं, चितासमीपप्रदेशश्च। बलिभुजः काकस्य। जिह्वालौल्योपयुक्तपुरुषवर्चसः जिह्वालौल्ये उपयुक्तं विषयीकृतं पुरुषाणां वर्चो यस्य। स्तुतान्यपुरुषैर्जितस्येत्यर्थः। अन्यत्र भक्षितपुरुषविष्ठस्य। वर्चःशब्दः तेजःपुरीषयोर्वर्तते। 'तेजःपुरीषयोर्वर्चः' इत्यमरः। दग्धभूत्या निन्दितैश्वर्येण। अन्यत्र दग्धानां शवानां भूत्या भस्मना। परुषं रूक्षं, भूम्रं च। विपरीतजिह्वाजनितमाधुर्यैः अयथाजिह्वाजनितप्रियैः। पुरा किल विनष्टम् अग्निं दिदृक्षमाणानां देवानां भ्राम्यतां शुकाः प्रादर्शयन्। अतः तान् अग्निः शप्तवान् विपरीतजिह्वा भवत इति। तदाप्रभृति शुका लोके विपरीतजिह्वा बभूवुः। तथापि देवानुग्रहात् कलभाषिणोऽभवन् इति कथा। ओष्ठमात्रप्रकटितरागैः ओष्ठ एव प्रकटितरागैः प्रकटितस्नेहैः, न तु हृदय इति भावः। वाङ्मात्रमधुरैरित्यर्थः। अन्यत्र रागो रक्तवर्णता। राजशुकालापैः शुक इव राजा इति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा० सू० २. १. ५६.) इति समासः। पुरुषपक्षे राज्ञ आलापैः। शिशुपक्षे शुकस्यालाप इत्यर्थः। मुग्धस्य मोहप्राप्तस्य। अन्यत्र अज्ञस्य। नरेन्द्रः राजा, मन्त्रवादी च। आविष्टस्य वल्लभताभावनया परवशीभूतचित्तस्य, स्तोभितस्य च। चित्रधनुषः नानावर्णधनुषः, मेघस्थेन्द्रधनुषः इत्यर्थः। अलीकगुणः अभूतपूर्वशौर्यादिकः, असत्य-

निर्वाणतेजसः, अवकरक्षिप्तकूटस्येव निर्माल्यवाहिनः, कफविकारिण इव दिने दिने कटुकैरुद्वेज्यमानस्य, सौगतस्येव अर्थशून्यविज्ञप्तिजनितवैराग्यस्य काषायान् अभिलषतः, क्षपणकस्येव अनेकान्तर्थाधिगमाकुलधियो हृदयोपचितमलकूटस्य, निशास्वपि मातृबलिपिण्डस्येव दिक्षु विक्षिप्यमाणस्य, आशौचगतस्येव कुशयनजनितसमधिकतरदुःखवृत्तेः, तुलायन्त्रस्येव पश्चात्कृतगौरवस्य तोयार्थमपि नमतः, अतिकृपणस्येव

मौर्वी च। निर्वाणतेजसः नष्टप्रभावस्य। अन्यत्र अनुष्णतेजस इत्यर्थः। अवकरक्षिप्तकूटस्य सम्मार्जनीक्षिप्तमलसमूहस्य। 'सम्मार्जनी शोधनी तन्मलेऽवकरसङ्करौ' इति वैजयन्ती। निर्माल्यं त्यक्तपुष्पम्। कफविकारिणः श्लेष्मकोपवतः। कटुकैरुद्वेज्यमानस्य अप्रियवचनैः सविषादीक्रियमाणस्य। अन्यत्र कटुकौषधैः क्लेश्यमानस्य। सौगतस्य बौद्धस्य। अर्थशून्यविज्ञप्तिजनितवैराग्यस्य निरर्थकविज्ञापनाजनितादराभावस्य। अन्यत्र बाह्यार्थशून्यविज्ञप्तिभावनया जनितवैराग्यस्य। बौद्धानां केवलमर्थशून्यं ज्ञानमेवास्तीति सिद्धान्तः। उक्तं च— 'तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः' इति। काषायानभिलषतः सेवया जनितक्लेशतया कुटुम्बस्योपरि द्वेषेण काषायवस्त्रमभिलषत इत्यर्थः। अन्यत्र स्पष्टः। सौगता हि सदा काषायवसनधारिण इति भावः। क्षपणकस्य आर्हतस्य। अनेकान्तार्थाधिगमः एकान्तस्थितिहीनधनलाभः, नश्वरधनार्जनम् इत्यर्थः। अन्यत्र अनेकान्तत्वेन अव्यवस्थितत्वेन अर्थानां पदार्थानाम् अनुसन्धानं, क्षपणकानां पदार्थाः सर्वेऽनेकान्ता इति सिद्धान्तः। हृदयोपचितमलकूटस्य मनसि सञ्चितस्वकृतपापसमूहस्य। मनसि सम्पूर्णनिकृष्टकर्मसमूहस्येति वा। अन्यत्र वक्षस्थलसञ्चितमलसमूहस्य। मलम् (அழுக்கு)। निशास्वपि इत्यत्र अपिशब्दः अनुकम्पनीयताद्योतनार्थः। मातृबलिः चण्डिकामुद्दिश्य दीयमानो बलिः। विक्षिप्यमाणस्य निरस्यमानस्य, [3]नीयमानस्य च। कुशयनं कुत्सितशयनं, भूशयनं च। आशौचिनां भूमौ शयनं विहितम्। 'उक्तं च— 'क्रीतलब्धाशिनो भूमौ शयेयुस्ते पृथक् पृथग्' इति। तुलायन्त्रं कूपादिभ्यो जलोद्धरणार्थं कृतो यन्त्रविशेषः। तोयार्थं पानीयार्थं, जलार्थं च। नमतः प्रणमतः, अवाङ्मुखीभवतश्च। पश्चात्कृतगौरवस्य निरस्तगौरवस्य। अन्यत्र

१. स्य (பம்பை, கூடை), २. 'यपटग्रहणमभि', ३. 'दीयमानस्य'-क.

**शिरसा केवलेनासन्तुष्टस्य वचसापि पादौ स्पृशतः, निर्दयवेत्रिवेत्रताडनत्रस्तयेव अपत्रपया परित्यक्तस्य, दैन्यसङ्कोचितहृदयहृतावकाशयेवाहोपुरुषिकया परिवर्जितस्य, कुत्सितकर्माङ्गीकरणकुपितयेव चोन्नत्या विमुक्तस्य, धनश्रद्धया क्लेशानुपार्जयतः, स्ववृद्धिबुद्ध्यावमानं संवर्धयतो मूढस्य, सत्यपि विविधकुसुमाधिवाससुरभिणि वने तृष्णयाञ्जलिमुपरचयतः, कुलपुत्रस्यापि कृतागस इव भीतभीतस्य समीपमुपसर्पतः, दर्शनीयस्यापि आलक्ष्यकुसुमस्येव निष्फलजन्मनः, विदुषोऽपि वैधेयस्येव अपशब्दमुखस्य, शक्तिमतोऽपि श्वित्रिण इव सङ्कोचितकरयुगलस्य, समसमुत्कर्षेषु निराग्निपच्यमानस्य,**

---

अपरभागे कृतभारस्य । शिरसेत्यादि— शिरसैकेन पादस्पर्शे पर्याप्तबुद्धिहीनतया वचसापि प्रणाम इत्यसकृद् वदतः इत्यर्थः । अपत्रपया अन्यपुरुषनिमित्तया लज्जया । 'मन्दाक्षं ह्रीस्त्रपा व्रीला लज्जा सापत्रपान्यतः' इत्यमरः । सङ्कोचितम् अल्पावकाशीकृतम् । आहोपुरुषिकया आत्मनि गौरवारोपणेन । 'आहोपुरुषिका दर्पाद् या स्यात् सम्भावनात्मनि' इत्यमरः । वृद्धिः अभ्युदयः । विविधेत्यादि उभयत्र समानम् । वने कानने । वनम् अत्र तपःसाधनस्थानभूतं विवक्षितम् । पानीयं च ध्वन्यते । तृष्णया धनश्रद्धया, पिपासयेति च । अञ्जलिं प्रणामार्थमिति भावः । अन्यत्र पानार्थम् । दर्शनीयस्य दृष्टिविषयस्थितस्य, द्रष्टव्यस्य च । निष्फलजन्मनः निष्प्रयोजनजननस्य । अन्यत्र निर्गतं फलजन्म फलोत्पत्तिरस्य । वैधेयस्य अज्ञस्य । अपशब्दमुखस्य अपगतशब्दमुखस्य प्रहारभीत्या किञ्चिदप्यवदत इत्यर्थः । अथवा अपशब्दानाम् अपगतयशसां पुरुषाणां मुखस्य मुख्यभूतस्य । कीर्तिहीनानां प्रधानभूतस्य इत्यर्थः । 'शब्दोऽक्षरे यशोगीत्योः', 'मुखं तु वदने मुख्ये' इति वैजयन्ती । अन्यत्र अपशब्दा असाधुशब्दा मुखे यस्य । श्वित्रिणः श्वेतकुष्ठिनः । सङ्कोचितकरयुगलस्य प्रणामार्थम् अञ्जलिकरणेन मुकुलीकृतकरयुगलस्य इत्यर्थः । अन्यत्र कुष्ठेन विशीर्णकरयुगलस्य इत्यर्थः । समसमुत्कर्षाः समस(या?मा)चाराः समशब्देन विवक्षिताः । असमसमुत्कर्षेष्विति च

नीचसमीकरणेषु सोच्छ्वासं म्रियमाणस्य, परिभववचनैः तूष्णीकृतस्य, दुःखानलेनानिर्वृतेर्ज्वलतः, भक्तस्याप्यभक्तस्य, निरूष्मणः सन्तापयतो बन्धून्, विमानस्यापि अगतिकस्य, च्युतगौरवस्यापि अधस्ताद्गच्छतः, निस्सत्त्वस्यापि महामांसविक्रयं कुर्वतः, निर्मदस्यापि अस्वतन्त्रवृत्तेः,

---

पाठः। असमशब्देन स्वस्मादुत्कृष्टा विवक्षिताः। सोच्छ्वासं म्रियमाणस्य जीवत एव म्रियमाणस्य इत्यर्थः। दुःखानिलेनेत्यादि— अत्र अग्निसमाधिर्विवक्षितः - अनिर्वृतेः असुखस्य, अशमनस्येति च। ज्वलतः तप्यमानहृदयस्य, दीप्यमानस्येति च। भक्तस्य स्वाम्यनुरक्तस्य। अभक्तस्य अस्वाम्यनुरक्तस्येत्यर्थः। अभक्तस्य अन्नरहितस्य, जीवनरहितस्येत्यर्थः। निरूष्मणः निरौष्ण्यस्य। सन्तापयतः तापयुक्तान् कुर्वतः। मुख्यार्थः— निरूष्मणः निःशक्तेः, निष्प्रतापस्येति वा। सन्तापयतः विषादयतः। विमानस्य देवयानस्य। अगतिकस्य गमनहीनस्येत्यर्थः। मुख्यार्थोऽपि विमानस्य विगताभिमानस्य, विगतसम्मानस्येति वा। अगतिकस्य परलोके सद्गतिहीनस्य, गत्यन्तरहीनस्येति वा। च्युतगौरवस्य गरिमहीनस्य। अधस्ताद्गच्छतः अधोऽधः पततः। मुख्यार्थः— च्युतगौरवस्य गतमहत्त्वस्य अधस्ताद्गच्छतः पौरुषादिविहीनतया सर्वेषामपि अधोभवत इत्यर्थः। निस्सत्त्वस्य निर्गतव्यवसायस्य। महामांसविक्रयं नरमांसेन पुरुषोपहारम्। धैर्यरहितस्य भीषणानां पिशाचादीनां सन्निधौ महामांसविक्रयं दुष्करम् इति भावः। अथवा निस्सत्त्वस्य जन्तुहीनस्येत्यर्थः। उपहार्यजन्तुहीनस्य पुरुषोपहारो दुष्कर इति भावः। मुख्यार्थः— निस्सत्त्वस्य गतात्मभावस्य। सर्वत्र वैजयन्ती— 'सत्त्वोऽस्त्री जन्तुषु क्ली तु व्यवसाये पराक्रमे। आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः॥' इति। महामांसविक्रयं सेवाव्यसनेन निजशरीरशोषणम्, आत्मशरीरस्यापि शोषणं परशेषताप्रतिपादनं वा। 'आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः' इति महाभारते च। निर्मदस्य मद्यपानादिजनितचित्तस्खलनरहितस्य। अस्वतन्त्रवृत्तेः परवशव्यापारस्य। स्खलितचित्तः परवशवृत्तिर्भवतीति भावः। मुख्यार्थः— निर्मदस्य हर्षरहितस्य। अस्वतन्त्रवृत्तेः परायत्तजीवनस्य। निर्मदस्य स्वतन्त्रवृत्तेरिति च पाठः।

**अयोगिनोऽपि ध्यानवशीकृतात्मनः, शय्योत्थायं प्रणमतो दग्धमूर्धस्य, गोत्रविदूषकस्य मनस्विजनं हासयतः, कुलाङ्गारस्य वंशं दहतः, नृपशोस्तृणेऽपि लब्धे कन्धरामवनमयतो जठरपरिपूरणमात्रप्रयोजनजन्मनः, मांसपिण्डस्य गर्भरोगस्य मातुरपुण्यानां कर्मणाम्, आमरणाद्भृतकस्य किं प्रायश्चित्तं, का प्रतिक्रिया, क्व गतस्य शान्तिः, कीदृशं सुखं, कः पुरुषाभिमानः, किंनामानो विलासाः, कीदृशी भोगश्रद्धा, प्रबलपङ्क इव सर्वम्**

---

स्वतन्त्रवृत्तेः आकृत्याचरणेषु परलोकराजादिभ्यो भयमनवेक्ष्य प्रवर्तमानस्य इत्यर्थः। मत्तो ह्येवं भवति। मुख्यपक्षे तु स्वशब्दो धनवाची, स्वकुलोचिताचाराद्यनवेक्षणेन अर्थैकप्रधानवृत्तेरित्यर्थः। अयोगिनः योगिनोऽन्यस्य। योगः चित्तवृत्तिनिरोधोऽस्यास्तीति योगी। ध्यानवशीकृतात्मनः ध्यानेन दृष्टपरमात्मन इत्यर्थः। योगिनो ह्यात्मदर्शनं भवतीति भावः। मुख्यार्थः— प्रतिकूलं दैवम् अयोगः तद्वतः दैवप्रातिकूल्यवतः इत्यर्थः। अथवा अयोगो वियोगः। बन्धुभिः वियोगोऽस्यास्तीति अयोगी। 'अयोगविश्लेषवियोगः' इति अजयः(?)। ध्यानवशीकृतात्मनः अर्थैकचिन्तापरात्मन इत्यर्थः। शय्योत्थायं प्रणमतः शय्याया उत्थाय तदानीमेव प्रणमत इत्यर्थः। शय्योत्थायम्— 'अपादाने परीप्सायाम्' (पा० सू० ३. ४. ५२.) इति णमुल्। परीप्सा अभित्वरा। अत्र तु परीप्सेति प्रणामगतः सम्भ्रमोऽभिप्रेतः। दग्धमूर्धस्य सर्वदा प्रणामतात्पर्येण निन्दितशिरसः। गोत्रविदूषकस्य वंशस्य विदूषयितुः। विदूषकशब्देन क्रीडकोऽपि ध्वन्यते। 'विदूषकः केलिकिलः' इति वैजयन्ती। हासयतः उभयत्र समानम्। कुलाङ्गारस्य कुलस्य अङ्गारवद् दाहहेतुभूतस्य। वंशः कुलं, वेणुरिति च। नृपशोः नृषु पशुभूतस्य। कन्धरामवनमयतः प्रणमत इत्यर्थः। भक्षणार्थमवनमयत इति च। जठरपरिपूरणमात्रप्रयोजनजन्मनः केवलं स्वोदरपूरणस्यैव प्रयोजनस्य कृते जातवत इत्यर्थः। केचिदेतद् मांसपिण्डपदस्य विशेषणत्वेन इच्छन्ति। मातुः जठरपरिपूरणमात्रप्रयोजनजन्मनः

अधस्तान्नयति दारुणो दासशब्दः। धिक् तदुच्छ्वसितम्। यातु तद्धनं निधनम्। अभवनिर्भूतेरस्तु तस्याः। नमो भगवद्भ्यस्तेभ्यस्सुखेभ्यः। तस्यायमञ्जलिरैश्वर्यस्य। तिष्ठतु दूरत एव सा श्रीः। शिवं सपरिच्छदः करोतु यदर्थमुत्तमाङ्गं गां नेष्यति। अशापानुग्रहक्षमस्तपस्वी, अमुखप्रियरतः क्लीबः, अपूतिमान् अवस्करकृमिः अगण्यमानो नरकः, पादधूलीधूसरितोत्तमाङ्गो जङ्गमः पादपीठः, पुंस्कोकिलः काकुभणितेषु, शिखी मधुरकेकारुतेषु,

---

गर्भरोगस्य मांसपिण्डस्य इत्यर्थः। गर्भरोगः उदररोगः। अधस्तान्नयति अधोभावयति, अधोभागं गमयति च। उच्छ्वसितं सेवामध्ये कदाचित् स्वगृहं गत्वाश्वसनम्। धनं सेवाक्लेशेनार्जितमिति भावः। अभवनिः जननाभावः। नमो भगवद्भ्य इत्यादिकमप्याक्रोश एव। यदर्थं येषां धनादीनां कृते। अशापानुग्रहक्षम इत्यादीनां पदानाम् उत्तरत्रैवम्भूतः सेवकः इति सम्बन्धः। अशापानुग्रहक्षमः निग्रहानुग्रहासमर्थः। तपस्वी मुनिः। मुनिश्चेत् शापानुग्रहक्षम एव भवति। मुख्यार्थः— तपस्वी हेयः। अमुखप्रियरतः मुखे आस्ये प्रियमिष्टं रतं मैथुनं यस्य नास्ति सोऽमुखप्रियरतः। क्लीबः नपुंसकम्। क्लीबश्चेद् इष्टमुखमैथुन एव भवति। मुख्यार्थः— अमुखप्रियरतः मुखप्रीत्यनपेक्ष इत्यर्थः। अथवा न कदाचिदपि मुखप्रियेण सुखितः। कैश्चिदपि मुखप्रीत्या न तोषित इत्यर्थः। क्लीबः अवस्तुभूतः। अपूतिमान् दुर्गन्धहीनः। पूतिरिति— 'पूयी विशरणे दुर्गन्धे च' इति धातोः क्तिन्प्रत्यये कृते रूपम्। अवस्करकृमिः विष्ठोद्भूतजन्तुः। अवस्करकृमिश्चेत् पूतिमानेव भवति। मुख्यार्थः— अपूतिमान् शुद्धिहीनः। पूतिरिति 'पूञ् पवने' इति धातोः क्तिन्प्रत्यये कृते रूपम्। अवस्करकृमिः मातृगर्भोत्पन्नकृमिः। 'गुह्यगूढाववस्करौ' इति वैजयन्ती। अत्र गूढशब्दः विष्ठापर्यायः। अगण्यमानः रौरवादिषु अन्यतमत्वेन अगृह्यमाण एव। नरकः निरयः। नरकश्चेद् रौरवादिषु अन्यतमत्वेन गृह्यमाण एव। मुख्यार्थः— अगण्यमानः अगणनीयाभिमानः, मानहीन इत्यर्थः। अथवा पुरुषत्वेनागृह्यमाणः। नरकः कुत्सितनरः। 'कुत्सिते' (पा० सू० ५. ३. ७४.) इति सूत्रेण कप्रत्ययः। उत्तमाङ्गं शिरः, उपरिभागश्च। काकुभणितेषु चाटूक्तिषु। अन्यत्र विकृतध्वनिषु। केकारुतेषु अर्थशून्यालापेषु।

स्थलकूर्मः क्रोडैकषणेषु, श्वा नीचचाटुकरणेषु, कृकलासः शिरोविडम्बनासु, जाहकः आत्मसङ्कोचनेषु, प्रतिपादुकः पादसंवाहनेषु, कन्दुकः करतलताडनेषु, वीणादण्डः कोणाभिघातेषु वेणुः मूर्च्छनासु, वेश्याकायः करणबन्धक्लेशेषु पलालराशिः सत्त्वशालिषु वराकः सेवकोऽपि मर्त्यमध्ये, राजिलोऽपि भोगी, पुलाकोऽपि वा

---

अन्यत्र केका मयूराणां शब्दः । स्थलकूर्मः (വരളാമ്മ) । क्रोडकषणेषु प्रणामादिक्रिययोरःस्थलमर्दनेषु । अन्यत्र गमनादिना । 'क्रोडं भुजान्तरम्' इत्यमरः नीचचाटुकरणेषु . . . अन्यत्र निहीनानां जातीनां चाटुकरणेषु । कृकालसः सरटः (ഓന്ത്) । (शिरो:) विडम्बना प्रणामानि । परिभवः कम्पश्च । जाहकः मृगविशेषः (ചാക്കിള) । आत्मसङ्कोचनेषु प्रभुसन्निधौ शरीरावयवानां यथेष्टम् अप्रसारणेषु । अन्यत्र शरीराणां सङ्कोचकरणेषु । प्रतिपादुकः पादपीठः । पादसंवाहनेषु प्रभूणां चरणमर्दनेषु । अन्यत्र शयनीयगतानां पुरुषाणां पादस्य सम्यग् धारणेषु । कन्दुकः गड्डुकः (പന്ത്) । ताडनेषु प्रहारेषु आहतिषु च । कोणाभिघातेषु ग्रहकोणप्रदेशे निरसनेषु । अन्यत्र वादनदण्डेनाहतिषु । वेणुः (കുഴൽ) । मूर्च्छनासु मोहेषु । अन्यत्र सप्तस्वराणां क्रमावस्थानेषु । उक्तं च— 'क्रमयुक्ताः स्वराः सप्त मूर्च्छनाः परिकीर्तिताः ।' इति । करणबन्धः इन्द्रियस्तम्भः । यथावत् शरीरस्य प्रसारणं वा । अन्यत्र नृत्तेषु क्रियमाणो रेचकादिः करणं (ചാരൊണ്ണൂ) । पलालः (വൈക്കോൽ) । सत्त्वशालिषु सत्त्वस्थितेषु । शालिशब्देन व्रीहयोऽपि ध्वन्यन्ते । वराकः चपलः । सेवकेत्यादि— अपिशब्दो गर्हायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः । मर्त्यमध्ये, किं कश्चिदिति शेषः । राजिलः डुण्डुभः (ചേര) । पुलाकः तुच्छधान्यम् । 'स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके' इत्यमरः । इयमत्र वचोभङ्गी । एवम्भूतोऽधमः सेवकोऽपि मर्त्यमध्ये किं कश्चिद्गणनीयः । राजिलः किं भोगी । पुलाकः किं कलमः, नैवेत्यर्थः । एतदुक्तं भवति— यथा राजिलपुलाकौ भोगिकलमयोर्मध्ये च वस्तुत्वेन गणनीयौ तथा सेवकोऽपि मर्त्यमध्ये पुरुषत्वेन गणनीय इति ।

कल्मषः। वरं क्षणमपि कृता मानवता मानवता। नमतो नमतस्त्रैलोक्याधि-
राज्योपभोगोऽपि मनस्विनः। तदेवमभिनन्दितास्मदीयप्रणयो देवो
दिवसैः कतिपयैः परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसि
इत्युक्त्वा च तूष्णीमभूत्। चिराच्च नमस्कृत्य निर्जगाम।

राजापि रजनीं तां कुमारदर्शनौत्सुक्यस्वीकृतहृदयः समनैषीत्।
आत्मार्पणं हि महताम् अमूलमन्त्रमयं वशीकरणम्। प्रभाते च प्रभूतं
प्रतिप्राभृतं दत्त्वा प्रधानदूताधिष्ठितं हंसवेगं प्राहिणोत्। आत्मनापि
ततःप्रभृति प्रयाणकैरनवरतमभ्यमित्रं प्रावर्तत। कदाचिद् राज्यवर्धन-
भुजबलार्जितम् अशेषं मालवराजसाधनमादायागतं समीप एवावासितं
लेखहारकाद् भण्डिमशृणोत्। श्रुत्वा च अभिनवीभूतभ्रातृशोकहुताशनः
तद्दर्शनकातरहृदयो बभूव। मूर्च्छामन्धकारमिव विवेश। अतिष्ठच्च
समुत्सृष्टसकलव्यापारः प्रतीहारनिवारणनिश्शब्दपरिजने निजमन्दिरे
सराजकपरिवारः तदागमनमीक्षमाणो मुहूर्तम्।

---

वरमित्यादि। वरं प्रियम्। इदमव्ययमिति केचित्। मानवता मानिना।
'ऐन्द्रेऽपि विषये लभ्ये याचिते वा परान् प्रति। अयोदण्डवदप्रह्वः पुरुषो
मानवान् मतः॥' इति दिवाकरः। मानवता मनुष्यता। नमतः प्रणमतः
न मतः इयमत्र वचोभङ्गिः— मानवता पुरुषेण क्षणं कृता मानवतैव
वरम्। यं कञ्चन नमतो मनस्विनः पुरुषस्य त्रैलोक्याधिराज्योपभोगो न
मतः। एतदुक्तं भवति— प्रणामेन लब्धात् त्रैलोक्याधिपत्यात् पुरुषस्य
केवलमनुष्यत्वमात्रमेव वरमिति। तदेवमित्यादि। अत्रायमभिप्रायः—
यद्यप्येवम् अत्यन्तनिकृष्टैव सेवा तथाप्येवमभिनन्दितास्मदीयप्रणयत्वादवश्यं
प्राग्ज्योतिषेश्वरः परागतस्तवेति देवश्चेतसि करोत्विति।

नन्वेवं सख्यस्य प्रस्तावनामात्र एव हर्षस्य कुमारदर्शनं प्रति एवम्
अत्यौत्सुक्यं कथं जातमित्यत्राह– आत्मेत्यादि। वशीक्रियन्तेऽनेनेति वशीकारः।
अयमभिप्रायः– सर्वस्यापि स्वात्मनोऽर्पणं मूलमन्त्रानपेक्षो महतां वशीकरणोपायो
हि। अतः कुमारेण आत्मार्पणेन वशीकृतचित्तस्य हर्षस्य तद्दर्शनौत्सुक्यहृदयत्वं
युक्तमिति। आवासितं कृतस्थितिम्। सराजकपरिवारः राजसमूहसहायः।

अथ भण्डीरकेणैव वाजिना कतिपयकुलपुत्रपरिवृतः परिमलिन-वासा रिपुशल्यपूरितेन निखातबहुलोहकीलकपरिकरपरिरक्षितस्फुटनेनेव हृदयेन, हृदयलग्नैः स्वामिसुकृतैरिव श्मश्रुभिः शुचमुपदर्शयन् दूरीकृतव्यायाम-शिथिलीकृतभुजदण्डडोलायमानमङ्गलवलयैकशेषालङ्कृतिः अनादरोप-युक्तताम्बूलविरलरागेण शोकदहनदह्यमानस्य हृदयस्याङ्गारेणेव दीर्घ-निःश्वासवेगनिर्गतेनाधरेण शुष्यता स्वामिविरहाधृतजीवितापराध-वैलक्ष्यादिव बाष्पपटलेन, विशन्निव दुर्बलीभूतैः स्वाङ्गमेव पत्रपयाङ्गैः, वमन्निव च व्यक्तीभूतं महोष्माणम् आयतैः श्वसितैः, पातकीव अपराधीव द्रोहीव मुषित इव चलित इव, यूथपतिपतनविषण्ण इव वेगदण्डः, सूर्यास्तमयनिःश्रीक इव कमलाकरः, दुर्योधननिधनदुर्मना इव द्रौणिः, अपहृतरत्नसार इव सागरः राजद्वारमाजगाम। अवतीर्य च तुरङ्गमाद् अवनतमुखो विवेश राजमन्दिरम्। दूरादेव च विमुक्ता-क्रन्दः पपात पादयोः।

अवनिपतिस्तु दृष्ट्वा तम् उत्थाय प्रविरलैः पदैः प्रत्युद्गम्योत्थाप्य गाढमुपगूह्य कण्ठे करुणमतिचिरं रुरोद। शिथिलीकृतमन्युवेगश्च पुनरागत्य निजासने निषसाद। प्रथमप्रक्षालितमुखे च भण्डौ मुखम् अक्षालयत्। अतिक्रान्ते च कियत्यपि कालशकले भ्रातुर्मरणवृत्तान्तम् अप्राक्षीत्। अकथयच्च यथावृत्तमखिलं भण्डिः। अथ नरपतिः पुनरपि तमुवाच— 'राज्यश्रीवृत्तान्तः कः' इति। स पुनरवादीत्— 'देव! देवभूयं गते देवे राज्यवर्धने, गौडैर्गृहीते च कुशस्थले, देवी राज्यश्रीः परिभ्रष्टबन्धना विन्ध्याटवीं गता सपरिजना इति लोकतो वार्ताम् अशृण्वम्। अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता नाद्यापि निवर्तन्ते' इति। तच्चाकर्ण्य नरपतिरब्रवीत्— 'किमपरैरनुपदिभिः। यत्र सा

---

परिकरः समूहः। हृदयेनोपलक्षितः। हृदयं वक्षः, मनश्च। दूरीकृतं चिरत्यक्तम्। अनादरोपयुक्तम् अतात्पर्येण चर्वितम्। अधरेणोपलक्षितः। वेगदण्डः गजः। वेगदण्डवारण इत्यपपाठः। दुर्मना विषण्णः।

देवभूयं देवत्वम्। कुशस्थलं नगरविशेषः। अनुपदिभिः अन्वेष्टृभिः।

तत्र परित्यक्तान्यकृत्यः स्वयमेवाहं यास्यामि। भवानपि कटकमादाय प्रवर्ततां गौडाधमाभिमुखम्' इत्युक्त्वा चोत्थाय स्नानभूमिमगात्। कारितशोकश्मश्रुवपनकर्मणा च महाप्रतीहारभवनस्नातेन शारीरिकवसन-कुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना सार्धमभुङ्क्त। निनाय च तेनैव सह वासरम्।

अथापरेद्युरुषस्येव भण्डिः भूपालमुपसृत्य व्यज्ञापयत्— 'पश्यतु देवः श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिबर्हं मालवराजस्य' इति। नरपतिना चैवं भवत्वित्यभ्यनुज्ञातो दर्शयाम्बभूव तत्। यथा— अनवरत-गलितमदमदिरामोदमुखरमधुकरजूटजटिलकरटपट्टपङ्किलगण्डान् गण्ड-शैलानिव जङ्गमान् गम्भीरगर्जितरवान् जलधरानिव महीमवतीर्णान् उत्फुल्लसप्तच्छदवनामोदमुचः शारदानिव दिवसान् पुञ्जीभूतान् अनेक-सहस्रसङ्ख्यान् करिणः, चारुचामीकरचित्रचामरमण्डनमनोहरांश्च हरिणरंहसो हरीन्, बालातपविसरवर्षिणां च किरणैरेकेन्द्रायुधीकृत-दशदिशामलङ्काराणां विशेषान्, विस्मयकृतस्मरोन्मादिमालवीकुचमिलन-दुर्ललितांश्च निजज्योत्स्नाकृतातपव्यतीहारान् हारान्, उडुपतिकर-सञ्चयशुचीनि निजयशांसीव बालव्यजनानि, जातरूपनालं च निवासपुण्डरीकमिव श्रियः श्वेतातपत्रम्, अप्सरस इव बहुसमरसाहसानु-रागावतीर्णा वारविलासिनीः, सिंहासनशयनासन्दीप्रभृतीनि च

---

'अनुपद्यन्वेष्टा' (पा० सू० ५. २. ९०.) इति निपातः। प्रवर्ततां गच्छतु।

गण्डशैलान्— 'गलिताः स्थूलपाषाणा गण्डशैला इति स्मृताः' इति। गर्जितरवः करिणां बृंहितं, मेघध्वनिश्च। 'गर्जितो मत्तमातङ्गे क्लीं तन्नादेऽम्बुदध्वनौ' इति वैजयन्ती। उत्फुल्लेत्यादि उभयत्र समानम्। हरीन् अश्वान्। किरणैः बालातपविसरवर्षिणां च एकेन्द्रायुधीकृतदशदिशां च इति अन्वयः। बालातपशब्देन बालातपसदृशी प्रभा विवक्षिता। इन्द्रायुधशब्देन रत्नानां नानाविधा प्रभा विवक्षिता। एकेन्द्रायुधीकृतम् इन्द्रायुधेनैव सर्वं व्याप्तमित्यर्थः। विस्मयकृतः विस्मयकरान्। मिलनं सम्पर्कः। आसन्दी

राज्योपकरणानि, कालायसनिगलनिश्चलीकृतचरणयुगलं च सकलं मालवराजलोकम्। अशेषांश्च ससङ्ख्यालेख्यपत्रकान् सालङ्कारान् पेटापीडान् सकोशकलशान्। अथालोक्य तत्सर्वमवनिपालः स्वीकर्तुं यथाधिकारमादिक्षदध्यक्षान्। अन्यस्मिन्नहनि हयैः स्वयं स्वसारमन्वेष्टुं समुच्चचाल विन्ध्याटवीम्। अवाप च परिमितैरेव प्रयाणकैस्ताम्।

अथ प्रविश्य दूरादेव दह्यमानषष्ठिकबुसविसरविसारिविभावसूनां वन्यधान्यबीजधानीदाहिनां च धूमेन धूसरिमाणम् आदधानैः शुष्कशाकशाखासञ्चयरचितगोवाटवेष्टितनिकटनिबिडवटैः व्यापादितवत्सरूपरोषाविष्टगोपालकल्पितव्याघ्रयन्त्रैः अयन्त्रितवनपालहठह्रियमाणग्रामीणकाष्ठिककुठारैः, गहनतरुषण्डनिर्मितचामुण्डामण्डपैः वनप्रदेशैः प्रकाशमानम् अटवीप्रायप्रान्ततया कुटुम्बभरणाकुलैः कुन्दालप्रायकृष्टिकैः कृषीवलैः

---

आसनविशेषः। ससङ्ख्यालेख्यपत्रकान्— अन्तर्निहितानां वस्त्रादीनां सङ्ख्याज्ञानाय तत्सङ्ख्यासूचकाक्षरयुक्तं तैः सहान्तर्न्यस्तं पत्रं सङ्ख्यालेख्यपत्रम् (പാട്ടോല)। पेटापीडान् मञ्जूषासमूहान्। सकोशकलशान् कोशनिधानघटसहितान्।

षष्ठिकः षष्ठ्या दिवसैः पच्यमानो धान्यविशेषः (അറുപതിനാം°)। 'षष्ठिकाः षष्टिरात्रेण पच्यन्ते' (पा० सू० ५. १. ९०.) इति निपातः। बुसः निस्तण्डुलो व्रीहिः (പതിർ)। बीजधानी बीजकोशी (കളം°)। शाकः शाकवृक्षः (തേക്കുമരം)। गोवाटः[1] गोष्ठेषु गवां बहिर्निर्गमनार्थं दारुभिः कृत आवेष्टकः। वटः न्यग्रोधवृक्षः। व्यापादितः हतः। वत्सरूपः प्रशस्तवत्सः। अयन्त्रितः निष्प्रतिबद्धः। वनपालः अरण्यरक्षकः (കാട്ടുകാപ്പുകാരൻ)। हठः बलात्कारः। परग्रामीणः परग्रामजातः। काष्ठिकः काष्ठविक्रेता। 'तदस्य पण्यम्' (पा० सू० ४. ४. ५१.) इति ठक्। कुठारः काष्ठभेदनसाधनम्। चामुण्डीमण्डपः काल्यायतनम्। कुन्दालं गोदारणम् (കന്താലി)। कृष्टिकः कर्षणसाधनम्। कृषीवलैः कृषिमद्भिः।

---

१. गोवाटः—തൊഴുത്തം-ക്,

अबलीवर्दैरवलद्भिः उच्चभागभाषितेन भज्यमानभूरिखिलक्षेत्रखण्डलम्, अल्पावशेषकालशिलैश्च कालायसकूलैरिव कृष्णमृत्तिकाकठिनैः स्थानस्थानस्थितस्थाणूत्थितस्थूलपल्लवैः दुरुपगमश्यामाकप्ररूढिभिः अलम्बुसासहितैः अविरहितकोकिलाक्षक्षुपैः विरलविरलैः केदारैः कृच्छ्रात्कृष्यमाणैः नातिप्ररूढैः प्रहतमुक्तम्, उपक्षेत्रमुपरचितैः उच्चैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवं, दिशि दिशि च प्रतिमार्गद्रुमदत्तानां पथिकपादप्रस्फोटनधूलिधूसरैः वनपल्लवैर्लाञ्छिततरुच्छायानाम् अटवीसुलभसालकुसुमस्तबकार्चितनवखातकूपिकोपकण्ठप्रतिष्ठापितनागघटानाम् अच्छिद्रकटकल्पितकुटीरकाणां कुटिलकीटपेटीवेष्ट्यमानसक्तुशरावश्रेणीनाम् अध्वगजनजग्धजम्बूफलास्थिशबलसमीपभुवाम् उद्धूतधूलीकादम्बस्तबकप्रकर-

---

अबलीवर्दैः कर्षणसाधनभूतवृषरहितैः। अवलद्भिः कृषितात्पर्याद् एकत्र निश्चलैः सद्भिरित्यर्थः। उच्चभागभाषितेन उन्नतप्रदेशं विषयीकृत्य सम्भूतेन भाषितेन। भज्यमानं खनित्रादिभिः भिद्यमानम्। खिलं अप्रतिहतम्। खण्डलं खण्डम्। अल्पावशेषकालशिलैः अतिक्षुद्रकृष्णपाषाणैः। कृष्णमृत्तिका (കളിമൺ)। स्थाणूत्थितं छिन्नशाखानां वृक्षाणां मूलप्रदेशप्ररूढम्। दुरुपगमश्यामाकप्ररूढिभिः। दुर्लभश्यामाकप्ररोहणैः। अलम्बुसा वीरुद्विशेषाः ([1]കൊട്ടക്കാരം)। कोकिलाक्षक्षुपः इक्षुकक्षः ([2]ഉള്ളിച്ചുട്)- 'इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः' इति। 'ह्रस्वशाखाशिफः क्षुपः' इति च **अमरः**। केदारैः क्षेत्रैः। प्रहतं कृषियोग्यम्। मञ्चः सस्यभक्षिणां श्वापदानां निरीक्षणार्थं काष्ठकृत उन्नतः कुटीविशेषः (പാറൺ)। दत्तानाम् उपरचितानाम्। प्रस्फोटनम् मार्जनम्। सालः अर्जुनवृक्षः। नवखातम् अचिरात्खातम्। कूपिका अल्पकूपः। नागघटः घटेष्वावाह्याराधनीयो नागः। नागघटार्चनं च देशाचारसिद्धम्। कटः (പായ്)। कुटीरकं (കുടിൽ)। कीटः पिपीलिकादिः। सक्तुशरावः जलमिश्रितसक्तुपानार्थं कृतः शालाजिरः (തണ്ണീർകുടിക്കും അകൽ)। फलास्थि फलबीजम् (പരൽ)। धूली रेणुः। कादम्बस्तबकः कदम्बवृक्षपुष्पस्तबकः।

---

1. கொட்டைக்கானகை, 2. முள்ளிப்பூண்டு—சு.

पुलकितानां कण्टकिताङ्कुककर्करीचक्राक्रान्तकाष्ठमञ्चिकामुषिततृषां तिम्यत्तलशीतलसिकतिलकलशीशमितश्रमाणाम् अनाश्यानशैवलश्यामलितालिञ्जरजायमानजडिम्नाम् उदकुम्भाकूलपाटलशर्कराशकलशिशिरीकृतदिशां षट्मुखघटितकरहाटपाटलपुष्पपुटानां शीकरपुलकितपल्लवपूलीपाल्यमानशोषसरसशिशुसहकारफलजूटाजटिलस्थूणानां विश्राम्यत्कार्पटिकपेटकपरिपाटीपीयमानपयसाम् अटवीप्रदेशप्रपाणां शैत्येन त्याजयन्तमिव ग्रैष्ममूष्माणं, क्वचिदन्यत्र ग्राहयन्तमिव अङ्गारीयदारुसङ्ग्रहदाहिभिर्व्योकारैः, सर्वतश्च प्रातिवेश्यविषयवासिनां समासन्नग्रामगृहस्थापित-

---

कण्टकिताङ्कु इति करकेषु कुलालरचितः कण्टकाकार आभरणविशेषो विवक्षितः। कर्करी करकः । काष्ठमञ्चिका काष्ठकृता मञ्चिका । तिम्यत्तलम् आर्द्रस्थलम्। सिकतिलकलशी सिकतावत्प्रदेशघटी । अनाश्यानम् अशुष्कम् । अलिञ्जरं बृहज्जलपात्रम् (ചാറ്റൽ) । अलञ्जरमिति क्षीरस्वामिमतम् । पाटलशर्करा पानीयशैत्यहेतोः निक्षेप्यः पाटलवर्णः पाषाणविशेषः (ചാടലചുണ്ണാമ്പ-പൂരാമൽ)? । गुलिकेति केचित् । करहाटः उत्पलकन्दम् । 'करहाटः शिफा कन्दः' इत्यमरः । पाटलपुष्पपुटः पाटलपुष्पयुक्तं करण्डम् (ചാതിരി-പ്പൂമൊട്ടൊ) । 'करण्टी तु पुटी त्रयी' इति वैजयन्ती । शीकरेत्यादि । शीकरैः जलबिन्दुभिः। पुलकितया (पल्लवपूल्या) पल्लवाल्या। पाल्यमानशोषत्वात् शोषनिमित्तं रक्ष्यमाणत्वात् । सरसानाम् अशुष्काणाम्। शिशूनाम् अल्पाकाराणां सहकारफलानां जूटेन समूहेन आजटिला आनिबिडा स्थूणाः स्तम्भाः यासाम् । कार्पटिकः पान्थः । परिपाटी श्रेणी । प्रपाणां पानीयशालानाम् । ग्राहयन्तमित्यादि— अङ्गारीयदारुसङ्ग्रहदाहिभिः अङ्गारप्रयोजनानां दारूणां (सङ्ग्रहस्य )उच्छ्रायस्य दाहकैः । अङ्गारः (കരി) । 'सङ्ग्रहाः पुनः स्वीकारोच्छ्रायसंक्षेपाः' इति वैजयन्ती । व्योकारैः लोहकारकैः (കൊല്ലൻ) । 'व्योकारो लोहकारकः' इत्यमरः । व्योकारैरङ्गारीयदारुसङ्ग्रहदाहार्थं प्रज्वलितैः कन्दुभिस्तमेवोष्माणं ग्राहयन्तमित्यर्थः । प्रातिवेश्याविषयः अन्तरजनपदः ।

स्थविरपाल्यमानपाथेयस्थगिकेन कृतदारुदारणव्यायामयोग्याभ्यङ्गेन स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण कालवेत्रत्रिगुणव्रततीवलयपाशग्रथितग्रीवागृहीतैः पत्रवीटिकापिहितमुखैः घटितघटैरूढवारिणा पुरस्सरबलद्बलिबलीवर्दयुक्तयुगरथेन नैकटिककुटुम्बिलोकेन काष्ठसङ्ग्रहार्थमटवीं प्रविशता, श्वापदवधव्यवधानधवलसमारोपितकुटीकृतकूटपाशैश्च गृहीतमृगग्रहणतन्तुतन्त्रीजालवलयवागुरैः बहुभिर्व्याधैर्विहरद्भिः अंसावसक्तवितंसव्यालम्बमानबालपाशैश्च सङ्गृहीतग्राहककक्करकपिञ्जलादिपञ्जरैः शाकुनिकैः

---

पाथेयस्थगिका पाथेयभाजनम् (ഭാണ്ഡക്കൂട)। दारुदारणव्यायामः काष्ठभेदनश्रमः। अभ्यङ्गः तैलेनाङ्गसेकः। प्रातराशपुटः प्रातर्भोज्यान्नबन्धः। पाटच्चरः वस्त्राद्यपहर्ता। प्रत्यवायः भयम्। पटच्चरं जीर्णवस्त्रम्। कालवेत्रेत्यादि— कालवेत्रस्य वेत्रविशेषस्य त्रिगुणेन त्रिवेष्टनेन। व्रततीवलयपाशेन वलयाकारव्रततीरज्ज्वा ग्रथितायां बद्धायां ग्रीवायां गृहीतैः। पत्रवीटिका पत्रस्तबकः। घटितघटैरुपर्युपरि निहितैः घटैः। बद्धघटैरिति केचित्। पुरस्सरेत्यादि— युगयुक्तो रथो युगरथः शकट उच्यते। पुरस्सरैः वलद्भिः धावद्भिः (बलिभिः) बलीवर्दैः युक्ता युगरथा यस्य। अथवा पुरस्सराणां वलतां बलिनां बलीवर्दानां युगैर्युक्ता रथाः शकटा यस्य। पुरस्सरवलद्बलीवर्दयुगरथेनेति च पाठः। नैकटिको 'निकटे वसति' (पा० सू० ४. ४. ७३.) इति ठक्। श्वापदेत्यादि— धवलः वृषः। 'चारौ श्रेष्ठे वृषे श्वेते धवलः' इति वैजयन्ती। श्वापदवधे श्वापदानां हिंसनकाले व्यवधानार्थम् आत्मनोऽप्रकाशमवस्थानार्थं धवलसमारोपितायां धवलोपरि निक्षिप्तायां कुट्यां कुटीरे मध्ये (कृतः) स्थापितः कूटपाशः कृत्रिमबन्धनरज्जुः येषाम्। तन्तुतन्त्रीजालवलयवागुरैः तन्तुतन्त्र्या सूत्ररज्ज्वा निर्मितं जालवलयं वलयाकारजालं वागुरा मृगग्रहणोपकरणं च येषाम्। व्याधैः मृगवधाजीवैः। विहरद्भिः परिचरद्भिः। वितंसः—'वितंसस्तूपकरणं बन्धने मृगपक्षिणाम्' इत्यमरः। बालपाशः केशमयकाणिका(?) (മയിക്കണ്ണി)। ग्राहकः— 'सग्राहकः स्याद् गृह्यन्ते येनान्ये मृगपक्षिणः' इति। कक्करः पक्षिविशेषः (തത്തരം)। कपिञ्जलः (കിവിഴ്താരി)। शाकुनिकैः

**सञ्चरद्भिः, चूतच्युतलशकलेशलिप्तलतालग्नलट्वालम्पटानां च पेटकैः पाशिकशिशूनामटद्भिः, तृणस्तम्बान्तरिततित्तिरितरलायमानकौलेयककुल-चाटुकारैश्च विहगमृगयां मृगयुयुवभिः क्रीडद्भिः, परिणतचक्रवाककण्ठ-कषायरुचां च शीधव्यानां वल्कलानां कलापान्, नातिचिरोद्धृतानां च धातुत्विषां धातकीकुसुमानामगणिता गोणीः, पिचव्यानां च अतसीशणपट्टपूलकानां पुष्कलान् सम्भारान् भारांश्च मधुनो माक्षिकस्य मयूराङ्गजस्य अक्लिष्टमधूच्छिष्टचक्रिकामण्डलानां च लम्बमानलामज्जकमुञ्जजूटजटालानाम् अपत्वचां खादिरकाष्ठानां**

---

शकुनिघातकैः । 'पक्षिमत्स्यमृगान् हन्ति' (पा० सू० ४. ४. ३५.) इति ठक् । लशकः निर्यासः (പിചിൽ) । 'निर्यासः खपुरो लशः' इति **वैजयन्ती** । लतालग्नः यष्टिसंलग्नः । लट्वा पक्षिविशेषः (കത്തക്കുരുവി) । पाशिकः पाशजीवी (കണ്ണിക്കാരൻ) । तृणस्तम्बः तृणपूली (പുൽമുതൽ) । 'पुञ्जिलस्तु तृणस्तम्बः' इति **वैजयन्ती** । तित्तिरितरलायमानैः तित्तिरिनिमित्तं चपलायमानैः । तित्तिरिः (ചിച്ചിലി) । कौलेयकः श्वा । मृगयुः लुब्धकः । कषायरुचां रक्तवर्णानाम् । शीधव्यानां शीधुकरणयोग्यानाम् । वल्कलानां त्वचाम् । उद्धृतानां[1] उच्चितानाम् । धातुः गैरिकम् । धातकी (താതിരി) । धातकीपुष्पसङ्ग्रह(हेणास्याःहणं)सुरानिर्माणार्थमित्यनुसन्धेयम् । कुसुमानां गोणी कुसुमगोणी । पिचव्यानां पिचुयोग्यानाम् । पिचु (പഞ്ഞി°) । अतसी क्षौमतन्तूत्पत्तिभूतः ओषधिविशेषः । शणः गोणिकातन्तुप्रकृतिरोषधिविशेषः । पट्टपूलकं तन्तुबन्धः, (पट्टारका[2]पट्ट)बन्ध इति वा । माक्षिकस्य मक्षिकासम्भृतस्य । मयूराङ्गजस्य मयूरबर्हस्य (പീലി) । मधूच्छिष्टं सिक्थकम् (മെഴുക°) । 'मधूच्छिष्टं तु सिक्थकम्' इत्यमरः । लामज्जकं लघुलयम् (ഇലാമിച്ചം) । मुञ्जं (മുഞ്ഞി) । मुञ्जसङ्ग्रहणं रज्जुनिर्माणार्थमित्यनुसन्धेयम् । जटालानां निबिडानाम् ।

---

१. 'उच्छ्रितानां', २. [illegible] क.

कुष्ठस्य च कठोरकेसरिसटाभारबभ्रुणो भूयसो भारकान् लोध्रस्य लोकेनादाय व्रजता, प्रचितविविधवनफलपूरितपिटकमस्तकाभिश्च अभ्यग्रग्रामगत्वरीभिस्त्वरमाणाभिः विक्रयचिन्ताव्यग्राभिर्ग्रामेयिकाभिः व्याप्तदिगन्तरम्, इतस्ततश्च युक्तशूरशाकराणां पुराणपांसूत्करकरीषकूटवाहिनीनां धूर्गतधूलिधूसरसैरिकसरोषस्वरप्रसार्यमाणानां सङ्क्रीडच्चदुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः सम्पाद्यमाननिरूष्मक्षेत्रसंस्कारम्, आरक्षकप्रक्षिप्तदण्डत्रासोड्डीयमानहरिणहेलाविलङ्घितवैणववृतिभिश्च

---

कुष्ठम् पारिभाव्यं (കൊട്ടം) बभ्रुणः पिङ्गलवर्णस्य। लोध्रं (പാച്ചോറ്റി)[1]। प्रचितम् उच्चितम्। पिटकः कण्डोलः (കൊട്ട)[2]। *'कण्डोलः पिटकश्चिपु' इत्यमरः। अभ्यग्रं समीपस्थम्। गत्वरीभिः गमनशीलाभिः। ग्रामेयिकाभिः ग्रामस्त्रीभिः[3]। युक्तशूरशाकराणां युक्तशक्तबलीवर्दानाम्। युक्तशूरशक्करशाकराणामिति वा पाठः। 'शक्करः शाक्करो बाडवेयः शाङ्करश्च' इत्युक्ष्णां (भेद)पर्यायत्वेन क्षीरस्वामिना पठितम्। युक्तशूरशाकटशाकराणाम् इति केषुचित् पाठः। युक्तशूरशकटवाहकबलीवर्दानाम् इत्यर्थः। शाकट इति शकटशब्दात् शकटं वहतीत्यर्थे 'शकटादण्' (पा० सू० ४. ४. ८०.) इत्यण्प्रत्ययः। पुराणपांसूत्करः जीर्णावकरस्य[4] समूहः। करीषं शुष्कगोशकृत्। धूर्गतः शकटमुखप्रदेशस्थितः। सैरिकः कृषीवलः। सीरेण खनतीत्यर्थे 'तेन दीव्यति —'(पा० सू० ४. ४. २.) इत्यादिना ठक्। प्रसार्यमाणानां प्रेर्यमाणानाम्। सङ्क्रीडत् शब्दायमानम्। 'क्रीडोऽनुसम्परिभ्यश्च' (पा० सू० १. ३. २१.) इत्यनेन विहितस्यात्मनेपदस्य 'समोऽकूजने' (वा० ) इति नियमादभावः। सम्पातैः समूहैः। सम्पाद्यमाननिरूष्मक्षेत्रसंस्कारं सम्पाद्यमाननिःशक्तिकक्षेत्रशान्त्याधानम्। सम्पाद्यमानदुर्बलोर्वीविरूक्षक्षेत्रेत्यपपाठः। आरक्षकः सस्यरक्षी। प्रक्षिप्तं प्रेरितम्। दण्डः यष्टिः। उड्डीयमानः ऊर्ध्वमुत्पतन्। हेलाविलङ्घितम् अवज्ञया विलङ्घितम्। अयत्नविलङ्घितम् इत्यर्थः। 'हेलावज्ञाभावचारौ' इति वैजयन्ती। वैणववृतिभिः

---

१. வெள்ளிலோத்திரம், २. கூடை, ३. 'ग्रामजस्त्री', ४. जीर्णावकरअश्मसमूहः'-क. *'विस्फोटः पिटकस्त्रिषु' इति मुद्रितामरकोशपाठः.

**निखातगोकरङ्कशङ्कुशङ्कितशशकशकलितशुङ्गैः प्रयत्नपातितविशङ्कटनिकट-विटपिविटपैर्वाटैरैक्षवैः सुबहुभिः श्यामायमानोपकण्ठम्, अतिविप्रकृष्टान्तरैश्च मरतकस्निग्धस्नुहिवाटवेष्टितैः कार्मुककर्मण्यवंशविटपसङ्कटैः कण्टकिकरञ्ज-राजिदुष्प्रवेशैः उरुबूकमरुवकमरुवचावङ्गसेनकवंशसुरसमूरणशिग्रुग्रन्थिपर्ण-गवेधुगर्मुद्गुल्मगहनगृहवाटिकैः निखातोच्चकाष्ठारोपितकाष्ठालुकलताप्रतान-**

---

**वेणुमयवाटैः**। वृतिः (വേലി)। निखातेत्यादि— करङ्कं शरीरास्थि । 'कङ्कालो-ऽस्त्री तनोरस्थि करङ्कोऽप्यस्थिपञ्जरम्' इति वैजयन्ती ।। शुङ्गा दलकोशिका (മുകൾ°)। 'पर्णं बर्हं पतत्रं च त्रयी शुङ्गास्य कोशिका।' इति **वैजयन्ती**। **निखाताद्** गोकरङ्कशङ्कोः गोकरङ्कयुक्तात् कीलात् शङ्कितैः साशङ्कैः **शशकैः** **शशमृगैः** शकलिताः खण्डिताः शुङ्गा येषु । प्रयत्नपातितविशङ्कटनिकट-विटपिविटपैरिति पाठः । वाटैरैक्षवैः इक्षुसम्बन्धिभिरुपवनैः । 'पुष्पवाटी त्वमात्यादेस्त्रयी वाटी फलाय चेत्।' इति वैजयन्ती । स्नुहिवाटः स्नुहिविरचित-वृतिः (കള്ളിവേലി)। कार्मुककर्मण्यः कार्मुकक्रियायां साधुः । वंशविटपः वेणुकाण्डः । कण्टकी वृक्षविशेषः (വേലം)। 'मरुद्रुवे विट्खदिरोऽप्यरिमो-प्यरि मेदकः। कण्टकी च' इति वैजयन्ती । करञ्जः नक्तमालः (പുൻക°)। **उरुबूकः** एरण्डः (ആവണക്ക°)। मरुवकः सुगन्धिपत्रः । मरुवचा उग्रगन्धा (വയമ്പ°)। वङ्गसेनकः अगस्तिवृक्षः (അകത്തി)। 'अगस्तिर्वङ्गसेनकः' **इति वैजयन्ती**। वङ्गसंशक इति पाठमादृत्य वङ्गः बृहती, संशकः शृङ्गिवेर-मिति पूर्वव्याख्यातारो व्याख्यन्। वङ्गः (വഴുതിനെ)। संशकः (ഇഞ്ചി)। अत्र प्रमाणं मृग्यम्। वंशः, 'इक्षुभेदास्तु कान्तारवंशपुण्ड्रादयो नरि' इति **वैजयन्ती**। सुरसः मधुरसः (പിരകിഴങ്ങ°)। शाकविशेष इति केचित्। सूरणः अर्शोघ्नः (കരണെ)। शिग्रुः शोभाञ्जनः (മുരിങ്ങ)। ग्रन्थिपर्णं बर्हिपुष्पम् (കണിവെണ്ണ[1]കരിഞ്ഞ)। गवेधुः मुद्गभेदः। गर्मुत् (പുല്ല°)। गृहवाटिका गृहनिष्कुटः (പുഴക്കടെ)। काष्ठालुकः कन्दजातिः। लता (വള്ളി)।

---

1. முத்தங்காய்புல்—க.

प्रच्छायैः परिमण्डलबदरीमण्डपतलनिखातखादिरकीलकबद्धवत्सरूपैः कथमपि कुक्कुटारटितानुमीयमानसन्निवेशैः अङ्गनागस्तिस्तम्बतलविरचितपक्षिप्रापकावापकैः प्रकीर्णबदरपाटलपटलैः वेणुस्फोटपोटगलशरमयवृतिविहितभित्तिभिः किंशुकरोचनारचितमण्डनैः बल्बजबद्धाङ्गारराशिभिः शल्मलीतूलसञ्चयबहुलैः सन्निहितनलशालिशालूककुमुदबीजवेणुतण्डुलैः सङ्गृहीतसालबीजैः भस्ममलिनकाश्मर्यबीजकूटव्यापृतकटैः आश्यानराजादनमदनफलस्फीतैः मधूकासवमद्यप्रायैः कुसुम्भगर्भकुसूलैः

---

प्रतानः विस्तरः। परिमण्डलं वर्तुलाकारम्। 'सुवृत्तं परिमण्डलम्' इति वैजयन्ती। बदरीमण्डपः बदरीमयमण्डपः। वत्सरूपः प्रशस्तवत्सः। आरटितं शब्दः। सन्निवेशः संस्थानम्। अगस्तिस्तम्बतलम् अगस्तिकाण्डमूलम्। पक्षिप्रापकावापकैः जलपानार्थं पक्षिणाम् आनायकालवालैः। 'स्यादालवालमावालमावापः' इत्यमरः। प्रकीर्णबदरपाटलपटलैः प्रकीर्णैर्बदरफलैः पाटलवर्णच्छदिर्युक्तैः। 'पटलं छदिः' इत्यमरः। वेण्वित्यादि– वेणुस्फोटः दारितवेणुः (മുളൽപ്പിളപ്പു്)। पोटगलः (കോലെക്കച്ചി)[1]। शरः गुन्द्रः (വേഴം)[2]। वेणुस्फोटमय्यां पोटगलमय्यां शरमय्यां च वृतौ विहितभित्तिभिरित्यर्थः। वेणुस्फोटनलशरमय इति च पाठः। किंशुकः पलाशपुष्पम्। रोचनः[3] शाल्यविशेषपुष्पम्। 'रोचनः कूटशाल्मलिः' इत्यमरः। रोचनेति गोरोचनेति केचित्। एतेन गोरोचनायाः प्रभूतत्वमुक्तम्। बल्बजं तृणम् (പുല്ലു്)। अङ्गारः (കരി)। शाल्मलीतूलम् (ഇലവംപഞ്ഞു്)। नलः। यवनालः (ചോളം)। शालिः (ചെന്നെല്)। शालूकम् उत्पलकन्दम्। वेणुतण्डुलं (മുളയരി)। सालबीजम् अर्जुनबीजम् (മരുതിൻപരൽ)। भस्ममलिनं भस्मसम्मेलनमलिनम्। भस्ममलनमलिनमिति च पाठः। मलनं मेलनम्। काश्मर्यबीजं श्रीपर्णीफलबीजम् (പെരുംകുമിഴ്പരൽ)। कटः (പായു്)। राजादनः प्रियालः (പഴമുണ്ണിപ്പാല)। मधूकासवः मधूकपुष्परसकृतं मद्यम्। मधूकः (ഇലുപ്പ)। कुसुम्भं वस्त्रादिरञ्जनद्रव्यम्

---

१· கோளுக்கச்சு, २· வேழு; ३· மருதம்பாலு-क·

*'नलयवनालशालि' इतिव्याख्यानुसारी पाठः·

अविरहितराजमाषत्रपुसकर्कटिकाठकर्कोटकूश्माण्डालाबुबीजैः पोष्यमाण-वनविलालमालवाकनकुलशालिजातकादिभिः अटवीकुटुम्बिनां गृहैरुपेतं वनग्रामकं ददर्श । तत्रैव च दिवसमत्यवाहयत् । इति ॥

॥ इति श्रीहर्षचरिते छत्रलाभो नाम सप्तम उच्छ्वासः ॥

---

(കച്ചമ്പ) । कुसूलं धान्यकोष्ठम् (കതിർ) । राजमाषः अलसान्द्रः (പെരുമ്പയറ്) । त्रपुसं हस्तिपर्णिनी (മിളുക്ക) । कर्कटिका उर्वारुः (വെള്ളരി) । कर्कोटः सुगन्धकः (പഴപ്പാവൽ[1]) । कूश्माण्डः कर्कारुः (പൂശണി) । अलाबुः तुम्बी (ചുരെ) । वनविलालः वनमार्जारः । मालवाकः मार्जारजातिविशेषः (വെരുക്) । नकुलः बभ्रुः (കീരി) । शालिजातकः खट्टासः (നാവി) । ग्रामकः क्षुद्रग्रामः । अत्यवाहयद् अतिनीतवान् ।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने सप्तम उच्छ्वासः ।

---

1. பழம்பாகல்-க.

## अथ अष्टम उच्छ्वासः ।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवैव ॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय विपिने भवति महारत्नलाभश्च ॥

अथापरेद्युरुत्थाय पार्थिवः तस्माद् ग्रामान्निर्गत्य विवेश विन्ध्याटवीम् । आट च तस्यामितश्चेतश्च सुबहून् दिवसान् । एकदा तु भूपतेर्भ्रमत एवाटविकसामन्तस्य शरभकेतोः सूनुः व्याघ्रकेतुर्नाम कुतोऽपि कज्जल-श्यामलं श्यामालतावलयेनाधिललाटमुच्चैःकृतमौलिबन्धम्, अन्धकारिणीम् अकारणभुवा भ्रुकुटीबन्धेन त्रिशिखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तम्, अवतंसितैकशुकपक्षच्छविहरितायमानेन पिनद्धकाचरकाचमणिकर्णिकेनैव श्रवणेन शोभमानं, किञ्चिच्चिल्लस्य चक्षुषः

---

अथ चिराभिलषितदर्शनस्य विशिष्टज्ञानवतो दिवाकरमित्रस्य हर्षेण दर्शनं, तद्दर्शनदशायामेव राज्यश्रीदर्शनं, दिवाकरमित्रेण च हर्षाय महाहार-प्रदानं च इत्यष्टमोच्छ्वासार्थः । तदेतद् द्वाभ्याम् आर्याभ्यां सङ्गृह्णाह— सहसेत्यादि— भव्यानां कल्याणानाम् ।

अथेत्यादि— आट इतस्ततो भ्रान्तवान् । कुतोऽप्यादाय जगामेति सम्बन्धः । श्यामा प्रियङ्गुः (७३०७८) । मौलिः केशः । अन्धकारिणीम् अदृष्टिसुखकरीमित्यर्थः । भ्रुकुटीबन्धस्य हि शिखानां त्रित्वमवेक्ष्य त्रियामापद-प्रयोगः । पिनद्धकाचरकाचमणिकर्णिकेन सम्बद्धकृष्णधूमवर्णकाचमणिकृत-कर्णाभरणेन । चिल्लस्य क्लिन्नस्य (५२।७७।०।२८) । क्लिन्नशब्दाद् अस्य चक्षुषी इत्यर्थे 'क्लिन्नस्य चिल्-पिल्-लश्चास्य चक्षुषी' (वा०) इति वार्त्तिकेन लप्रत्ययः क्लिन्नशब्दस्य चिलादेशश्च । यद्यपि प्रत्ययस्यास्य

**अविरलपक्ष्मणः सहजेन रागरोचिषा रसायनरसोपयुक्तं तारक्षवं क्षतजमिव क्षरन्तम्, अवनाटनासिकं, चिपिटाधरं, चिक्किनचिबुकम्, अहीनहनूत्कट-कपालकूटास्थिपर्यन्तम् ईषदुदग्रग्रीवाबन्धम्, स्कन्नस्कन्धार्धभागम्, अनवरतकठिनकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन मांसलेन उरसा हसन्तमिव कटकशिलाप्रतिमानं विन्ध्यगिरेः, अजगरगरीयसा च भुजयुगलेन लघयन्तमिव तुहिनशैलसालद्रुमाणां द्राघिमाणं, वराह-**

---

चक्षुः (क्लिन्नेत्यर्थः?)प्रवृत्तिनिमित्तं तथापि अत्र क्लिन्नशब्दः क्लिन्ने चक्षुषि वर्तते । उक्तं च **वृत्तिकारेणापि**— 'अस्येत्यनेन नार्थः । चक्षुषोरेवाभिधाने प्रत्यय उच्यते । क्लिन्ने चक्षुषी चिल्ले, पिल्ले, चुल्ले, तद्योगात्तु पुरुषस्तथोच्यते इति । 'स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी' इत्यमरश्च । तारक्षवं व्याघ्र-सम्बन्धि । अवनाटनासिकं नतनासिकम् । अवशब्दान्नमनार्थे 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (पा० सू० ५. २. ३१.) इति नाटच्प्रत्ययः । यद्यपि प्रत्ययस्य नासिकायाः नतत्वमात्रमेव प्रवृत्तिनिमित्तं तथापि अवनाटशब्दो नासिकाया नतत्वयोगाद् नतायां नासिकायां, नतनासिकायोगाद् नतनासिका-वति धर्मिणि च वर्तते । तथोक्तं **वृत्तिकारेणापि**— 'तद्योगान्नासिकापि, पुरुषोऽपि तथोच्यते ।' इति । **अमरसिंहेन** तु प्रयोगबाहुल्याद् 'अवटीटो-ऽवनाटश्चावभ्रटो नतनासिके' इति धर्मिवाचक उक्तः । चिपिटाधरं नताधरम् । चिक्किनचिबुकं नतोष्ठाधरभागम् । चिपिनचिक्किट इत्यत्र निशब्दाद् 'इनच्पिटच्चिक चि च' (पा० सू० ५. २. ३३.) इति इनच्पिटजित्येतौ प्रत्ययौ चिक चि इत्येतावादेशौ च । अत्रापि प्रत्यययोर्नासिकाया नतत्वमात्रमेव प्रवृत्ति-निमित्तं, तथाप्युपमानादेवं प्रयुक्तम् । तथोक्तं **वृत्तिकारेणापि**— 'उपमानाद् भविष्यति' इति । उदग्रम् उन्नतम् । (अ?)स्कन्नम् अवनतम् । कुण्डलीकरणं मौर्व्या संयोज्य समाकर्षणम् । उभे अपि कोटी उभयभुजमूलयोः प्रवेश्योरसा अवष्टभ्य वक्रीकरणमिति केचित् । अजगरः महासर्पः । द्राघिमाणं दैर्घ्यम् ।

वालवलितवलयबन्धनाभिः नागदमनजटिकाजूटिकाभिः जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्तमणिचित्रं त्रापुषं वलयं बिभ्राणम्, अतुन्दिलमपि तुन्दिभम्, अहीरणीचर्मनिर्मितोरुपट्टिकयोच्चित्रचित्रकायत्वक्कृतारकितपरिवारया कुब्जाजिनजालिकया शृङ्गमयमसृणमुष्टिभागभास्वरया पारतरसलेशलिप्तसमस्तमस्तिकया कृपाण्या करालितविशङ्कटकटिप्रदेशं, प्रथमयौवनोल्लिख्यमानमध्यभागभ्रष्टमांसभरिताविव स्थवीयांसावूरुदण्डौ दधानम्, अच्छभल्लचर्ममयेन भल्लप्रायप्रभूतशरभृता शबलशम्बर-

---

वालं रोम। वलितं बद्धम्। नागदमनजूटिका नागदमनाख्यतृणविशेषस्य जटा (മണിനാകപ്പുല്ലിൻവേര്)। जूटिका बन्धः। गोदन्तमणिः पद्मरागमणिः। मरतकमिति केचित्। त्रापुषं त्रपुविकारम्। त्रपु (ഈയം)। त्रपुशब्दात् तस्य विकार इत्यर्थे 'त्रपुजतुनोः षुक्' (पा० सू० ४. ३. १३८) इति षुगागमोऽण्प्रत्ययश्च। अतुन्दिलम् अनुदरम्। व्यायामवशात् कृशोदरम् इत्यर्थः। तुन्दिभम् वृद्धनाभिम्। 'तुन्दिबलिवटेर्भः' इति (पा० सू० ५. २. १३९.) मत्वर्थीयो भप्रत्ययः। 'तुन्दिरिति वृद्धनाभिरुच्यते' इति वृत्तिकारः। 'वृद्धनाभौ तुन्दिलतुन्दिभौ' इत्यमरः। अहीरणी द्विमुखभुजङ्गः(ഇരുതലമൂരിപ്പാമ്പ്)। 'अहीरणी स्याद् द्विमुखः' इति हलायुधः। पट्टिका घनवध्री। चित्रकायः व्याघ्रः। परिवारः कोशः। कुब्जः भग्नः। अजिनजालिकया अजिनकृतावकुण्ठनसाधनया। कृपाणीनां परिवारानुबन्धं सर्पफणाकारम् अजिनजालिकाशब्देनोच्यते। मुष्टिभागः ग्रहणदेशः। पारतरसः रसः। समस्तमस्तिकया समस्तशिरःप्रदेशया। 'मूर्धा च मस्तिकः' इति वैजयन्ती। केचिन्मस्तिष्कयेति पाठमादृत्य मस्तिष्कमुपरिफलक इति व्याचक्षते। कृपाण्या शाखिकया (പിശ്ശാങ്കത്തി)। करालितं दन्तुरितम्। प्रथमम् अभिनवमित्यर्थः। उल्लिख्यमानं कृशीक्रियमाणम्। अच्छभल्लः ऋक्षः (കരടി)। 'ऋक्षाच्छभल्लभल्लूका' इत्यमरः। भल्लः स्नुहिदलसदृशफलः शरः। शम्बरः हरिणविशेषः।

चर्मपट्टपीडितेन अलिकुलकालकोललम्बमानलोम्ना पृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्ष्ण्यमुपदर्शयन्तम्, उत्तरत्रिभागोत्तंसितचापपिच्छचारुशिखरे खादिरजटानिर्माणे खरप्राणे प्रचुरमयूरपित्तपत्रलताचित्रितत्वचि त्वचिसारसारगुणे गुरुणि वामस्कन्धाध्यासिनि धनुषि प्रलम्बमानेनावाक्शिरसा शितशरकृत्तैकनलकविवरप्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन बन्धूकलोहितरुधिरराजिरञ्जितघ्राणवता वपुर्विततिव्यक्तविभाव्यमानकोमलक्रोडलोमशुक्लिम्ना शशेन शाताटनीशिखाग्रग्रथितग्रीवेण च अपावृतचञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णमुष्टिमिव मृगयाया दर्शयन्तं, विषमविषदूषितवदनेन विकर्णेन कृष्णाहिनेव मूलगृहीतेन व्यग्रदक्षिणकरं, जङ्गममिव गिरितटतमालपादपं, यन्त्रोल्लासिताश्मसारस्तम्भमिव भ्रमन्तं,

---

पीडितेन दृढबद्धेन । भस्त्राभरणेन निषङ्गेण । उत्तंसितं बद्धम् । पिच्छः पक्षः । खादिरजटानिर्माणः खादिरजटया निर्माणो यस्य । जटा (വേര്) । खरप्राणे दृढबले । स्थिरतर इत्यर्थः । पित्तं मायुः (പിത്തം) । चित्रितत्वचि चित्रिताङ्ग इत्यर्थः । त्वचिसारसारगुणे वेणुसारकृतमौर्वीके । 'त्वचिसारश्च यो वंशः' इति हलायुधः । सारः (അകത്തൊലി)। नलकः शाखास्थि (കണങ്കാൽ എല്ലു) । 'शाखास्थि नलकं प्रोक्तम्' इति हलायुधः । स्वस्तिकबन्धः जानुसन्ध्योः पादद्वयप्रवेशनेन कृतमासनं स्वस्तिकः । लोहितं रक्तवर्णम् । विततिः विस्तृतिः । क्रोडम् उरोभागः । अटनी कोटिः (വില്ക്കോടി) । शिखाग्रम् अग्रदेशः । वर्णमुष्टिमिव मृगयाया दर्शयन्तं वर्णानां मुष्टिः सङ्ग्रहणं वर्णमुष्टिः । बहुविधवर्णन्याससत्त्ववधसङ्ग्रहणरूपाया मृगयायाः तत्तद्वर्णान् मुष्टिशः सङ्गृह्य दर्शयन्तमिव इत्यर्थः । तत्तत्पदार्थेभ्यः (चित्रत्वेन?)अंशेन ग्रहणं मुष्टिशब्देनोच्यत इति केषांचिन्मतम् । विषदूषितं विषलेपनेन दूषितम् । अन्यत्र विषसम्बन्धदूषितम् । विकर्णेन शरविशेषेण । 'अर्धचन्द्रः क्षुरप्रं स्याद् *विकर्णः कर्णिकाकरः' इति वैजयन्ती । अन्यत्र विगतकर्णेन । कृष्णसर्पाः चक्षुःश्रवस्त्वात् कर्णहीना इत्यर्थः । मूलं पुच्छभागः, पुच्छं च । उल्लासितं चालितम् । अश्मसारस्तम्भम् अयोमयस्तम्भम् ।

---

* विकर्णः कर्णिकारल' इति मुद्रितवैजयन्ती ।

सारमिव गलितं विन्ध्याद्रेः, पाकलं करिकुलानां, धूमकेतुं मृगराजचक्राणां, महानवमीमहं महिषमण्डलानां, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव कलिकालस्य, कामुकमिव कालरात्र्याः, शबरयुवानमादायाजगाम। दूरे च स्थापयित्वा विज्ञापयांबभूव— 'देव! सवनस्य स्वामी विन्ध्यस्य, सर्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिः भूकम्पो नाम। तस्यायं स्वस्रीयो निर्घातनामा सकलस्यास्य विन्ध्यस्य कान्तारस्य पर्णानामप्यभिज्ञः। किमुत प्रदेशानाम्। एनं पृच्छतु देवः। योग्योऽयमाज्ञां कर्तुम्' इति। कथिते च तेन निर्घातः क्षितितलविनिहितमौलिः प्रणाममकरोत्। उपनिन्ये च तित्तिरिणा सह शशोपायनम्। अवनिपतिस्तु संमानयन् स्वयमेव तमप्राक्षीत्— 'अङ्ग! अभिज्ञा यूयमस्य सर्वस्योद्देशस्य। विहारशीलाश्च दिवसेष्वेतेषु भवन्तः। सेनापतेर्वान्यस्य वा तदनुजीविनः कस्यचिदुदाररूपा नार्यागता भवेद् दर्शनगोचरम्' इति।

निर्घातस्तु भूपालालपनप्रसादेन आत्मानं बहुमन्यमानः पुनरपि प्रणनाम। दर्शितादरश्च व्यज्ञापयत्— 'देव! प्रायेणात्र हरिण्योऽपि नाविपरिगताः सञ्चरन्ति, कुत एव नार्यः। नास्त्येवंरूपा काचिदबला। तथापि देवादेशादन्वेषणं प्रति प्रतिदिनमनन्यकृत्यैः क्रियते यत्नः। इतश्च गव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहषण्डे पिण्डपाती

---

अयो हि खल्वश्मसारः। यत् स्मृतिः— 'अश्मभ्यो लोहमुत्थितम्' इति। 'स्त्री कुटिर्ना पारशवो गिरिसारोऽश्मसारकः' इति वैजयन्ती। सप्तसारस्तम्भमित्यपपाठः। सारमिति गलितमिति च पाठः। सारः अयः (ഇരിമ്പു)। अयःसारमित्यपपाठः। पाकलं (शिरो?गज)ज्वरम्। महानवमीमहं महानवम्यां महिषवधेन क्रियमाणं कर्म। कामुकं भर्तारम्। सवनस्य वनसहितस्य। पल्ली शबरनिवासः। शबरसेनापतिरस्तीति शेषः। स्वस्रीयः स्वसृपुत्रः। अभिज्ञः विज्ञाता। मौलिः शिरः। विहारः परिक्रमणम्।

अविपरिगताः अज्ञाताः। महिते सम्मते। पिण्डपाती, पिण्डपातो नाम

प्रभूतान्तेवासिपरिवृतः पाराशरी दिवाकरमित्रनामा गिरिनदीमाश्रित्य प्रतिवसति। स यदि विन्देत वार्ताम्' इति। तच्छ्रुत्वा नरपतिरचिन्तयत्— 'श्रूयते हि तत्रभवतः सुगृहीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायणीयः त्रयीं विहाय ब्राह्मणायनो विद्वान् उत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवानिति। प्रेयसश्च जनस्य जनयति सुहृदपि दृष्टो दृशामाश्वासम्। अभिगमनीयाश्च गुणाः सर्वस्य। कस्य न प्रतीक्ष्यो मुनिभावः। भगवती च वैधेयेऽपि धर्मगृहिणी गरिमाणमारोपयति प्रव्रज्या। किं पुनः सकलजनमनोमुषि विदुषि जने। यतो नः कुतूहलि हृदयमभूत् सततमस्य दर्शनं प्रति प्रासङ्गिकमेवेदमापतितम् अतिकल्याणम्। पश्यावः प्रयत्नप्रार्थितदर्शनं जनम्' इति। प्रकाशं चाब्रवीत्—'अङ्ग! समुपदिश तमुद्देशं यत्रास्ते स पिण्डपाती' इत्युक्त्वा तेनैवोपदिश्यमानवर्त्मा प्रावर्तत गन्तुम्।

अथ क्रमेण गच्छत एवास्य अनवकेशिनः कुड्मलितनवकर्णिकाराः

---

बौद्धादीनां भिक्षा, सोऽस्यास्तीति पिण्डपाती। पाराशरी बौद्धमुनिः। विन्देत लभेत। स यतिर्विद्याद् वार्तामिति च पाठः। तत्रभवतोऽनुजायाः पतिरपि ग्रहवर्मा वयसा ज्येष्ठत्वाद् दिवाकरमित्रभक्तिज्वालायुक्ततया तत्रभवान् इत्युपचर्यते। मैत्रायणीयः मैत्रायणशिष्यः। ब्राह्मणायनः ब्राह्मणपुत्रः। समाधिः नियमः। सौगते मते बौद्धसिद्धान्ते। प्रेयसः प्रियतरस्य। अभिगमनीयाश्च गुणाः सर्वस्य, सर्वेषामपि गुणेषु पृष्ठेषु पदं निक्षेप्तव्यम् इत्यर्थः। उक्तं च— 'पदं हि सर्वत्र गुणैर्निधीयते' इति। प्रतीक्ष्यः पूज्यः। मुनिभावः मुनित्वम् वैधेये अज्ञे। धर्मगृहिणी धर्मसहचारिणी। प्रव्रज्या सन्न्यासः। आपतितम् आगतम्।

अनवकेशिनः वन्ध्याः। अवकेशिनः 'वन्ध्योऽफलोऽवकेशी च' इति अमरः। तदन्येऽनवकेशिनः सदा सन्निहितफला इत्यर्थः। कर्णिकारः वृक्षोत्पलम्।

प्रचुरचम्पकाः स्फीतफलेग्रहयः फलभरनमितनमेरवो नीलदलनालिकेर-निकराः करिकेसरसुरससरलपरिकराः कोरकनिकुरुम्बरोमाञ्चितकुरवक-राजयो रक्ताशोकपल्लवरागलावण्यलिप्यमानदशदिशः प्रविकसितकेसर-रजोविसरबध्यमानवासरधूसरिमाणः स्वरजस्सिकतिलतिलकाः प्रविगलित-हिङ्गवः प्रसवधूलिधूसरितप्रियङ्गवः परागपिञ्जरमञ्जरीरज्यमानमधुप-मञ्जुशिञ्जाजनितजनमुदः मदमलनमेचकितमुचुकुन्दस्कन्धकाण्डकथ्यमान-निःशङ्ककरिकरटकण्डूतयः उड्डीयमानचटुलकूणशारशावशबलशाड्वल-सुभगभूमयः तमःकालतमतमालमालामीलितातपाः स्तबकदन्तुरित-देवदारवः तरुणताम्बूलीस्तम्बजालकितजम्बूजम्बीरवीथयः कुसुमधवल-धूलिकदम्बकचक्रचुम्बितव्योमानः बहलमधुमोक्षोक्षितक्षितयः परिमल-घटितघनघ्राणतृप्तयः कतिपयदिवसप्रसूतकुक्कुटीकुटीकृतकुटचकोटराः चटका-

---

स्फीतफलेग्रहयः स्फीता वृद्धाः फलेग्रहयः फलवद्वृक्षा येषु । 'फलेग्रहिरात्मम्भरिश्च' (पा० सू० ३. २. २६.) इति निपातः । 'स्यादवन्ध्यः फलेग्रहिः' इत्यमरश्च । नमेरवः सुरपुन्नागाः (ചുരപ്പുന്നാ) । नालिकेरः लाङ्गलीवृक्षः (തെങ്ങ്) । करिकेसरः चाम्पेय (നാഗം) । सरलः पीतद्रुः (ചാരളം) । कोरकः कलिका (മൊട്ടു) । कुरवकः वासन्तः (കുറവ്) । केसरः बकुलः । रजः पुष्परेणुः । बध्यमानम् उत्पाद्यमानम् । तिलकः श्रीमान (മഞ്ചാടി) । प्रविगलितहिङ्गवः स्रुतनिर्यासबाह्लीकवृक्षाः (പെരുങ്കായം) । 'सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम्' इत्यमरः । प्रसवधूलिः पुष्पपरागः । प्रियङ्गुः फलिनी (ഞാഴൽ) । शिञ्जा शब्दः । मलनं सम्बन्धः । मुचुकुन्दः किंशुकविशेषः । मुकुलः (മൊട്ട്) । स्कन्धकाण्डः प्रकाण्डग्रन्थिः । करटकण्डूतिः गण्डकषणम् । शाड्वलं शष्पयुक्तम् । मीलितम् अधःकृतमित्यर्थः । देवदारुः पूतिकाष्ठः (തേവതാരം) । जालकितं गवाक्षितम् । जम्बीरः जम्भलः (ചെറുനാരകം) । वीथयः पङ्क्तयः । कुसुमधवलधूलिरिति पाठः । मधुमोक्षोक्षितं मकरन्दस्यन्दसिक्तम । घटित विरचितम् । प्रसूतकुक्कुटी प्रजातापत्यकुक्कुटी । कुटीकृतं गृहीकृतम् । कुटचः गिरिमल्लिका । चटका

सञ्चार्यमाणपटुरववाचाटचारुचाटकैरक्रियमाणचाटवः सहचरीसहचरणचञ्चुरचकोरचुञ्चवो निर्भयभूरिभारुण्डभुज्यमानपाककपिलपीलवः सदाफलकट्फलबहुलाः फलविशसननिश्शूकशुकशकुन्तशाटितशलाटवः शैलेयसुकुमारशिलातलसुखशायितशशशिशवः शेफालिकाः शिफाविवर-

---

चटकस्त्री (കരുവിളപ്പിട്ട) । चाटकैरः चटकायाः पुत्रः । चटकशब्दाद् अपत्यार्थे 'चटकाया ऐरक्' (पा० सू० ४. १. ११८.) इत्यैरक्प्रत्ययः । अपत्ये तु स्त्रीत्वे विवक्षिते । 'स्त्रियामपत्ये लुग् वक्तव्यः' (वा०) इति प्रत्ययस्य लुग्विधानात् पुमपत्य एव प्रत्ययविधानम् । 'चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयोः । पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हि ॥' इत्यमरः । सहचरीसहचरणं सहचर्या सहभक्षणम् । चञ्चुरः लोलुपः । चकोरचुञ्चवः चकोरैः प्रसिद्धाः । 'तेन वित्तश्चुञ्चुप्चणपौ' (पा० सू० ५. २. २६.) इति चुञ्चुप्प्रत्ययः । सहकारीचारणचुञ्चुचकोरचञ्चव इति च पाठः । सहचर्याश्चारणे कबलादिभक्षणे प्रसिद्धाश्चकोराणां चञ्चवः नासिका यत्र । भारुण्डः पक्षिविशेषः (പാറ) । (बेकुऽपेरुण्ड) इति केचित् । (बेकुण्ड: ऽपेरुण्डः) कोष्ठा । पीलुः गुडफलवृक्षः (ഉകാമ്മ്) । सदाफलकट्फलबहुलाः सदाफलवत्कट्फलैः कैडर्यवृक्षैर्बहुलाः (ചെറകമ്പം) । अथवा सदाफलः नालिकेरविशेषः । 'सदाफलो बली चास्मिन् ह्रस्वे स्याद्' इति वैजयन्त्यां नालिकेराधिकारे उक्तः । सदाफलैः कट्फलैश्च बहुला इत्यर्थः । विशसनं भेदनम् । निश्शूकः निर्दयः । शुकशकुन्तः शुकाख्यपक्षी । शाटितं विशीर्णम् । 'शद्लृ शातनविशरणगत्यवसादनेषु' इति धातुः । शलाटवः अपक्वफलाः । 'आमे फले शलाटुः स्यात्' इत्यमरः । शैलेयम् अश्मपुष्पम् । शेफालिका नीलिका (ചെപാലിക) । शिफा जटा (വേര്) । गौधेरः गोधापुत्रः (ഉടുമ്പുകുട്ടി) । गोधाशब्दाद् 'गोधाया ढ्रक्' (पा० सू० ४. १. १२९.) इत्यपत्यार्थे ढ्रक् । 'त्रयो गौधेरगौधारगौधेया गोधिकात्मजे' इत्यमरः । सर्प्यां गोधायां जातः इति वैजयन्तीकारस्य मतम् ।

विस्रब्धवर्धमानगौधेरकराशयः निरातङ्करङ्कवः निराकुलनकुलकेलयः कल-कोकिलकुलकवलकलकलाकलितकलिकोद्गमाः सहकारारामरोमन्थायमान-चमूरुयूथाः यथासुखनिषण्णनीलाण्डमृगमण्डलाः निर्विकारवृकविलोक्य-मानपोतपीतगवयधेनवः श्रवणहारिसनीडगिरिनितम्बनिर्झरनिनादनिद्रा-मन्दायमानकरिकुलकर्णतालदुन्दुभयः समासन्नकिन्नरगीतरवरममाणरुरवः प्रमुदिततरक्षवः क्षतहरितहरिद्राद्रवरज्यमानवराहपोतपोत्त्रवलयाः गुञ्जा-गुञ्जगुञ्जज्जाहकाः जातिजालकसुमशालिजातजातयः दशनकुपितकपि-पोतपेटकपाटितपाटलकीटपुटकाः लिकुचलम्पटगोलाङ्गूललङ्घ्यमानै-लाकवलयः बद्धबालवालुकालवालकवलयाः कुटिलकुल्यावलीवलित-

---

तथोक्तं च— 'अथ गौधेरगौधारौ भुजगीगोधयोस्सुते ।' इति । निरातङ्क-रङ्कवः निर्बाधमृगाः, निश्शङ्कमृगा इति वा । केलयः क्रीडाः । कवल-कलकलाः कवलनिमित्तकोलाहलाः । रोमन्थायमानः रोमन्थं वर्तयमानः । रोमन्थं वर्तयतीत्यर्थे 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (पा० सू० ३. १. १९.) इति क्यष् । नीलाण्डमृगः कस्तूरिकामृगः । वृकः ईहामृगः (ചെന്നായ്) । पोतपीतगवयधेनवः स्ववत्सपीतस्तननवप्रसूतगवयस्त्रियः (കാട്ടുപശു) । यद्यपि धेनुशब्दो नवप्रसूताया गोरेव वाचकः तथाप्यत्र लक्षणया वर्तते । श्रवणहारि श्रवणप्रियम् । सनीडः समीपस्थः । निनादनिद्रा निनादश्रवण-सुखजाता निद्रा । रममाणं सुखायमानम् । रुरुः मृगविशेषः (ഉഴമാൻ) । तरक्षवः व्याघ्राः । क्षतः खण्डितः । हरितः नीलपीतवर्णः । 'हरितो नील-पीतः स्यात्' इति वैजयन्ती । द्रवः रसः । पोत्रं मुखाग्रम् । गुञ्जागुञ्जः काकचिञ्चीनिकुञ्जः (കുന്നിക്കുരു) । जाहकाः गात्रसङ्कोचिनः (മുള്ളൻ) । जातिजालसुमं मालतीसमूहमध्यसुमम् । शालिजातः खट्वासमृगः (നാവി) । पाटलकीटपुटः पाटलकीटयुक्तं दलपुटम् (ചുവന്നുറുമ്പ്) । लिकुचः (ഒരുമ-മിച്ചി), पनसो वा । गोलाङ्गूलः कृष्णवक्त्रमर्कटः (മൊച്ച) । एला (ഏലം) । कवलिः (ഇലവെള്ളി) । कुल्या कृत्रिमसरित् (വായ്ക്കാൽ) । वलितं सम्बद्धम् ।

गिरिनदिकास्रोतसः निबिडशाखाकाण्डलम्बमानकमण्डलवः सूत्रशिक्यासक्तरिक्तभिक्षाकपालपल्लवितलतामण्डपाः निकटकुटीकृतपाटलमुद्राचैत्यमूर्तयः चीवराम्बररागकषायोदकदूषितोद्देशाः, मेघमया इव कृतशिखण्डिकोलाहलाः, वेदमया इव अपरिमितशाखाभेदगहनाः, माणिक्यमया इव महानीलतनवः, तिमिरमया इव सकलजननयनमुषः, यामुनमहाह्रदा इव ऊर्ध्वीकृताः, मरतकश्यामलाः क्रीडापर्वतका इव वसन्तस्य, अञ्जनाचला इव पल्लविताः, तनया इव अटवीजाता विन्ध्याद्रेः, पातालान्धकारराशय इव भित्त्वा भुवनमुत्थिताः, प्रातिवेशिका इव वर्षावासराणाम्, अंशावतारा इव कृष्णार्धरात्राणाम्, इन्द्रनीलमयाः प्रासादा इव वनदेवतानां, पुरस्ताद् दर्शनपथमवतेरुस्तरवः।

ततो नरपतेरभवन्मनसि—'अदूरवर्तिना खलु भवितव्यं भदन्तेन'

---

नदिका क्षुद्रनदी। शाखाकाण्डं शाखाग्रन्थिः। कमण्डलुः कुण्डिका। सूत्रशिक्यं सूत्रमयः काचः (ഉറി)। पल्लवितं युक्तमित्यर्थः। निकटेत्यादि— (नि?मु)द्रा लेखाविन्यासविशेषः। निकटकुटीकृताः निकटकुटीमध्यविरचिताः। पाटला लाक्षागैरिकादिभिः विरचनया पाटलवर्णाः मुद्राचैत्यमूर्तयः मुद्रोपलक्षितानि बुद्धाण्डरूपाणि येषु। चैत्यं बुद्धालयः। 'चैत्यं चिताङ्के बुद्धाण्ड उद्देशेऽद्रौ सुरालये' इति **वैजयन्ती**। कषायं रक्तम्। कृतशिखण्डिकोलाहला मेघशङ्कयेति भावः। शाखाः काण्डाः, तैत्तिरीयादिभेदाश्च। महानीलतनवः अतिमेचकरूपाः। अन्यत्र महानीलाख्यरणरणिलानां तनवो यस्मिन्(?)। महानीलशब्दध्वनिमात्रमेवात्र विवक्षितम्। नयनमुषः मनोज्ञतया दृष्टिहारिणः। अन्यत्र दृष्टिपाटवहारिणः। ऊर्ध्वीकृता इति बहुवचनान्तः पाठः। अटवीजाता विन्ध्यस्य विन्ध्याख्यस्य पुरुषस्य अटव्याख्यायां स्त्रियां सम्भूताः। प्रातिवेशिकाः प्रतिभवनजाताः।

भदन्तेन, भदन्त इति बौद्धानां समयसिद्धं पूज्याभिधानम्। 'भदन्तास्तु

इति। अवतीर्य च तुरङ्गमाद् गिरिसरिति समुपस्पृश्य युगपद् विश्रमसमयसमुन्मुक्तहेषाघोषबधिरीकृताटवीगहनं तस्मिन्नेव प्रदेशे स्थापयित्वा वाजिसैन्यम् अवलम्ब्य तपस्विजनदर्शनोचितं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तमंसे विरलैरेव राजभिरनुगम्यमानः चरणाभ्यामेव प्रावर्तत गन्तुम्।

अथ तेषां तरूणां मध्ये नानादेशीयैः स्थानस्थानेषु स्थाणूनाश्रितैः शिलातलेषूपविष्टैः लतावनान्यध्यावसद्भिः अरण्यानीनिकुञ्जेषु निलीनैः विटपच्छायासु निषण्णैः तरुमूलानि निषेवमाणैः वीतरागैरार्हतैः मस्करिभिः श्वेतपटैः महापाशुपतैः पाण्डरिभिक्षुभिः भागवतैः वर्णिभिः केशलुञ्चकैः जैनैः लौकायतिकैः कापिलैः काणादैः औपनिषदैः ईश्वरकारणिभिः कर्मन्दिभिः

---

शाक्यक्षपणकादयः' इति वैजयन्ती। समुपस्पृश्य आचम्य, स्नात्वेति वा। अटवीगहनं वनगह्वरम्। 'गहनं गह्वरे वने' इति अजयः। अवलम्ब्य गृहीत्वा, अवष्टभ्य च। दक्षिणेन सरलेन, सव्येतरेण च। दक्षिणेन हृदयेन, दक्षिणेन करेण चेति उभयत्रापि दक्षिणशब्दः सम्बन्धनीयः।

स्थाणूनाश्रितैः स्थाणूनां मूलोपविष्टैः। अरण्यानीनिकुञ्जेषु महावनमध्यगह्वरेषु। 'महारण्यमरण्यानी' इत्यमरः। वीतरागैः बौद्धविशेषैः। आर्हतैः क्षपणकैः। मस्करिभिः परिव्राजकैः। श्वेतपटैः श्वेतवस्त्रधरैः बौद्धैः। महापाशुपतैः महापाशुपतसिद्धान्तिभिः। पाण्डरिभिक्षुभिः बौद्धैकदेशिभिः। कापालिकैरित्येके। भागवतैः भागवतसिद्धान्तिभिः। वर्णिभिः ब्रह्मचारिभिः। केशलुञ्चकैः क्षपणकमुनिभिः। लौकायतिकैः लोकायतनं नाम नास्तिकतन्त्रं, तद्वेदेत्यर्थे— 'क्रतूक्थादिसूत्रान्ताट्ठक्' (पा० सू० ४. २. ६०.) इति ठक्। जैनैः बौद्धैकदेशिभिः। कापिलैः साङ्ख्यसिद्धान्तिभिः। काणादैः वैशेषिकैः। औपनिषदैः वेदान्तिभिः। ईश्वरकारणिभिः नैयायिकैः। कर्मन्दिभिः कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीते इति भिक्षुसूत्रे 'कर्मन्दकृशाश्वादिनिः' (पा० सू० ४. ३. १११.) इति इनिप्रत्ययः। 'भिक्षुः परिव्राट् कर्मन्दी

कारन्धमिभिः धर्मशास्त्रिभिः पौराणिकैः साप्ततन्तवैः शाक्तैः पाञ्चरात्रिकैः वैखानसैः वानप्रस्थैरन्यैश्च स्वान् स्वान् सिद्धान्तान् शृण्वद्भिः अनुयुक्तैश्चिन्तयद्भिश्च प्रत्युच्चरद्भिश्च संशयानैर्निश्चिन्वद्भिश्च विवदमानैश्च अभ्यसद्भिश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नैर्दूरादेवावेद्यमानम्, अतिविनीतैः कपिभिरपि चैत्यकर्म कुर्वाणैः त्रिशरणपरैः परमोपासकशुकैरपि शाक्यसाधनकुशलैः कोशं समुपदिशद्भिः शिक्षापदोपदेशदोषोपशमशालिनीभिः शारिकाभिरपि धर्मदेशनां निदर्शयन्तीभिः अनवरतश्रवणगृहीतानि कौशिकैरपि बोधिसत्त्वजातकानि जल्पद्भिः जातसौगतशीलशीतलस्वभावैः शार्दूलैरपि अमांसाशिभिरुपास्यमानम्, आसनोपान्तविस्रब्धसुप्तनैककेसरिशावकतया मुनिपरमेश्वरम् अकृत्रिम इव सिंहासने निषण्णम्, उपशममिव पिबद्भिः वनहरिणैः जिह्वालताभिर्लिह्यमानपादपल्लवं, वामकरतलनिविष्टेन नीवारमश्नता पारावतपोतेन कर्णोत्पलकेनेव प्रियां मैत्रीं प्रसाधयन्तम्, इतरकरकिसलयेन नखमयूखलेखाभिर्जनितजलव्यामोहम् उद्ग्रीवं मयूरं मरतकमणिकरकमिव वारिधाराभिः पूरयन्तम्, इतस्ततः

---

पाराशर्यपि मस्करी' इत्यमरः। कारन्धमिभिः धातुवादिभिः। धर्मशास्त्रिभिः स्मृतिविद्भिः। पौराणिकैः पुराणवेदिभिः। साप्ततन्तवैः कल्पसूत्रविद्भिः। शाक्तैः शाक्तसिद्धान्तिभिः। पञ्चरात्रिकैः पाञ्चरात्रतन्त्रिभिः। वैखानसैः वानप्रस्थैः। अनुयुक्तैः पृष्टैः। व्याचक्षाणैः व्याख्यानं कुर्वद्भिः। चैत्यकर्म बुद्धाण्डनिर्माणम्। त्रिशरणपरैः त्रिशरणजपपरैः। त्रिशरणं तु— बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, सङ्घं शरणं गच्छामि इति मन्त्रत्रयम्। शाक्यसाधनं शाक्यसिद्धान्तम्। कोशं बौद्धानामनुष्ठानोपदेशपरं शास्त्रम्। शिक्षापदं शिक्षावाक्यम्। देशना बौद्धानां स्वागमेषु विधिवाक्यानां देशनेति परिभाषा। कौशिकैः उलूकैः। बोधिसत्त्वजातकानि, बोधिसत्त्वा नाम सर्वज्ञत्वं प्राप्ता अष्टौ बौद्धाः, तेषां जन्मचरितानि। शीतलं मृदु। मुनिपरमेश्वरं मुनीनामधिपतिम्। परमेश्वरशब्देन राजा च ध्वन्यते। पारावतः कपोतः ([illegible])। प्रियां स्त्रियं, वल्लभामिति च। व्यामोहः भ्रान्तिः। करकं कमण्डलुम्। 'कमण्डलौ

पिपीलिकाश्रेणीनां श्यामाकतण्डुलकणान् स्वयमेव विकिरन्तम्, अरुणेन चीवरपटेन प्रथीयसा संवीतं, बहलबालातपानुलिप्तमिव पौरन्दरदिग्भागम्, उल्लिखितपद्मरागप्रभाप्रतिमया रत्नावदातया देहप्रभया पाटलीकृतानां काषायग्रहणमिव दिशामप्यादिशन्तम्, अनौद्धत्यादधोमुखेन मन्दमुकुलितकुमुदाकरेण स्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुण्णक्षुद्रजन्तुजीवनार्थममृतमिव वर्षन्तं, सर्वशास्त्राक्षरपरमाणुभिरिव निर्मितं, परमसौगतमप्यनवलोकितेश्वरम्, अचलितं मनसि, अस्खलितं तपसि, लग्नं महसि, आलोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनां, सुगतस्यापि अभिगमनीयमिव, धर्मस्यापि आराधनीयमिव, प्रसादस्यापि प्रसादनीयमिव, मानस्यापि माननीयमिव, वन्द्यत्वस्यापि वन्दनीयमिव, आत्मनोऽपि स्पृहणीयमिव, ध्यानस्यापि ध्येयमिव, ज्ञानस्यापि ज्ञेयमिव, जन्म जपस्य, नेमिं नियमस्य, तत्त्वं तपसः, शरीरं शौचस्य, कोशं कौशलस्य, वंशं विश्वासस्य, सर्वस्वं सद्वृत्ततायाः, दासं दाक्षिण्यस्य, पारं परानुकम्पायाः, मध्यमे वयसि वर्तमानं दिवाकरमित्रमद्राक्षीत। अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च

---

च करकः' इत्यमरः। पिपीलिका कीटविशेषः (൧൭൨൩൭°)। कणान् क्षुद्रशकलानि (൩൨൬൩൫)। 'कणः स्यात् क्षुद्रतण्डुलः' इति हलायुधः। मन्दमुकुलितम् अल्पमुकुलितम्। क्षुण्णः पादपिष्टः। क्षुद्रजन्तुः पिपीलिकादिः। उक्तं च—'क्षुद्रजन्तुरनास्थिः स्यादथवा क्षुद्र एव यः। शतं वा प्रसृतौ येषां केचिदानकुलादपि ॥' इति। परमसौगतं परमबौद्धम्। अनवलोकितेश्वरम् अवलोकितेश्वराख्यबुद्धसम्बन्धरहितम्। परमसौगतश्चेद् अवलोकितेश्वरसम्बन्धवानेव भवति। मुख्यार्थः— अनवलोकितेश्वरम् अदृष्टराजानम्। यथावस्थितसकलपदार्थप्रकाशकं यथावस्थितमेव सकलघटपटादिपदार्थद्योतकम्। दर्शनं मीमांसादिसिद्धान्तः, चाक्षुषज्ञानं च। सुगतस्य बुद्धमुनेः। नेमिं मर्यादाम्। पारं समाप्तिभूमिम्। अतिप्रशान्तगम्भीराकारारोपितबहुमान इति पाठः।

सादरं दूरादेव समं शिरसा वचसा च ववन्दे ।

दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या, विशेषतस्तु तेनापरेणादृष्टपूर्वेण अमानुषलोकोचितेन सर्वाभिभाविना महानुभावाभोगभाजा भ्राजिष्णुना भूपतेरप्राकृतेनाकारविशेषेण तेन च आभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण आह्लादितश्चक्षुषि चेतसि च युगपदेवागृह्यत । धीरस्वभावोऽपि च सम्पादितसम्भ्रमाभ्युत्थानः सङ्कलय्य किञ्चिद्गमनवेगविलोललम्बमानं वामांसार्पितचीवरपटान्तम्, उत्क्षिप्य च अनेकाभयदानदीक्षादक्षिणो दक्षिणं महापुरुषलक्षणलेखाप्रशस्तं हस्तं स्निग्धमधुरया च वाचा सगौरवमारोग्यदानेन राजानमन्वग्रहीत् । अभ्यनन्दच्च स्वागतगिरा । गुरुमिवाभ्यागतं बहुमन्यमानः स्वेनासनेन 'आध्वमत्र' इति निमन्त्रयाञ्चकार । पार्श्वस्थितं च शिष्यमब्रवीत्— 'आयुष्मन् ! उपनय कमण्डलुना पादोदकम्' इति । राजा तु अचिन्तयत्— 'अलोहः खलु संयमनपाशः सौजन्यमभिजातानाम् । स्थाने खलु तत्रभवान् गुणानुरागी ग्रहवर्मा बहुशो वर्णितवानस्य गुणान्' इति । प्रकाशं च आबभाषे— 'भगवन् ! भदन्त ! दर्शनपुण्यानुगृहीतस्य मे पुनरुक्त इव आर्यप्रयुक्तः प्रतिभात्यनुग्रहः । चक्षुःप्रसादस्वीकृतस्य च उपरिकरणमिव आसनदानादिनोपचारचेष्टितम् । अतिभूमिरेव भवादृशानां पुरः सम्भाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवर्ति पाद्यमपि अपार्थकम् । निषीदन्तु भवन्तो यथासुखम् । आसीनोऽहम्' इत्यभिधाय क्षितावेव उपाविशत् ।

---

सङ्कलय्य बद्ध्वा । अभ्यागतम्, अभ्यागत इति प्रथमागमनेन सम्मान्य उच्यते । आध्वम् उपविशत । 'आस उपवेशने' इति धातोः लोट्यात्मनेपदमध्यमपुरुषबहुवचनम् । निमन्त्रयाञ्चकार आहूतवान् । अलोहः (अ)लोहमयः । स्थाने युक्तम् । अतिभूमिः अतिरेकः । प्रदेशवर्ति एकदेशवर्ति । पाद्यं पादार्थं जलम् । अपार्थकं निष्प्रयोजनम् ।

'अलङ्कारो हि परमार्थतः प्रभवतां प्रश्रय एव, रत्नादिकस्तु शिलाभारः' इत्याकलय्य पुनःपुनरभ्यर्थ्यमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनं तदा स्वकीयमेवासनं पुनरपि भेजे भदन्तः। भूपतिमुखनलिननिहितनिभृतनयनयुगलनिगलनिश्चलीकृतहृदयश्च स्थित्वा काश्चित् कालकलां कलिकल्मषकालुष्यमिव क्षालयन् निर्मलाभिर्दन्तमयूखमालाभिः मूलफलाभ्यवहारसम्भवमुद्गमन्निव च परिमलसुभगं विकचकुसुमपाण्डरं लतावनम् अवादीत्— 'अद्यप्रभृति न केवलमनिन्द्योऽभिनन्द्यो वन्द्योऽपि प्रकाशितसारः संसारः। किंनाम नालोक्यते जीवद्भिरद्भुतरूपं, येन रूपमचिन्तितोपनतमिदं दृक्पथमुपगतम्। एवंविधैरनुमीयन्ते जन्मान्तरावस्थासुकृतानि हृदयोत्सवैः। इहापि जन्मनि दत्तमेवास्माकम् अमुना तपःक्लेशेन फलप्रसुलभदर्शनं दर्शयता देवानांप्रियम्। आतृप्तेरापीतम् अमृतमीक्षणाभ्याम्। जातं निरुत्कण्ठं मानसं निर्वृतिसुखस्य। महद्भिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः। स सुदिवसः यस्मिन् जातोऽसि। सा सुजाता जननी या सकलजीवलोकजीवितानन्दजननम् अजनयदायुष्मन्तम्। पुण्यवन्ति पुण्यान्यपि तानि येषामसि परिणामः। सुकृततपसस्ते रूपपरमाणवः परिगृहीता ये त्वया। तत्सभाग्यं सौभाग्यम् आश्रितोऽसि येन। भव्यः स पुरुषभावो भवति व्यवस्थितो यः। यत्सत्यं मुमुक्षोरपि मे पुण्यभाजमालोक्य

---

अलङ्कार इत्यादि— भदन्तेन पुनःपुनरभ्यर्थ्यमानोऽपि यदा पार्थिवो वचनं न प्रत्यपद्यत नानुष्ठितवान् तदा भदन्तः प्रभवतां पुरुषाणां परमार्थोऽलङ्कारो हि प्रश्रय एव, रत्नादिकस्त्वलङ्कारः शिलाभारमात्र एवेत्याकलय्य पुनरपि स्वमासनं भेजे इत्यर्थः। अभ्यवहारः भक्षणम्। अद्येत्यादि— अभिनन्द्यः मोदनीयः। अयमर्थः— क्लेशबहुलत्वान्निन्द्य एव संसारस्तथापि भवादृशां सम्भवात् स इदानीम् अभिनन्द्योऽप्यासीद् वन्द्योऽप्यासीत्, कुतो निन्दाप्रसङ्ग इति। देवानांप्रिय इति पदं प्रथमोच्छ्वासे व्याख्यातम्। निर्वृतिसुखस्योपरीति शेषः। सुजाता शोभनप्रसूता। यत्सत्यं सत्यमेव।

पुनः श्रद्धा जाता मनुजजन्मनि। नेच्छद्भिरस्माभिर्दृष्टः कुसुमायुधः। कृतार्थमद्य चक्षुर्वनदेवतानाम्। अद्य सफलं जन्म वनपादपानां येषामसि गतो गोचरम्। अमृतमयाय भवतो वचसां माधुर्यम् अवधार्यमेव। अस्य त्वादृशि शैशवे विनयस्योपाध्यायं ध्यायन्नपि न सम्भावयामि भुवि। सर्वथा शून्य आसीदजाते दीर्घायुषि गुणग्रामः। धन्यः स भूभृद् यस्य वंशे मणिरिव मुक्तामयः सम्भूतोऽसि। एवंविधस्य पुण्यवतः कथमपि प्राप्तस्य केन प्रियमाचरामीति नः पारिप्लवं चेतः। सकलवनचरसार्थसाधारणस्य कन्दमूलफलस्य गिरिसरिदम्भसां वा के वयम्। अपरोपकरणीकृतस्तु कायकलिरयम् अस्माकम्। सर्वस्वम् अवशिष्टम् इष्टातिथ्याय। स्वाध्यायाश्च विद्याबिन्दवः कतिचित्। उपयोगं तु न प्रीतिर्विचारयति। यदि च नोपरुणद्धि कश्चिदर्थलवम् अरक्षणीयाक्षरं वा कथनीयं तत् कथयतु भवान्, श्रोतुमभिलषति हृदयं नः। केन कृत्यातिभारेण भव्यो भूषितवान् भुवमिमामभ्रमणयोग्याम्। कियदवधिर्वायं शून्याटवीपर्यटनक्लेशः कल्याणराशेः। कस्माच्च सन्तप्तरूपेव ते तनुरियमातपपिङ्गा विभाव्यते।' इति।

---

'यत्सत्यमारोहणशङ्कां मे जनयति' इति कादम्बर्याम्। 'यत्सत्यमस्याः प्रतिभात्यरागः' इति जानकीहरणे च। नेच्छद्भिः अनिच्छद्भिः। अवधार्यम् अवधिनिश्चयं कारयितव्यम्। दीर्घायुषि त्वयीति शेषः। धन्यः पुण्यवान्। भूभृद् राजा, पर्वतश्च। वंशे कुले, वेणौ च। मुक्तामयः मुक्तरोगः, मौक्तिकमयश्च। वंशे च मौक्तिकमणीनाम् उत्पत्तिरस्ति। उक्तं च — 'द्विपेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि॥' इति। पारिप्लवं व्याकुलम्। अपरोपकरणीकृतः त्वदन्येषाम् इतः पूर्वमुपकरणत्वेन कृतः। यदि च नोपरुणद्धि कश्चिदर्थलवमागमनकार्योक्तिरिति शेषः। आगमनकार्ये कथ्यमाने कस्यचिदर्थबाधा न भवेदित्यर्थः। सन्तप्तरूपा सन्तप्तशोभा।

राजा तु तच्छ्रुत्वा सादरमब्रवीत्— 'आर्य! दर्शितसम्भ्रमेणानेन मधुरसविसरमिव हृदयधृतिकरमनवरतं वर्षता वचसैव ते सर्वमनुष्ठितम्। धन्योऽस्मि यदेवमभ्यर्हितभूमौ अनुपचरणीयमपि मान्यो मन्यते माम्। अस्य महावनभ्रमणपरिक्लेशस्य कारणमवधारयतु मतिमान्। मम हि विमष्टनिखिलबन्धोः जीवितानुबन्धस्य निबन्धनमेकैव यवीयसी स्वसावशेषा। सा च भर्तृवियोगाद् वैरिपरिभवभयाद् भ्रमन्ती कथमपि विन्ध्यवनमिदम् अशुभशबरबहुलम् अगणितगजकुलकलिलम् अपरिमितमृगपतिशरभभयम् उरुमहिषमुषितपथिकगमनम् अतिनिशितशतशरपरुषम् अवटशतविषममाविशत्। अतस्तामन्वेष्टुं वयमनिशि निशि च सन्ततमिमामटवीमटामः। न चैनामासादयामः। कथयतु गुरुरपि यदि कदाचित् कुतश्चिद् वनचरतः श्रुतिपथमुपगता तद्वार्ता इति'।

अथ तच्छ्रुत्वा जातोद्वेग इव भदन्तः पुनरभ्यधात्— 'धीमन्! न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानभ्युपागतः अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवतः' इति। एवं भाषमाण एव च तस्मिन् अकस्मादागतोऽपरः शमिनि वयसि वर्तमानः सम्भ्रान्तरूप इव पुरस्तात् पुरुष उपरचिताञ्जलिः जातकरुणाम्बुप्रक्षालितचक्षुरभाषत— 'भगवन् भदन्त! अतिकरुणं कर्म वर्तते। बालैव बलवद्व्यसनाभिभूता अभूतपूर्वा कापि कल्याणरूपा स्त्री शोकावेशविवशा वैश्वानरं प्रविशति। सम्भावयतु ताम् अप्रोषितप्राणां भगवान् अभ्युपपद्य च समुचितैः समाश्वासनैः। अनुपरतपूर्वं कृमिकीटमपि दुःखितं दयाराशेरार्यस्य

---

अभ्यर्हितभूमौ सम्मान्यस्थाने। अवशेषा अवशिष्टा अभूत्। अगणितम् असंख्यातम्। अयोगाद् दैवप्रतिकूल्यात्। अनिशि निशि च सन्ततमिति पाठः। अनिशि दिवा।

शमिनि वयसि वार्द्धके। इवशब्दो वाक्यालङ्कारे। अभूतपूर्वा अदृष्टपूर्वेत्यर्थः। अभ्युपपद्य उपेत्य। अनुपरतम् अदृष्टम्। कृमिकीटं कृमयश्च

दृष्टिगोचरं गतम्' इति।

राजा तु जातानुजाशङ्कः सोदर्यस्नेहादन्तर्द्रुत इव दुःखेन दोदूयमानहृदयः कथमपि गद्गदिकागृह्यमाणविकलकण्ठः परं बाष्पायमाणदृष्टिः पप्रच्छ—'पाराशरिन्! कियति दूरे सा योषिदेवञ्जातीया, जीवेद्वा कालमेतावन्तं, पृष्टा वा त्वया भद्रे कासि, कस्यासि, कुतो वासि, किमर्थं वा वनमभ्युपगतासि, विशसि वा किन्निमित्तमनलमिति। आदितश्च प्रभृति कात्स्न्येन कथ्यमानामिच्छामि श्रोतुं कथाम्। आर्यस्य दर्शनगोचरमागता वा, आकारतो वा कीदृशी'त्यभिहितश्च भूभुजा भिक्षुराचचक्षे—'महाभाग! श्रूयताम्। अहं हि प्रत्यूष एवाद्य वन्दित्वा भदन्तम् अनेनैव गिरिनदीरोधसा सैकतसुकुमारेण यदृच्छया विहरन् नातिदूरमेकस्मिंश्च वनलतागहने नदीसमीपभाजि भ्रमरीणामिव हिमहतकमलाकरकातराणां रसितं सार्यमाणानाम् अतितारतानानुवर्तिनीनां वर्णतन्त्रीणामिव च झङ्कारमेकतारं नारीणां रुदितरवमधृतिकरम् अतिकरुणमाकर्णितवान्। समुपजातकृपश्च गतोऽस्मि तं प्रदेशम्। दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिगलल्लोहितेन

---

कीटाश्च 'क्षुद्रजन्तवः' (पा० सू० २. ४. ८.) इति द्वन्द्वैकवद्भावः। कृमयः काष्ठादीनामन्तर्जाता जन्तवः। कीटास्तु बहिर्जाताः। उक्तं च वैजयन्त्याम्—'नीलाङ्गा कृमिरन्तर्जः क्षुद्रः कीटो बहिर्भवः।' इति।

दोदूयमानम् अत्यन्तं परितप्यमानम्। एवञ्जातीया एवंप्रकारा। प्रकारवचने जातीयर् प्रत्ययः। प्रत्यूषे प्रभाते। 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः। विहरन् परिक्रामन्। सार्यमाणानाम् अङ्गुलिद्वयेन ताड्यमानानाम्। तानः (कान्तिः?)। एकतारं एकं च तारं च। एकप्रकारं च तारं च इत्यर्थः। एकतानमिति च पाठः। दृष्टवानस्मि च योषितामिति सम्बन्धः। दृषत्खण्डः पाषाणशकलः। लोहितेन रुधिरेण।

पार्ष्णिप्रविष्टशरशलाकाशल्यशूलसङ्कोचितचक्षुषा च अध्वजन्यश्रमश्वयथु-
निश्चलचरणेन च स्थाणवव्रणव्यथितगुल्फबन्धभूर्जत्वचा च, पात-
खरखेदखञ्जजङ्घाजातज्वरेण पांसुपाण्डुरितपिण्डिकेन खर्जूरजटा-
जालजर्जरितजानुना च, शतावरीदारितोरुणा विदारीदारितदुकूलेन
च, उद्भटाभिर्वंशविटपकण्टककोटिभिः पाटितकञ्चुकपटेन च, फललोभा-
वलम्बितानम्रबदरीलताजालकैः उत्कण्टकितैरुल्लिखितसुकुमारकरो-
दरेण च, कुरङ्गशृङ्गोत्खातैः कन्दमूलफलैः कदर्थितबाहुना च, ताम्बूल-
विरहविरसमुखखण्डितकोमलामलकीफलेन च, कुशकुसुमाहतिलोहितानां
श्वयतामक्ष्णां लेपीकृतमनःशिलेन च, कण्टकिलतालूनालक-
केशेन च, केनचित् किसलयोपपादितातपत्रकृत्येन, केनचित्
कदलीदलव्यजनवाहिना, केनचित् कमलिनीपलाशपुटगृहीताम्भसा,
केनचित् पाथेयीकृतमृणालपूलिकेन, केनचित् चीनांशुकदशाशिक्य-
निहितनालिकेरकोशकलशीकलितसरलतैलेन कतिपयावशेषशोकाविकला

---

शलाका शरकाण्डम् । 'शल्यमस्त्री शलाका स्याद्' इति वैजयन्ती । शूलं वेदना । सङ्कोचितम् ईषन्निमीलितम् । अध्वजन्यश्रमेति पाठः । अध्वजन्यम् अध्वगमनजातम् । जन्यशब्दो 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' (पा० सू० ३. ४. ६८.) इति कृतनिपातः । स्थाणवं स्थाणुस्खलनादिना सम्भूतम् । पातखरखेदः इतस्ततः पतनेन जातः खरः खेदः । पिण्डिका जङ्घामांसः । 'गृहादिधिष्ण्ये पिण्डे च जङ्घामांसे च पिण्डिका' इति वैजयन्ती । खर्जूरः परूषवृक्षः (ചിറ്റീന്തൽ) । शतावरी शतमूली (ശതാവലി) । विदारी कण्टकिलताभेदः (ഇരുള) । उद्भटः उत्कटः । 'उल्बणमुद्भटमुद्धतमुत्कटम्' इति हलायुधः । बदरी कर्कन्धूः (ഇലന്ത) । उल्लिखितः विदीर्णः । कदर्थितः क्लेशितः । आमलकी धात्री (നെല്ലി) । श्वयताम् उच्छूनीभवताम् । लेपीकृतं लेपनद्रवीकृतम् । कण्टकिलता अरिमेदलता (വേലംകൊമ്പു) । पाथेयं मार्गाशनम् । अंशुकदशाशिक्यम् अंशुकसूत्रबद्धं शिक्यम् (ഉറി) । नालिकेरकोशकलशी नालिकेरकोशाख्यघटी । कोशः (ചിരട്ട) । शोकाविकलः

कलमूककुब्जवामनबधिरबर्बरविरलेनाबालानां चक्रवालेन परिवृताम्, आपत्कालेऽपि कुलोद्गतेनेवामुच्यमानां प्रभालेपिना लावण्येन, प्रतिबिम्बितैरासन्नवनलताकिसलयैरिव सरसैर्दुःखक्षतैरन्तःपाटलीकृतकायां कठोरदर्भाङ्कुरक्षतक्षारिणा क्षतजेनानुमरणालक्तकेनेव रक्तचरणाम्, उत्तमन्नालेनान्यतरनारीधृतेनारविन्दिनीदलेन कृतच्छायमपि निश्छायं मुखमुद्वहन्तीम्, अटवीमिव शून्यतया, मृन्मयीमिव श्वाससम्पदा, पावकमयीमिव सन्तापसन्तानेन, सलिलमयीमिव अश्रुप्रसरेण, वियन्मयीमिव निरवलम्बतया, तडिन्मयीमिव पारिप्लवतया, शबरमयीमिव परिदेवितवाणीबाहुल्येन, मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां कल्पलतामिव महावने पतितां, परमेश्वरोत्तमाङ्गपातदुर्ललितां गङ्गामिव गां गतां, वनकुसुमधूलिधूसरितपादपल्लवां, प्रभातचन्द्रमूर्तिमिव

---

शोकविषण्णः। कलमूकः वाक्छ्रुतिहीनः। बर्बराः निहीनाः 'इतरप्राकृतपामरपृथग्जना बर्बराश्च तुल्यार्थाः' इति हलायुधः। कुलोद्गतेन उत्कृष्टवंशसम्भवेन। सरसैः अशुष्कैः। उभयत्र समानम्। दुःखक्षतैः दुःखसम्भवैः पामादिभिः व्रणैः। 'क्षतमीर्ममरुर्व्रणः' इति हलायुधः। क्षतक्षारिणा व्रणाद् विष्यन्दिना। अरविन्दिनीदलेन पद्मपत्रेण। कृतच्छायं कृतानातपम्। निश्छायं निश्शोभं, निर्गतानातपमिति च। शून्यतया बान्धवबुद्धिराहित्येन। अन्यत्र मनुष्यादिरिक्ततया। सन्तापः क्लेशः, उष्णं च। निरवलम्बतया निरवष्टम्भत्वेन, निराधारतया च। पारिप्लवतया व्याकुलतया, अस्थैर्येण च। मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां मुक्तानि त्यक्तानि, मुक्ता मौक्तिकानि, अंशुकं सूक्ष्मवस्त्रं, रत्नं, कुसुमं, कनकपत्रं कनकमयतालपत्रम् आभरणं च यया। अन्यत्र मुक्तानि विशीर्णानि मुक्तादीनि यस्याः। परमेश्वरोत्तमाङ्गपातदुर्ललितां बालतया परमेश्वरस्य प्रभाकरवर्धनस्योत्तमाङ्गे शिरसि पातेन दुर्ललिताम्। अथवा परमेश्वरोत्तमस्य अङ्केषु उत्सङ्गादिषु पतनेन दुर्ललिताम्। अन्यत्र परमेश्वरो महादेवः। वनकुसुमधूलिधूसरितपल्लवानां वनसम्भूतानां कुसुमानां जलसम्भूतकुमुदादिपुष्पाणां

लोकान्तरमभिलषन्तीं, निजजलमोक्षकदर्थितधवलायतनेत्रशोभां मृणा-लिनीमिव म्लानां, दुःसहरविकिरणसंस्पर्शखेदनिमीलितां कुमुदिनीमिव दुःखेन दिवसं नयन्तीं, दग्धदशाविसंवादितां प्रत्यूषदीपशिखामिव क्षामपाण्डुवपुषं, पार्श्ववर्तिवारणाभियोगरक्ष्यमाणां वनकरिणीमिव दुःख-महाह्रदे मग्नां, प्रविष्टां वनगहने ध्याने च, स्थितां तरुतले मरणे च, पतितां धात्र्युत्सङ्गे महत्यनर्थे च, दूरीकृतां भर्त्रा सुखेन च, निर्वेदितां भ्रमणेनायुषा च, आकुलां केशकलापेन मरणोपायेन च, विवर्णीकृताम् अध्वधूलिभिरनङ्गवेदनाभिश्च, दग्धां चण्डातपेन वैधव्येन च, धृतमुखीं पाणिना मौनेन च, गृहीतां प्रियसखीजनेन मन्युना च, तथा च भ्रष्टैर्बन्धुभिर्विलासैश्च, मुक्तेन श्रवणयुगलेनात्मना च, परित्यक्तैर्भूषणैः

---

धूलिभिर्धूसरितकिरणविस्ताराणाम् । 'पल्लव स्वस्ती प्रकोष्ठे विस्तृतावपि' इति वैजयन्ती । लोकान्तरं मरणं, भुवनान्तरं च । निजजलमोक्षकदर्थितधवलायत-नेत्रशोभां निजजलस्य अश्रुजलस्य मोक्षेण कदर्थिता क्लेशिता धवलस्यायतस्य च नेत्रस्य शोभा यस्याः । अन्यत्र निजजलस्य स्वकीयजलस्य मोक्षेणापगत्या कदर्थिता धवलस्यायतस्य च नेत्रस्य मूलकन्दस्य शोभा यस्याः । नेत्रशब्दः चक्षुषि कन्दे च वर्तते । 'स्याज्जटांशुकयोर्नेत्रम्' इत्यमरः । अत्र जटा-शब्देन कन्दमभिधीयते । मृणालिनी पद्मम् । मीलितलोचनाम् अन्यत्र मुकुलितपुष्पाम् । दग्धदशा निन्दितावस्था । अन्यत्र भस्मीकृतावस्थितिः । विसंवादिताम् अननुरूपां, सङ्गतरहितां च । पार्श्ववर्तिवारणाभियोगरक्ष्यमाणां पार्श्ववर्तिनां वारणाभियोगेन निवारणकौशलेन रक्ष्यमाणाम् । दुःखमहाह्रदे दुःखाख्यमहाह्रदे । अन्यत्र दुःखे दुरुत्तारे महाह्रदे । विवर्णीकृतां मलिनीकृतां, विगतशोभीकृतां च । दग्धां तापितां, क्लेशितां च । धृतमुखीं धारितवदनाम् । अन्यत्र निवारितवाक्प्रवृत्तिमित्यर्थः । भ्रष्टैर्बन्धुभिरित्यादीनां तृतीयान्तानां पदानामुपलक्षितामिति शेषः । भ्रष्टैः नष्टैः, गतैश्च । मुक्तेन आभरणरहितेन, भूमौ पातितेन च । आत्मना शरीरेण । परित्यक्तैः धारणान्निवर्तितैः,

सर्वारम्भैश्च, भग्नैर्वलयैर्मनोरथैश्च, चरणलग्नाभिः परिचारिकाभिः दर्भाङ्कुर-सूचिभिश्च, हृदयनिहितेन चक्षुषा प्रियेण च, दीर्घैः श्वसितैः केशैश्च क्षीणेन वपुषा पुण्येन च, पादयोः पतन्तीभिर्वृद्धाभिः अश्रुधाराभिश्च, स्वल्पाव-शेषेण परिजनेन जीवितेन च, अपि च अलसामुन्मेषे, दक्षाम् अश्रुमोक्षणे, सन्ततां चिन्तासु, विच्छिन्नामाशासु, कृशां काये, स्थूलां श्वसिते, पूरितां दुःखेन, रिक्तां सत्त्वेन, अध्यासिताम् आयासेन, शून्यां हृदयेन, चलितां धैर्येण, अपि च आधानमाधीनां, वसतिं व्यसनानां, स्थानमवस्थानाम्, आधारमधृतीनाम्, आवासम् अवसादानां, आपणमापदाम्, अभियोगमभाग्यानाम्, उद्योगमुद्वेगानां, कारणं करुणायाः, परं परायत्ततायां योषितम् । दृष्ट्वा च चिन्तितवानस्मि— चित्रमीदृशीमपि आकृतिमुपतापाः स्पृशन्तीति । सा तु समीपमुपगते मयि तदवस्थापि सबहुमानावनमितमौलिः प्रणतवती । अहं तु प्रबलकरुणाप्रेर्यमाणः तामालापितुकामः कृतवान् मनसि— कथमिव महानुभावामेनामामन्त्रये । वत्से ! इति प्रणयः । मातः ! इति चाटुः । भगिनि ! इति आत्मसम्भावना । देवि ! इति परिजनालापः । राजपुत्रि ! इत्यस्फुटम् । उपासिके ! इति

---

त्यक्तैश्च । सर्वारम्भैः भोजनशयनादिसर्वकर्मभिः । भग्नैः खण्डितैः, हतैश्च । चरणलग्नाभिः भोजनादिप्रवृत्त्यर्थं प्रणामेन चरणसङ्गताभिः । अन्यत्र पादाक्रान्त्या चरणोदरप्रविष्टाभिः । हृदयनिहितेन विषादातिशयाद् अनन्य-निरीक्षणाद् हृदय एवाहितेन । अन्यत्र सततचिन्तया हृदये धारितेन । दीर्घैः महत्तरैः, विमुक्तबन्धनतया आयतैश्च । क्षीणेन कृशेन, अल्पेन च । पतन्तीभिः अग्निप्रवेशनान्निवृत्त्यर्थं सान्त्वनैः प्रणमन्तीभिः, स्रंसमानाभिश्च स्वल्पम् अप्रभूतम् अल्पं च । (आवरणं व्यवहारस्थानम् ?)। कारणं निमित्त-भूतामिति यावत्। परायत्ततायाः पराधीनतायाः । उपतापाः दुःखानि । आमन्त्रये आह्वानं करोमि । चाटुः प्रियवाक्यम् । अस्फुटम् अज्ञातत्वादिति भावः उपासिके! उपासितकारिणि ! । उपासक इति बौद्धानां शिष्येषु प्रयुज्यमानः शब्दः ।

स्वकीयमनोरथः। स्वामिनि! इति भृत्यभावाभ्युपगमः। भद्रे! इति इतरस्त्रीजनसमुचितम्। आयुष्मति! इति अस्यामवस्थायामप्रियः। कल्याणि! इति दशाविरुद्धम्। चन्द्रमुखि! इति अमुनिमतम्। बाले! इति अगौरवोपेतम्। आर्ये! इति अतिजरारोपणम्। पुण्यवति! इति फलविपरीतम्। भवति! इति सर्वजनसाधारणम्। अपि च, 'क्वासि' इति अनभिजातम्। 'किमर्थं रोदिषि' इति दुःखकारणस्मरणकारि। 'मा रोदीः' इति शोकहेतुपनयनीय न शोभते। 'समाश्वसिहि' इति किमाश्रित्य समाश्वासयामि। 'स्वागतम्' इति यातयामम्। 'सुखमास्यताम्' इति मिथ्या। इत्येवं चिन्तयत्येव मयि तस्मात् स्त्रैणादुत्थायान्यतरा योषिदार्यरूपेव शोकविक्लवा समुपसृत्य कतिपयपलितशारितं शिरो नीत्वा महीतलम् अतुलहृदयसन्तापसूचकैः अश्रुबिन्दुभिर्दहन्तीव मे चरणयुगलम् अतिकृपणैरक्षरैश्च हृदयम् अभिहितवती— 'भगवन्! सर्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या। प्रपन्नपरदुःखक्षपणदीर्घाश्च भवन्ति श्रमणाः। करुणाकुलगृहं च भगवतः शाक्यमुनेः शासनम्। सकलजनोपकारसज्जा च सज्जनता जैनी। परलोकसाधनं च धनं धर्मो मुनीनाम्। प्राणपरिरक्षणाच्च परं नापरं पुण्यजातं जगति गीयते जनेन। अनुकम्पाभूमयश्च प्रकृत्यैव युवतयः। किं पुनर्विपदभिभूताः। साधुजनश्च सिद्धिक्षेत्रम् आर्तवचसाम्। यत इयं नः स्वामिनी मरणेन मातुः, प्रवसनेन च पितुः, अभावेन च भर्तुः, परलोकगमनेन च भ्रातुः, भ्रंशेन च शेषस्य बान्धववर्गस्य, अतिमृदुहृदयतया अनपत्यतया च निरवलम्बना, परिभवेन च नीचारातिकृतेन

---

अमुनिमतम् अमुनियोग्यम्। अनभिजातम् अना.म्। यातयामं हीनशक्तिकम् आगमनस्यायशोभाजनत्वात्। 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्' इत्यपरः। पलितं पाण्डरकेशः। शारितं नानावर्णीकृतम्। प्रपन्नः शरणागतः। शासनं शास्त्रम्। सज्जाः उद्युक्ताः। जैनी जिनस्य बुद्धस्य सम्बन्धिनी। परम् उत्कृष्टम्। सिद्धिक्षेत्रं फलस्थानम्। परिभवेन इत्यादि।

प्रकृत्या मनस्विनी अमुना च महाटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या, दग्धदैवदत्तैरेवंविधैर्बहुभिरुपरि व्यसनैः विक्लवीकृतहृदया, दारुणं दुःखम् अपारयन्ती सोढुं निवारयन्तमनतिक्रान्तपूर्वं स्वप्नेऽप्यवगणय्य गुरुजनम् अनुनयन्तीरखण्डितप्रणया नमस्वापि समवधूय प्रियसखीः विज्ञापयन्तम् अशरणमनाथमश्रुव्याकुलनयनम् अपरिभूतपूर्वं मनसापि परिभूय भृत्यवर्गम् अग्निं प्रविशति। परित्रायताम्। आर्योऽपि तावद् असह्यशोकापनयनोपदेशनिपुणां व्यापारय वाणीं तस्याम्' इति च अतिकृपणं व्याहरन्तीं तामहमुत्थाप्य उद्विग्नतरः शनैरभिहितवान्। 'आर्ये! यथा कथयसि तथास्मद्गिराम् अगोचरोऽयमस्याः पुण्याशयायाः शोकावेगः। शक्यते चेन्मुहूर्तमात्रमपि त्रातुम् उपरिष्टान्न वृथेयमभ्यर्थना। मम हि गुरुरपर इव भगवान् सुगतः समीपगत एव। स कथिते मयास्मिन्नुदन्ते नियतमागमिष्यति परमदयालुः। दुःखान्धकारपटलभिदुरैश्च सौगतैः सुभाषितैः स्वकीयैश्च दर्शितनिदर्शनैः नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमवतारयिष्यति' इति। तच्छ्रुत्वा 'त्वरतामार्यः' इत्यभिदधाना सा पुनरपि मे पादयोः पतितवती। सोऽहमागत्य त्वरिततरो व्यतिकरममुम् अधृतिकरमशरणकृपणबहुयुवतिमरणम् अतिकरुणमत्रभवते गुरवे निवेदितवान्' इति।

अथ भूभृद् भैक्षवमववार्य तद् भाषितम् अश्रुमिश्रम् अश्रुतेऽपि स्वसु-

---

प्रकृत्या मनस्विनी पर्यटनक्लेशेन कदर्थितसौकुमार्येत्यन्वयः। प्रणयः स्नेहः, याच्ञा वा। उद्विग्नः विषण्णः। पुण्याशयायाः शोभनबुद्धेः। उदन्ते वृत्तान्ते। निदर्शनं दृष्टान्तः। आगमगुरुभिः शास्त्रज्ञानेन महत्तरैः। व्यतिकरं वृत्तान्तम्।

भूभृद् राजा। भैक्षवं भिक्षुसम्बन्धि। भाषितं वचनम्। अश्रुमिश्रमुवाचेति

नाम्नि निम्नीकृतमना मन्युना सर्वाकारसंवादिन्या दशयैव दूरीकृतसन्देहः दग्ध इव मोदर्यावस्थाश्रवणेन श्रमणाचार्यमुवाच— 'आर्य! नियतं सैवेयम् अनार्यस्यास्य जनस्यातिकठिनहृदयस्य अतिनृशंसस्य भगिनी अभागधेयैरेनामवस्थां नीता निष्कारणवैरिभिः वराकीति दीर्यमाणं हृदयमेव मे निवेदयति'। इत्युक्त्वा तमपि श्रमणमभ्यधात्। 'आर्य! उत्तिष्ठ, कथय यतः सा। यतस्व प्रभूतप्राणिपरित्राणपुण्योपार्जने। यामः। यदि कथञ्चिज्जीवन्तीं सम्भावयामः' इति भाषमाण एवोत्तस्थौ।

अथ समग्रशिष्यानुगतेनाचार्येण तुरगेभ्यश्चावतीर्य समस्तेन सामन्तलोकेन पश्चादाकृष्यमाणाश्वीयेनानुगम्यमानः, पुरस्ताच्च तेन शाक्यपुत्रीयेण प्रदर्श्यमानवर्त्मा पद्भ्यामेव तं प्रदेशं प्रविरलैः पदैः पिबन्निव प्रावर्तत। क्रमेण च समीपमुपगतः शुश्राव लतावलयान्तरितस्य मुमूर्षोर्महतस्त्रैणस्य तत्कालोचितान् अनेकप्रकारानालापान्। तथा हि— 'भगवन् धर्म! धाव शीघ्रम्। क्वासि कुलदेवते। देवि धरणि! धारय दुःखितां दुहितरम्। क नु खलु प्रोषिता पुष्यभूतिकुलकुटुम्बिनी लक्ष्मीः। अनाथां नाथ मुखरवंश! विविधाधिविधुरां वधूं विधवां बोधयसि किमेनाम्। भगवन्! भक्तजने सञ्ज्वरिणि सुगत! सुप्तोऽसि। राजधर्म! पुष्यभूतिभवनपक्षपातिन्! उदासीनीभूतोऽसि कथम्। त्वय्यपि निपन्नबन्धव विन्ध्य! वन्ध्योऽञ्जलिबन्धः। मातर्महाटवि! रुदन्तीं न शृणोषीमाम् आपत्पतिताम्। पतङ्ग! पाहि पतिव्रतामशरणाम्। प्रयत्नरक्षित!

---

सम्बन्धः। सर्वाकारसंवादिन्या दशया पूर्वमात्मनोरप्रेक्षितस्य सर्वस्यापि राज्यश्रीरूपस्यानुरूपया इदानीं भिक्षूक्तया। श्रमणाचार्यं बौद्धाचार्यम्। अभागधेयैः अभाग्यैः।

शाक्यपुत्रीयेन, शाक्यमुनेः शासनानुष्ठानेन पुत्रस्थानीय इति शाक्यपुत्रो बौद्धः, तस्य शिष्यः शाक्यपुत्रीयः। विविधाधिः विविधमनोदुःखम्। संज्वरिणि सन्तापवति। रुदन्तीं मुक्तकण्ठं विलपन्तीम्।

कृतघ्न चारित्रचण्डाल! न रक्षसि राजपुत्रीम् । किमवधूतं लक्षणैः । महादेवि दुहितृस्नेहवति यशोवति! मुषितासि दग्धदैवेन दस्युना । देव! दुहितरि दह्यमानायां नापतसि प्रतापशील!। शिथिलीभूतमपत्यप्रेम महाराजस्य । राज्यवर्धन! न धावसि, मन्दीभूता भगिनीप्रीतिः । अहो! निष्ठुरः प्रेतभावः । अपेहि पाप पावक! स्त्रीवधनिर्घृण! ज्वलन् न लज्जसे । तात वात! दासी तवास्मि । संवाहय द्रुतं देवीदाहं देवाय दुःखितजनार्तिहराय श्रीहर्षदेवाय । नितान्तनिश्शूक शोकश्वपाक! सकामोऽसि । दुःखदायिन् अयोगराक्षस! सन्तुष्टोऽसि । विजने वने कमाक्रन्दामि । कस्मै कथयामि । कमुपयामि शरणम् । कां दिशं प्रतिपत्स्ये । कं रोदिमि पापा । किमभागधेया करिष्यामि । गान्धारिके! गृहीतोऽयं लतापाशः । पिशाचिनि मोचनिके! मुञ्च शाखाग्रहम्, गृहाण कलहंसम् । कलहंसिके! हंसि किमपरमुक्तमाङ्कम् । मल्लिके! किं मुक्तकण्ठमद्यापि रुद्यते । सिन्दूरिके! दूरीभवति सखीसार्थः । स्थास्यसि कथम् अशिवे शवशिबिरे शबरिके!। सुतनु! तनूनपाति पतिष्यसि त्वमपि । गतासि मृणालकोमले मृणालिके!। मातर्मालति! म्लानासि । मातङ्गि! अङ्गीकृतः त्वयापि मृत्युः । वत्से वात्सके! वत्स्यसि कथमनभिप्रेते प्रेतनगरे । नागरिके! गरिमाणमागतासि अनया स्वामिनीभक्त्या । विराजिके! वीतराजिकासि अनेन राजपुत्रीविपदि जीवितव्ययव्यवसायेन । भृगुपतनाभ्युद्यमभागाभिज्ञे भृङ्गारधारिणि! धन्यासि । ध्यायसि कोमलिके! कुतः पुनरीदृशी स्वप्नेऽपि सुस्वामिनी । मेनके! जन्मनि जन्मनि देवीदास्यमेव ददातु देवो देहं दहन् दहनः। विजये!

---

दस्युना चोरेण । प्रतापशील इति प्रभाकरवर्धनस्य नामान्तरम् । तथा पुरस्तादप्युक्तम्— 'प्रतापशील इति प्रथितापरनामधेय' इति । संवाहय सम्भावय । दाहम् अग्निप्रवेशकर्म । निश्शूक! निर्दय!। शोकश्वपाक! शोकचण्डाल! अयोगः प्रतिकूलदैवः । शिबिरे श्मशाने । वत्स्यसि वासं करिष्यसि । अनभिप्रेते अनभिमते । जीवितव्ययः प्राणपरित्यागः । वीजय तालवृन्ताद्यनिलैः

वीजय कृशानुम्। सानुमति! नमतीन्दिवरिका दिवं गन्तुकामा। कामदासि! देहि दहनप्रदक्षिणावकाशम्। कुशलिके! कुशान् इपत्रहि विकिर। कुरबके! कुरु कुरबककोरकार्चितां चिताम्। चरमं चामरग्राहिणि! परिष्वजस्व। गृहाण पुनरपि कठिनं कण्ठे लवङ्गिके!। मर्षयितव्यानि नर्मदे! नर्मनिर्मितानि निमर्यादहसितानि। भद्रे सुभद्रे! भद्रमस्तु ते परलोकगमनम्। ग्रामेयिके गुणानुरागिणि! गच्छ सुगतिम्। वासन्तिके! अन्तरं प्रयच्छ, आपृच्छते छत्रधारिणी। देहि देवि! दृष्टिम्, इष्टा तव त्यजति जीवितं विजयसेना। सेयमतिमुक्तिका मुक्तकण्ठमारटति निकटे ते नाटकसूत्रधारिणी। पादयोः पतति ताम्बूलकरङ्कवाहिनी बहुमता राजपुत्र्याः पत्रलतिका। कलिङ्गसेने! अयमपश्चिमः परिष्वङ्गः, पीडय निर्भरमुरसा। मुञ्च माम्, अपहाय मानसात्रासमसवः प्रवसन्ति वसन्तसेने!। मञ्जरिके! मार्जयसि कतिकृत्वः सुदुस्सहदुःखसहस्रास्रदग्धं दग्धचक्षुरिदम्। रोदिषि किं मामाश्रित्य। मम निर्वाणमीदृशं प्रायशो यशोधरे!। धीरयसि अद्यापि किं मां माधविके!। केयमवस्था संस्थापनानाम्। गतः स कालः कालिन्दि!। सखीजनानुनयाञ्जलीनाम्। उन्मत्तिके मत्तपालिके! कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः। शिथिलय चकोरवति! चरणग्रहणं ग्रहिणि!। कमलिनि! किमनेन दैवोपालम्भेन। प्राप्तं सुचिरं सखीजनसुखम्। आर्ये महत्तरिके तरङ्गसेने! नमस्कारः। सखि सौदामिनि! दृष्टासि। समुपनय हव्यवाहार्चनकुसुमानि कुसुमिके!। देहि चिताधिरोहणाय रोहिणिके! हस्तावलम्बम्। अम्ब धात्रि! धीरा भव। भवन्ति एवंविधा एव कर्मविकाराः पापकारिणीनाम्। आर्ये! पादरजसाम् अयमुदकाञ्जलिः। परः परलोकप्रयाणप्रणामोऽयं मातुः।

---

सन्धुक्षय। चरमम् अन्तिमम्। सूत्रधारिणी प्रस्ताविका। अपश्चिमः पश्चिमहीनः, अन्तिम इत्यर्थः। पश्चिम इति च पाठः। धीरयसि धीरां करोषि, संस्थापयसीत्यर्थः। कृताः पृष्ठतः अनादृता इत्यर्थः। ग्रहिणी ग्रहवती। भूताभिभूतेत्यर्थः। महत्तरिके— 'आशीःस्वस्त्ययनाभिज्ञा या वृद्धा सा

मरणसमये कस्माल्लवलिके! हलहलको महीयानानन्दमयो हृदयस्य मे। हृष्यन्ति उच्चरोमाञ्चपुञ्जि किमङ्गीकृत्याङ्गानि। वासन्तिके! वामेन मे स्फुरितमक्ष्णा। वृथा रससि वयस्य वायस! वृक्षे क्षीरिणि क्षणे क्षणे क्षीणपुण्यायाः पुरः। हरिणिके! हेषितमिव हयानामुत्तरतः। कस्येदमातपत्रम् उच्चमत्र पादपान्तरेण प्रभाववति! विभाव्यते। कुरङ्गिके! केन सुगृहीत-नाम्ना नाम गृहीतममृतमयमार्यस्य। 'देवि! दिष्ट्या वर्धसे देवस्य श्रीहर्षदेवस्यागमनमहोत्सवेन' इत्येतच्छ्रुत्वा सत्वरमुपससर्प, ददर्श च मुह्यन्तीम् अग्निप्रवेशोद्यतां राजा राज्यश्रियम्। अलाऌम्बे च मूर्छानिमीलितलोचनाया ललाटं हस्तेन तस्याः ससम्भ्रमम्।

अथ तेन भ्रातुः प्रेयतः प्रकोष्ठबद्धानामोषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता, वमतेव पारिहार्यमणीनामचिन्त्यं प्रभावम्, अमृतमिव नखचन्द्ररश्मिभिरुद्गिरता, बध्नतेव चन्द्रोदयच्युतशिशिरशीकरं चन्द्र-कान्तचूडामणिं मूर्धनि, मृणालमयाङ्गुलिनेव अतिशीतलेन निर्वापयता दह्यमानं हृदयं, प्रत्यानयतेव कुतोऽपि च जीवितम्, आह्लादकेन हस्तसंस्पर्शेन सहसैव चक्षुः समुन्मिमील राज्यश्रीः। तथा च असम्भाविता गमनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टस्येव कण्ठे समाश्लिष्य, तत्कालाविर्भाव-निर्भरेणाभिभूता सर्वात्मना दुःखसम्भारेण निर्दयं, नदीमुखप्रणालाभ्याम् इव मुक्ताभ्यां स्थूलप्रवाहम् उत्सृजन्ती बाष्पवारि लोचनाभ्यां, 'हा तात! हा अम्ब!, हा सख्यः!' इति च व्याहरन्ती मुहुर्मुहुः, उच्चैस्तरां च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठमतिचिरं विक्रुश्य 'वत्से भवत्विदानीम्' इति भ्रात्रा करस्थगितमुखी समाश्वास्यमानापि,

---

महत्तरी' इति वैजयन्ती। हलहलकः सम्भ्रमः। किमङ्गीकृत्य किं निमित्तीकृत्य। रससि शब्दयसि।

पारिहार्यं वलयम्। स्थूलप्रवाहमुत्सृजन्तीति प्रथमान्तः पाठः। भवतु

कल्याणि! कुरु वचनमग्रजस्य गुरोः' इत्याचार्येणोच्यमानापि, 'देवि! न पश्यसि देवस्यावस्थाम् अलमलम् अतिरुदितेन' इति राजलोकेन अभ्यर्थ्यमानाऽपि, 'स्वामिनि! भ्रातरमवेक्षस्व' इति विज्ञाप्यमानाऽपि परिजनेन, 'दुहितः! विश्रम्य पुनरारटिष्यसि' इति निवार्यमाणापि बान्धववृद्धाभिः, 'प्रियसखि! कियद्रोदिषि, तूष्णीमास्स्व, दूयते देवः' इति सखीभिरनुनीयमानापि चिरतरसम्भावितानेकदुःखनिवह-निर्वापणबाष्पोत्पीडपीड्यमानकण्ठभागा, प्रभूतमन्युभारभरितान्तःकरणा करुणोत्पीडितेन स्वरेण कालमतिदीर्घं रुरोद। विगते च मन्युवेगे बहोः समीपादाकृष्य भ्रात्रा नीता निकटवर्तिनि तरुतले निषसाद।

आचार्यस्तु तदा श्रीहर्ष इति विज्ञाय विवर्धितादरः सुतरां मुहूर्तमिवातिवाह्य संज्ञाज्ञापितेन शिष्येणोपनीतं नलिनदलैः स्वयमाहृत्य नम्रो मुखप्रक्षालनार्थमुदकमुपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथम-मनवरतरोदनाताम्रं चिरं प्रवृत्ताश्रुजलजातं रक्तपङ्कजवनमिव स्वसुश्चक्षु-र्क्षालयत् पश्चादात्मनः। प्रक्षालितदृशि महीपाले सर्वतो निःशब्दः सम्बभूव सकलो लिखित इव लोकः। ततो नरेन्द्रो मन्दमन्दम् अब्रवीत् स्वसारम्—'वत्से! वन्दस्व अत्रभवन्तं भदन्तम्। एष ते भर्तुर्द्वितीयं हृदयम् अस्माकं च गुरुः' इति राजवचनाच्च राजदुहितरि पति-परिचयश्रवणोद्घातेन तेन पुनरानीतनयनपयसि नमस्यन्त्याम् आचार्यः प्रयत्नरक्षितागतबाष्पाम्भस्सम्भारभज्यमानकण्ठधमनिः आर्द्रलोचनः किञ्चित् परावृत्तवदनो दीर्घं निशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुपदमधुरया वाचा व्याजहार—'कल्याणराशे! रुदित्वा न चिरं कालमास्ते लोकः। क्रियताम् अवश्यकरणीयः स्नान-विधिः। स्नात्वा चागम्यतां सैव भूयो भूमिः' इति।

---

अलमर्थमव्ययमिदम्। आचार्येणोच्यमानापीति पाठः।

उद्घातेन प्रस्तावेन। भज्यमानम् आक्रम्यमाणम् इत्यर्थः। धमनिः सिरा। सैव भूयो भूमिरिति पाठः।

अथ भूपतिरनुरुध्यमानो लौकिकमाचारमाचार्यवचनं च उत्थाय स्नात्वा गिरिसरिति सह स्वस्रा *तामेव भूमिमयासीत्। तस्यां च सपरिजनां प्रथममाहितावधानः पार्श्ववर्ती चिरं परवतीं शुचा परिगतां प्रतिपिण्डदर्शितप्रयत्नप्रतिपन्नाभ्यवहरणां भगिनीमभोजयत्। अनन्तरं च स्वयमाहारस्थितिमकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कन्याकुब्जाद्गौडसम्भ्रमे गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्कासनं, निर्गतायाश्च तस्या राज्यवर्धनमरणश्रवणं श्रुत्वा च आहारनिराकरणं, निराहारायाश्च विन्ध्याटवीपर्यटनखेदं, पर्यटनखेदजातनिर्वेदायाश्च पावकप्रवेशोपक्रमं यावत् सर्वमशृणोत् परिजनतः। ततः सुखासीनम् एकत्र तरुतले विभक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविनं राजानम् आचार्यः समुपसृत्य शनैरुपासाञ्चक्रे। स्थित्वा च तस्मिन् कश्चित् कालांशं लेशतो वक्तुमुपचक्रमे— 'श्रीमन्! आकर्ण्यताम्। आख्येयम् अस्ति नः किञ्चित्। अयं हि यौवनोन्मदात् परिभूय भूयसीर्भार्या यौवनावतारतरलतरास्तारुण्ये तारकराजो रजनीकर्णपूरः पुरा पुरुहूत-पुरोधसो धिषणस्य पुरन्ध्रीं धर्मपत्नीं पत्नीयन्नतितरलः तारां नाम अपजहार। नाकतश्च पलायाञ्चक्रे। चकोरलोचनया च तया सर्वाकाराभिरामया रममाणो रमणीयेषु देशेषु विचचार। चिराच्च कथञ्चित् सर्वगीर्वाणवचनगौरवाद् गिरां पत्युः पुनरपि प्रत्यर्पयामास ताम्। हृदयेन त्वदधात विरहे वरारोहायास्तस्याः सततम्। एकदा तु शैलादुदयमानो विमले वारिणि वरुणालयस्य सङ्क्रान्त-मात्मनः प्रतिबिम्बं विलोकितवान्। दृष्ट्वा च तत्तदा सस्मरः सस्मार

---

तामेव भुवं प्रति इति शेषः। अभ्यवहरणं भोजनम्। आहारस्थितिं भोजनविधिम्। गुप्तितः कारागृहात्। निष्कासनं निर्गमनम्। निराकरणं वर्जनम्। प्रवेशोपक्रमं यावत् प्रवेशोपक्रमावधिकम्। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः। उपासाञ्चक्रे समीपे निषण्णवान्। लेशतः अल्पेन, अविस्तरेण इत्यर्थः। धिषणस्य बृहस्पतेः। पत्नीयन् पत्नीमात्मन इच्छन्।

---

*'तामेवायासी'दिति स्याद् व्याख्यानुसारी पाठः।

स्मेरगण्डस्थलस्य तारापा मुखस्य । मुमोच च मन्मथोन्माथमथ्यमानमानसोऽस्वस्थः स्थवीयसः पीतसकलकुमुदवनप्रभाप्रवाहधवलधाराभ्यामिव लोचनाभ्यां बाष्पवारिबिन्दून् । अथ पतत एव तानुदन्वति समस्तानाचेमुर्मुक्ताशुक्तयः । तासां च कुक्षिकोशेषु मुक्ताफलीभूतानवाप तान् कथमपि रसातलनिवासी वासुकिर्विषमुचामधीशः । स च तैः मुक्ताफलैः पातालेऽपि तारागणमिव दर्शयद्भिः एकावलीमकल्पयत् । चकार च मन्दाकिनीति नाम तस्याः । सा च भगवतः सोमस्य सर्वासामोषधीनामधिपतेः प्रभावादत्यन्तं विषघ्नी हिमामृतसम्भवाच्च स्पर्शनेन सर्वसत्त्वानां सन्तापहारिणी बभूव । यतः स तां सर्वदा विषोष्मशान्तये वासुकिः पर्यधत्त । समतिक्रान्ते च कियत्यपि काले कदाचित् ताम् एकावलीं तस्मान्नागराजाद् नागार्जुनो नाम नागैरेव नीतः पातालतलं भिक्षुरभिक्षत । लेभे च । निर्गत्य च रसातलात् त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे ददौ । सा च अस्माकं कालेन कथमपि शिष्यपरम्परया हस्तमागता । यद्यपि परिभव इव भवादृशां दत्रिम उपचारस्तथापि औषधबुद्ध्या बुद्धिमता सर्वसत्त्वराशिशिक्षाप्रवृत्तेन रक्षणीयशरीरेण आयुष्मतापि विषरक्षापेक्षया गृह्यताम्' इत्यभिधाय भिक्षोरभ्याश एव वर्तिनः चीरपटान्तरसश्चया-न्मुमोच ताम् एकावलीम् मन्दाकिनीम् ।

---

अस्वस्थः असुखी । आचेमुः पीतवत्य इत्यर्थः । मुक्ताशुक्तयः मुक्तोत्पत्तिशुक्तयः । पर्यधत्त धृतवान् । भिक्षुः बौद्धः । अभिक्षत याचितवान् । 'भिक्ष याच्ञायाम्' इति धातुः । त्रिसमुद्राधिपतये उत्तरसमुद्रमन्तरेण इतरेषां त्रयाणां समुद्राणामधिपतये । उत्तरसमुद्रप्रदेशस्तु देवक्षेत्रत्वान्मनुष्याणाम् अविषय इति भावः । अत्र बह्वृचब्राह्मणम्— ('देवक्षेत्रं हि वैन्तमर्त्यो हेतुमर्हति'?) इति । हिमवद्दक्षिणसमुद्रान्तरं चक्रवर्तिक्षेत्रमिति पौराणिकाः । चतुःसमुद्राधिपतये इत्येवमादीनि वचनानि अर्थवाद एव । दत्रिमः दानेन निर्वृत्तः ।

उन्मुच्यमान एव यस्याः प्रभालेपिनि लब्धावकाशे विशदमहसि महीयसि विसर्पति रश्मिमण्डले युगपद्धवलायमानेषु दिङ्मुखेषु, मुकुलितलतावधूत्कण्ठितैरामूलाद्विकसितमिव वनतरुभिः, अभिनवमृणाललुब्धैः धावितमिव विधुतपक्षपुटपटलधवलितगगनं वनसरसि हंसयूथैः, स्फुटितमिव भरवशविशीर्यमाणधूलीववलगर्भभेदसूचितसूचीसञ्चयशुचिभिः केतकीवाटैः, उद्दलद्दलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिः, विधुतसटाभारभरितदिक्चक्रैश्चरितमिव केसरिकुलैः, प्रहसितमिव सितदशनांशुमालालोकलिप्यमानवनं वनदेवताभिः, विकसितमिव शिथिलितकुसुमकोशकेसराट्टहासनिरङ्कुशं काशकाननैः, भ्रमितमिव सम्भ्रमभ्रमितबालपल्लवश्वेतायमानैः चमरीकदम्बकैः, प्रसृतमिव स्फायमानफेनानिलतरलतरङ्गेण गिरिनदीपूरेण, अपरतारागणलाभलोभाद् उदितमिव च विकचमरीचिचक्राक्रान्तककुभा पूर्णचन्द्रेण, प्रक्षालित इव च दावानलधूसरितदिगन्तरो दिवसः, पुनरिव धौतानि बाष्पायतक्लिष्टानि नारीणां मुखानि ।

राजा तु तस्या मांसलैर्मयूखैः आकुलीक्रियमाणो मुहुर्मुहुः सन्मीलयंश्चक्षुः कथमपि प्रयत्नाद् ददर्श सर्वाशापरिपूरणीं, पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिं, घनमुक्तां शारदामिव लेखीकृतां ज्योत्स्नां, प्रकटपदकचिह्नां सञ्चरणवीथीमिव बालेन्दोः, निश्चलीभूतां सप्तर्षिमालामिव

---

प्रभालेपिनि स्वप्रभया सर्ववस्तूनि विलिम्पति । मुकुलिता सञ्जातमुकुला । वधूपक्षे कामपारवश्येन मुकुलितमुखनयना स्त्री मुकुलितेति व्यपदिश्यते । उपभोगक्षमावस्थां प्राप्तेति यावत् । विकसितं पुष्पीभूतम्, हृष्टमिति च । सूची सूच्याकारं कुड्मलम् । केतकीवाटैः केतकीवृतिभिः, केतकोद्यानैरिति वा । बालपल्लवं पुच्छं बालस्तबकं वा । स्फायमानः वर्धमानः । धौतानि क्षालितानि ।

मांसलैः स्थूलैः । आशापूरणीं रत्नप्रभावाद् याचितार्थप्रदां, दिग्व्यापिनीं च । घनमुक्तां स्थूलमौक्तिकां, मेघनिर्मुक्तां च । पदकं मुखबन्धः (പതക്കം) । अन्यत्र पदाङ्कः (താളിൽപട്ട ചിറ്റടി) । निश्चलीभूतां त्रासादिमणिदोष-

हस्तमुक्ताम्, अभिभूतसकलभुवनभूषणभूतिप्रभावाम् ऐशानीमिव शशिकलां, धवलां गुणपरिगृहीतां कीर्तिमिव निर्गतां क्षीरराशेः, अनेकमहामहीभृत्पर-म्परागतां गङ्गामिव दुर्गतिहराम्, अनवरतस्फुरिततरलांशुकान्तां पुरःसर-पताकामिव परमेश्वरपदागमस्य, घनसारशुक्लां दन्तपङ्क्तिमिव अभिमुखस्यै-श्वर्यस्य, वरमनोरथपूरणसमर्थां स्वयंवरस्रजमिव भुवनश्रियः, निजकरपल्लवा-वरणदुर्लक्षां चक्षूरागविहसितिकामिव वसुधायाः, मन्त्रकोशसाधनप्रवृत्तस्य

---

रहिततया स्थिरतेजसमित्यर्थः। अथैकत्र अवस्थानाच्चलनरहिताम्। अन्यत्र चलनरहिताम्। हस्तमुक्तां हस्तक्षिप्तामित्यर्थः। अन्यत्र हस्ताख्यनक्षत्रात् संभृतामित्यर्थः। हस्तः (०००००)। अभिभूतसकलभुवनभूषणभूतिप्रभावाम् अभिभूतौ सकलभुवनेषु विद्यमानानां भूषणानां भूतिप्रभावौ सम्पन्महत्त्वे यया। अन्यत्र अभिभूतः सकलो भुवनभूषणस्य भुवनानां भूषणभूताया भूतेरीश्वरालेपन-भस्मनः प्रभावो यया। हरमौलिचन्द्रलेखा स्वतेजसा हरालेपनभसधवलताम् अधरीकृतवतीत्यर्थः। अभिभूतसकलभवभूषणभूतिप्रभावाम् इति च पाठः। अभिभूतौ सकलानां भवानां भद्राणां भूषणानां भूतिप्रभावौ यया। अन्यत्र अभिभूतः सकलो भवस्य देवस्य भूषणभूताया भूतेर्भस्मनः प्रभावो यया। 'भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु' इति वैजयन्ती। महीभृद् राजा, हिमवत्पर्वतश्च। परम्परा(परि)गतां परम्पराक्रमं परिगतां, परिभोगगतां च। दुर्गतिहरां रत्नप्रभावाद् दारिद्र्यनाशिनीं, नरकहरां च। अनवरतस्फुरित-तरलांशुकान्तां अनवरतस्फुरितैः तरलस्य नायकरत्नस्यांशुभिः कान्ताम्। अन्यत्र अनवरतस्फुरितं सन्ततचलितं तरलस्य लोलस्य अंशुकस्य ध्वजपटस्यान्तं (रूपं?) यस्याः। परमेश्वरपदं चक्रवर्तिपदम्। घनसारशुक्लां कर्पूरधवलाम्, उभयत्र समानम्। वरमनोरथपूरणम् इष्टकामपूरणम्, जामातृवाञ्छितपूरणं च। करपल्लवः किरणविस्तारो हस्तकिसलयम्। आवरणं वेष्टनं, छादनं च। चक्षूरागः स्त्रीपुंसयोः प्रथमदर्शनजायमानः स्नेहोद्भेदः। विहसतिका मन्दहासः। मन्त्रकोशसाधनप्रवृत्तस्य मन्त्रेण कोशेषु साधनेषु च प्रवृत्तस्य, अर्थसञ्चयेषु

---

*'हरपरम्परापरिगतां'मिति व्याख्यानुसारी पाठः।

अक्षमालामिव राजधर्मस्य, समुद्रालङ्कारभूतां सङ्ख्यालेख्यपट्टिकामिव कुबेरकोशस्य तां मन्दाकिनीम् । पश्यंश्च तां विस्मयमाजगाम मनसा सुचिरम् । आचार्यस्तु तामुद्धृत्य बबन्ध च बन्धुरे स्कन्धभागे भूपतेः । अथ नरपतिः प्रतिप्रीतिमुपदर्शयन् प्रत्यवादीत्— 'आचार्य ! रत्नानां मीदृशानामनर्हा एवंप्रायाः पुरुषाः । तपस्सिद्धिरियमार्यस्य देवताप्रसादो वा । के वयमिदानीमात्मनोऽपि किमुत ग्रहणस्य प्रत्याख्यानस्य वा । दर्शनात् प्रभृति प्रभूतगुरुगुणगणगृहीतेन हृदयेन सङ्कल्पितमिदमामरणाद् आचार्योपयोगाय शरीरम् । अत्र कामचारो वः कर्तव्यानाम्' इति ।

समतिक्रान्ते च कियत्यपि काले गते च एकावलीवर्णनालापे लोकस्य अन्तरं लब्ध्वा विस्रब्धे भ्रातरि राज्यवती ताम्बूलवाहिनीं पत्रलतामाहूयोपांशु किमपि कर्णजाहे शनैश्शनैरादिदेश । दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्— 'देव ! देवी विज्ञापयति न स्मरामि आर्यस्य पुरः कदाचिदुच्चैर्व्याहृतमपि । कुतो विज्ञापना । इयं हि शुचामसह्यता व्याहारयति । हतदैवदत्ता दशा शिथिलयति विनयम् । अबलानां हि प्रायशः पतिरपत्यं वा अवलम्बनम् । उभय-

---

चतुरङ्गबलसम्पादनेषु च प्रवृत्तस्य इत्यर्थः । अथवा मन्त्रकोशसाधने धनार्जने प्रवृत्तस्य । मन्त्रकोशसाधनेत्युक्ते जप्यसमूहानुष्ठानमिति च गम्यते । समुद्रालङ्कारभूतां समुद्रान्तर्गतस्य देशस्यालङ्कारभूतां, समुद्रे जातत्वात् समुद्रस्य अलङ्कारभूतामिति वा । अन्यत्र मुद्रासहितालङ्कारप्राप्ताम् । मुद्रया बद्धेनालङ्कारेण सह कोशस्य अन्तर्निहितामित्यर्थः । 'आसादितं च भूतं च' इत्यमरः । सङ्ख्यालेख्यपट्टिकाम्, अन्तर्निहितानां वसूनामियत्ताज्ञानाय तत्सङ्ख्यासूचकाक्षरयुक्ता पट्टिका सङ्ख्यालेख्यपट्टिका । कोशस्य धनसमूहस्य । बन्धुरे सुन्दरे ।

राज्यवती, एतद् राज्यश्रियो नामान्तरम् । उत्तरत्रापि वक्ष्यते । 'राज्यवतीप्राप्तिव्यतिकरकथाम्' इति । कर्णजाहे कर्णमूले । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' (पा०सू० ५.२.२४)इति जाहच्प्रत्ययः । व्याहृतं भाषितम् ।

विकलानां तु दुःखानलेऽन्धनायमानं प्राणितमशालीनत्वमेव तु केवलम्। आर्योपगमनेन कृतोऽपि प्रतिहतो मरणयत्नः। अतः काषायग्रहणाभ्यनुज्ञाज्ञयानुगृह्यतामयम् अपुण्यभाजनं जनः' इति। जनाधिपस्तु तदाकर्ण्य तूष्णीमेवातिष्ठत।

अथाचार्यः सुधीरमभ्यधात्— 'आयुष्मति! शोको हि नाम पर्यायः पिशाचस्य, रूपान्तरम् आक्षेपस्य, तारुण्यं तमसः, विशेषो विषस्य, अनन्तकः प्रेतनगरनायकः। अयम् अनिर्वृतिधर्मा दहनः। अयम् अक्षयो राजयक्ष्मा। अयम् अलक्ष्मीनिवासो जनार्दनः। अयम् अपुण्यप्रवृत्तः क्षपणकः। अयम् अप्रतिबोधो निद्राप्रकारः। अयम् अनलसधर्मा सन्निपातः। अयम् अशिवसहचरो

---

प्राणितं जीवितम्। अशालीनत्वं धार्ष्ट्यम्। कृतः कृतप्रायः।

पर्यायः एकार्थः शब्दः। आक्षेपस्य भ्रान्तेः। अनन्तकः अन्तकादन्यः। प्रेतनगरनायकः प्रेतनगरपतिः, यम इत्यर्थः। अक्षयः अनाशः। राजयक्ष्मा, शोकस्तु राजयक्ष्मसधर्मत्वाद् राजयक्ष्मेति व्यपदिश्यते। अलक्ष्मीनिवासः न लक्ष्म्या निवासभूतो भवतीति अलक्ष्मीनिवासः। जनार्दनः विष्णुः। जनार्दनश्चेल्लक्ष्मीनिवास एव भवतीति भावः। मुख्यार्थः— अलक्ष्मीनिवासः अश्रियो निवासभूतः। जनार्दनः जनानाम् अर्दनः। 'अर्द हिंसायाम्' इति धातुः। अपुण्यप्रवृत्तः अपुण्येषु पापकर्मसु प्रवृत्तः। क्षपणकः आर्हतः। आर्हतश्चेद् हिंसादिषु पापकर्मसु न प्रवर्तते इति भावः। मुख्यार्थः— अपुण्यप्रवृत्तः पापपरिपाकेनोद्भूतः। क्षपणकः कार्श्यकरः। अप्रतिबोधः जागरणरहितः। निद्राप्रकारः निद्राभेदः। मुख्यार्थः— अप्रतिबोधः प्रतिसङ्ख्यानशक्तिरहित इत्यर्थः। निद्राप्रकारः निद्रासदृशः। 'प्रकारौ भेदसादृश्ये' इत्यमरः। अनलसधर्मा अनलस्वभावः। सन्निपातः ज्वरविशेषः। सन्निपातश्चेत् शरीरालस्यकर एव भवतीति भावः। मुख्यार्थः— अनलसधर्मा अनलेनाग्निना सधर्मा। सन्निपातः सन्निपत्यतेऽनेनेति करणे घञ्। सम्यङ्निपातहेतुरित्यर्थः। सन्निपातसधर्मत्वात् सन्निपात इति व्यपदिश्यते वा। अशिवसहचरः न शिवेन

विनायकः । अयम् अबुधसेवितो ग्रहमार्गः । अयम् अयोगसमुत्थो ज्योतिष्प्रकारः । अयम् स्नेहाद् वायुप्रकोपः, मानसाद् अग्निसम्भवः आर्द्रभावाद् रजःक्षोभः, रसाद् अतिशोषः, रागात् कालपरिणामः ।

---

सह चरतीति अशिवसहचरः । शिववियुक्त इत्यर्थः । विनायकः गणपतिः । विनायकश्चेद् हरेण सह चरतीति भावः । मुख्यार्थः— अशिवेन अकल्याणेन सह वर्तमानः । विनायको विगतनायकः, नेतृरहितः, अन्यैर्नाशयितुमशक्य इत्यर्थः । अथवा विविधं नेता । अबुधसेवितः न बुधेन ग्रहेण सेवितः । ग्रहमार्गः आकाशः । मुख्यार्थः— अबुधसेवितः अविद्वत्सेवितः । अविद्वांस एव शोकैरभिभूयन्त इत्यर्थः । ग्रहमार्गः पिशाचप्रकृतिरित्यर्थः । अयोगसमुत्थः काष्ठादीनां परस्परासङ्घट्टनेन जातः । ज्योतिष्प्रकारः अग्निभेदः । मुख्यार्थः— अयोगसमुत्थः वियोगोद्भूतः । अथवा अयोगेन प्रतिकूलदैवेन सम्भूतो ज्योतिष्प्रकारः अग्निसदृशः । स्नेहात् तैलात् । वायुप्रकोपः वातरोगोत्कर्षः । वातरोगशमकरात् तैलाद् वातरोगोत्कर्षो विरुद्ध इति भावः । मुख्यार्थः— स्नेहात् सङ्गाद् वायुप्रकोपः भ्रान्तिप्राकट्यम् । मानसात् मानससरसः । मानस-शब्देन तद्गतजलं लक्ष्यते । अग्निसम्भवः अग्न्युत्पत्तिः । वह्निशमकरान्मानसाद् वह्न्युद्भवो विरुद्धः । मुख्यार्थः— मानसात् चित्ताद् अग्निसम्भवः । अग्निसधर्मतया शोकोऽप्यग्नित्वेन व्यपदिश्यते । आर्द्रभावाद् जलसेकार्द्रात् पदार्थात् । रजः-क्षोभः धूलिसञ्चलनम् । मुख्यार्थः— आर्द्रभावाद् बन्धुषु आर्द्रचित्ततया । रजः-क्षोभः रजोगुणोद्रेकः । रजोगुणोद्रेक एव शोक इत्यर्थः । रसाद् आर्द्रवस्तुनः जलाद् अतिशोषः शुष्कता । मुख्यार्थः— रसात् सङ्गात् । शोषः शरीर-शोषः । शोकविकार एव शोष इति भावः । रागाद् रक्ततायाः । काल-परिणामः कार्ष्ण्यपरिणामः । अत्र कालशब्दः कालिमगुणवाची, गुणवाचिनां शब्दानां गुणिष्वपि वृत्तिदर्शनाद् 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति शुक्लादिशब्दानां गुणगुणिनोर्वाचकत्वे लिङ्गवृत्तिभेदं दर्शयता अमरसिंहेन उक्तम् । कालशब्दश्च शुक्लादिष्वन्तर्भूतः । मुख्यार्थः— रागात् क्लेशात् कालपरिणाम आयुःक्षयः । अथवा कालस्य मृत्योः परिणामः । तदस्येत्यत्र अस्यशब्दस्य आपातमित्युत्तरत्र सम्बन्धः । अस्य शोकस्य अस्रम् अश्रु रक्तं वा ।

तदस्य अजस्रास्रस्राविणो हृदयमहाव्रणस्य, बहुलदोषान्धकारलब्धप्रवेश-प्रसरस्य प्राणतस्करस्य, शून्यताहेतोः महाभूतग्रामघातकस्य, सकल-विग्रहक्षपणदक्षस्य दोषचक्रवर्तिनः, कासश्वासप्रलापोपद्रवबहुलस्य दीर्घरोगस्य, असद्ग्रहसमुत्थितस्य सकललोकक्षयधूमकेतोः, जीवनापहार-दक्षिणक्षणकचेः अनभ्रवज्रपातस्य, स्फुरदनवद्यविद्याविद्युद्द्योतमानानि गहनग्रन्थग्रन्थिगूढगर्भग्रहणगम्भीराणि भूरिकार्यकथाकठोराणि बहु-शास्त्रोद्वहनबृहन्ति विदुषामपि हृदयानि नालं सोढुमापातं, किंपुनः नवनवमालिकाकुसुमकोमलानां सरसबिसतन्तुदुर्बलानामबलानां हृदयम्।

एवं सति सत्यव्रते! वद किमत्र क्रियते, क उपालभ्यते, कस्य पुरस्तादुच्चैराक्रन्द्यते, हृदयदाहि दुःखं वा ख्याप्यते। सर्वम् अक्षिणी निमील्य सोढव्यं मूढेन मर्त्यधर्मणा। पुण्यवति! पुरातन्यः प्रवृत्तय एताः केन शक्यन्तेऽन्यथाकर्तुम्। संसरन्ति नक्तन्दिवं द्राघीयस्यो

---

महाव्रणस्य महाव्रणभूतस्य, महतो व्रणस्येति च। बहुलदोषान्धकारः बहुपापाख्यान्धकारः। अन्यत्र बहुलपक्षरात्रिष्वन्धकारः। प्रसरः व्याप्तिः। प्राणतस्करस्य, तस्करशब्देन अपहर्ता लक्ष्यते, चोरश्च ध्वन्यते। शून्यता कर्तव्यमूढता, जनरिक्तता च। महाभूतग्राम ........ एवोच्यते इति केचित्। ग्रामशब्देन नगरविशेषश्च ध्वन्यते। सकलविग्रहक्षपणम् .... अन्यत्र सकलानां विग्रहस्य परस्परजनितविरोधस्य शमनम्। चक्रवर्ती इह सर्वेषां राज्ञां शरण्यः परस्परविरोधं शमयति। उक्तं च— 'नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते।' इति। व्या(धि?धे)श्च वाह्यत्वादेवमुक्तम्। असद्ग्रहः असद्भिः असाधुभिर्ग्रहः सम्बन्धः। अथवा असद्रूपाभिनिवेशः। अन्यत्र असद्ग्रहाः अङ्गारराहुशनैश्चराः। धूमकेतोः अग्नेः, धूमकेतुशब्देनोत्पातश्च। जीवनं प्राणः, जलं च। वज्रपातस्य वज्रपातभूतस्य। वज्रशब्देनाशनिश्च। उद्योतः ज्ञानं, दीप्तिश्च। आपातम् आगतिम्। नवमालिका सप्तला।

सत्यव्रते! एतद् राज्यश्रियः सम्बोधनम्। मर्त्यधर्मणा, मरणस्वभावेन इति भावः। संसरन्तीत्यादिकस्य ग्रन्थस्य एते पदार्थस्वभावाः एत-द्बुद्ध्यानुसन्धाय विवेके स्थातव्यमित्यभिप्रायः। संसरन्ति सततं प्रवर्तन्ते।

जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः सर्वपञ्चजनानां पञ्चमहाभूतपञ्चकुलाधिष्ठितान्तःकरणव्यवहारदर्शननिपुणाः सर्वङ्कषा विषमा धर्मराजधर्मस्थितयः। क्षणमप्यक्षममाणा गलन्त्यायुष्कालकलनकुशला निलये निलये कालनाडिकाः। जगति सर्वजन्तुजीवोपहारपातिनी सञ्चरति चण्डिकेव यमाज्ञा। रटन्त्यनवरतम् अखिलप्राणिप्रयाणप्रकटनपटवः प्रेतपतिपटहाः। पर्यटन्ति पेटकैः प्रतिपुरं प्रलयलोहलोहिताक्षाः कालकूटकान्तिकालकायाः कपालपाशपाणयः कालपुरुषाः। प्रतिभवनं भ्रमन्ति भीषणकिङ्करकरघट्टितयमघण्टापुटपटुतरटङ्कारभयङ्कराः सर्वसत्त्वसङ्घसंहरणाय घोरघातघोषणाः। दिशि दिशि वहन्ति बहुचिताधूमधूसरितप्रेतपताकापटपतितगृध्रदृष्टयः कष्टशोकाकुलकुटुम्बिनीविशीर्णकेशपाशशबलशवशिबिकासहस्रसङ्कुलाः। किलिकिलायमानश्मशानशिबिरशिवाशावकाः

---

जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः, घटनम् अनुवृत्तिः। घटीयन्त्रं कलशीयुक्तं यन्त्रम्। जन्मजरामरणघटनाख्या घटीयन्त्रराजिरज्जव इत्यर्थः। पञ्चजनानां पुरुषाणाम्। पञ्चमहाभूतेत्यादि— पञ्चमहाभूतमहाकुलं पञ्चमहाभूताख्यं पञ्चकुलम्। पञ्चकुलशब्देन वादिप्रतिवादिसदस्यलेखकप्राड्विवाका उच्यन्ते। अधिष्ठितम् आक्रान्तम् आवृत्तमित्यर्थः। अन्तःकरणं मनोबुद्ध्यहङ्काराः। व्यवहारदर्शनम् आचारानुसन्धानं, विवादानुसन्धानं च। सर्वङ्कषा अपक्षपातेन सर्वेषामपि बाधिका। धर्मराजधर्मस्थितयः यमस्य धर्ममर्यादाः। धार्मिकस्य राज्ञो धर्मस्थितय इति च। क्षणमित्यादि— अक्षममाणाः निलये इति सम्बन्धः। अक्षममाणा असमर्थाः। आयुष्कालकलनम् आयुष्कालगणनम्। निलये निलयने। कालनाडिकाः कालनाड्यः (ठ०ग्रा०क)। नालिकाशब्देन मानोपकरणं च ध्वन्यते (ठ०ग्रा)। जीवोपहारपातिनी प्राणाख्योपहारदानवती। रटन्ति शब्दायन्ते। प्राणिप्रयाणं प्राणिनां प्रेतनगरमुद्दिश्य प्रयाणम्। पेटकैः समूहैः, पुञ्जीभावैरित्यर्थः। कालकूटकान्तिकालकायाः कालकूटाख्यस्य विषस्य कान्तिवत् कालकायाः। घातघोषणाः घातार्थं घोषणाः। दिशीत्यादि— अत्र प्रसिद्धमार्गेषु विद्यमाना याः पताकाः शिबिकाः ताः प्रेतमार्गेऽपि सन्तीत्युक्तमनुसन्धेयम्। वहन्ति प्रवर्तन्ते। श्मशानशिबिरशिवाशावकाः श्मशानमेव

परलोकसंवसथपथिकप्रस्थानरथ्यावीथयः । सकललोककवलावलोपन-लम्पटा बहुला वहंलिहा लेढि लोहितचिता चिताङ्गारकाली कालरात्रि-जिह्वा जीवितानि जीविनाम् । तृप्तिमशिक्षिता च भगवतः सर्वभूतभुजो बुभुक्षा मृत्योः । अतिद्रुतवाहिनी च अनित्यतानदी । क्षणिका महा-भूतग्रामगोष्ठ्यः । गात्रिषु भङ्गुराणि गात्रयन्त्रपञ्जरदारूणि देहिनाम् । अशुभशुभावेशविवशा विशरारवः शरीरनिर्माणपरमाणवः । भिदुरा जीवबन्धनपाशतन्तवः । सर्वात्मना निरीश्वरं विश्वं नश्वरम् । एवमवधृत्य नात्यर्थमेवार्हसि मेधाविनि स्मृतिमाति मनसि तमसः

---

शिबिरं निवासो येषां ते श्मशानशिबिराः । श्मशानवर्तिशिवाशावकाः इति यावत् । परलोकसंवसथपथिकः परलोकाख्यं ग्राममुद्दिश्य गच्छन् पथिकः । 'समौ संवसथग्रामौ' इत्यमरः । परलोकावसथेति च पाठः । परलोकाख्यं गृहमित्यर्थः । सकललोककवलावलोपनलम्पटा सकललोकाख्यस्य कवलस्य अवलोपने लुण्ठने लम्पटा । कवललेपनलम्पटेति च पाठः । कवलस्य लेपने भक्षणे लम्पटेत्यर्थः । 'जेमनं लेप आहारो निघसोऽन्नाद इत्यपि' इत्यमरः । बहुला बहूनामादानं कुर्वन्ती । 'ला आदाने' इति धातोः 'आतोऽनुपसर्गे कः' (पा० सू० ३. २. ३.) इति कप्रत्ययः । बहुलाशब्देन सुरभिश्च ध्वन्यते । वहंलिहा वहः गवां स्कन्धदेशः । 'स्कन्धप्रदेशस्तु वहः' इत्यमरः । वहं लेढीति 'वहाभ्रे लिहः' (पा० सू० ३. २. ३२.) इति खश्प्रत्ययः । ततो वहंलिहेति रूपम् । अयं तु जिह्वाया दैर्घ्यातिशयोक्ति-प्रकारः । सुरभिपक्षे तु स्वकीयस्कन्धमपि लिहन्तीति स्पष्टमेव । लोहित-चिता रुधिरसङ्कुटा । अङ्गारकाली अङ्गारवत् काळवर्णा काळरात्रिः संहार-सम्भवा चण्डी । तृप्तिमशिक्षिता तृप्तिमव्युत्पादिता । अतृप्तिज्ञेत्यर्थः । वाहिनी गामिनी । महाभूतग्रामगोष्ठ्यः महाभूतसङ्घातस्य सम्भूतस्थितयः । गात्रयन्त्रपञ्जरं गात्राख्यं जङ्गमयन्त्रपञ्जरम् । दारुशब्देन अस्थि अभिमतम् । आवेशः अभिनिवेशः, अभिभवो वा । सर्वात्मना सर्वस्वभावेन । तमसः शोकस्य

प्रसरं दातुम्। एको हि प्रतिसङ्ख्यानक्षणो द्वारीभवति धृतेः। अपि च दूरगतेऽपि शोके नन्विदानीमवेक्षणीय एवायं ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुः। इतरथा को न बहुमन्येत कल्याणरूपमिदमीदृशं सङ्कल्पम् अत्रभवत्याः काषायग्रहणकृतम्। अखिलमनोज्वलनप्रशमनकारणं हि भगवती प्रव्रज्या। ज्यायः खल्विदं पदम् आत्मवताम्। महाभागस्तु भनक्ति मनोरथम् अधुना। यदयमादिशति ते तदेवानुष्ठेयम्। यदि ज्ञातिरिति, यदि ज्येष्ठ इति, यदि वत्सल इति, यदि गुणवानिति, यदि राजेति, सर्वथा स्थातव्यमस्य नियोगे' इत्युक्त्वा व्यरंसीत्।

उपरतवचसि च तस्मिन् जगाद नरपतिः— 'आचार्यमपहाय कोऽन्य एवमभिदध्यात्। अनभ्यर्थितदैवनिर्मिता विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य। स्नेहदीप्रमूर्तयो मोहान्धकारध्वंसिनश्च धर्मप्रदीपाः। किन्तु प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथम् अतिप्रीतिरभिलषति। अधीरस्यापि धाष्टर्यमारोपयति हृदयं लघिमलङ्घितम् अतिवल्लभत्वम्। युक्तायुक्तविचारशालीनमपि शिक्षयति स्वार्थतृष्णा प्रागल्भ्यम्। अभ्यर्थनायाश्च रक्षन्ति फलवत्तां जलनिधय इव मर्यादामार्याः। दत्तमेव

---

'तमो राहुस्तमोऽघं शुग्' इति वैजयन्ती। प्रसरम् अवकाशम्। प्रतिसङ्ख्यानक्षणः प्रतिबोधावसरः। दूरगते अतिप्रवृद्धे। अवेक्षणीयः अनुसर्तव्यः। काषायग्रहणकृतामिति षष्ठ्यन्तः केषाञ्चिदभिमतः। ज्यायः उत्तमम्। पदं व्यवसायः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। आत्मवतां सत्त्ववताम्। 'आत्मवान् सत्त्ववानुक्तः' इति उत्पलमाला। भनक्ति छिनत्ति।

अपहाय विना। स्नेहदीप्रमूर्तयः प्रेमोज्ज्वलस्वरूपा इति च। लघिमलङ्घितं लघिम्ना आक्रान्तं, लघिमयुक्तमित्यर्थः। शालीनम् असमर्थम्। शालीनमपि हृदयं शिक्षयतीति सम्बन्धः। अभ्यर्थनायाश्च रक्षन्ति फलवत्तामिति पाठः। रक्षन्ति साधयन्ति, न लङ्घयन्ति च। मर्यादां कूलदेशम्।

च शरीरमिदमनेनाभ्यर्थितेन प्रथममेवातिथ्याय माननीयेन भवता मह्यम्। अतः किञ्चिदभ्यर्थये भगवन्तम्। इयं हि नः स्वसा बाला बहुदुःखखेदिता च सर्वकार्योपरोधेन यावल्लालनीया नित्यम्। अस्माभिश्च भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैर्भूत्वा सकललोकप्रत्यक्षं प्रतिज्ञा कृता। अपूर्वमसमानाभिभवम् असहमानैरर्पित आत्मा कोपस्य। यतो नियुङ्क्तां कियन्तमपि कालमाचार्योऽपि कार्ये मदीये। दीयतामतिथये शरीरमिदम्। अद्यप्रभृति यावदयं जनो लङ्घयति प्रतिज्ञाभारम्, आश्वासयति च तातविनाशदुःखिताः प्रजाः, तावदेनामनुगृह्णन्तु तत्रभवन्तः कथाभिश्च धर्म्याभिः, कुशलप्रतिबोधविधायिभिरुपदेशैश्च अरजोभिः, शीलोपशमनदायिनीभिश्च धर्मदेशनाभिः, क्लेशप्रहाणहेतुभूतैश्च ताथागतैर्दर्शनैः। अस्मत्पार्श्वोपयायिनीमेव प्रतिबोध्यमानामिच्छामि। इयं तु ग्रहीष्यति मयैव समं समाप्तकृत्येन काषायाणि। अर्थिने किमिव नातिसृजन्ति सन्तः। सुरनाथम् आत्मास्थिभिरपि यावत् कृतार्थमकरोद् धैर्योदधिर्दधीचः। बोधिसत्त्व एव च सत्त्वेभ्यः कतिकृत्वो दत्तवानात्मानम्। अपि च भवन्त एव बहुतरं संविद्रते' इत्युक्त्वा तूष्णींबभूव भूपः।

---

कार्योपरोधेन कार्योपेक्षयेत्यर्थः। यावद् अवधारणे। नियुङ्क्तां नियोगं करोतु। लङ्घयति अतिक्रामति। धर्म्याभिः धर्मोपेताभिः। क्लेशः दुःखम्। 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा' इति केचित्। प्रहाणं मोक्षणम्। ताथागतैः तथागतस्य बुद्धस्य सम्बन्धिभिः। दर्शनैः सिद्धान्तैः। अतिसृजन्ति वितरन्ति। सुरनाथमित्यादि— आत्मास्थिभिर्यावद् यावच्छब्दोऽवधारणे। आत्मास्थिदानेनैव इत्यर्थः। पुरा दधीचो नाम ऋषिः देवेन्द्रेण याचितः तस्यायुधविधानार्थं आत्मास्थीनि ददौ इति कथा। बोधिसत्त्वः बुद्धमुनिः सत्त्वेभ्यः प्राणिभ्यः। संविद्रते जानन्ति। विदेर्धातोरकर्मकादित्यधिकारे 'समो गम्यृच्छिभ्याम्' (पा० सू० १. ३. २९.) इत्यात्मनेपदम्। 'वेत्तेर्विभाषा'

भूयस्तु बभाषे भदन्तः— 'भव्या न द्विरुच्चारयन्ति वाचम्। चेतसा प्रथममेव प्रतिग्राहिता गुणास्तावकाः कायकलिमिमम् अमुना जनेन। उपयोगस्तु निरुपयोगस्यास्य लघुनि गुरुणि वा कृत्ये गुणवदायत्तः' इति। अथ तस्मिन्नभिनन्दितप्रणये सम्प्रीयमाणः पार्थिवः तत्र तामुषित्वा विभावरीम् उषसि वसनादिप्रदानपरितोषितं विसर्ज्य निर्घातम् आचार्येण सह स्वसारमादाय कतिपयैरेव प्रयाणकैः कटकमनुजाह्नवि निविष्टं प्रत्याजगाम।

तत्र च राज्यश्रीप्राप्तिव्यतिकरकथां कथयत्येव तस्मिन् प्रणयिभ्यो रविरवततार गगनतलात्। बहलमधुपङ्कपिङ्गलः पङ्कजाकर इव सञ्चुकोच चक्रवाकवल्लभो वासरः। विप्रकीर्णानि नवरुधिरप्रसरारुणवर्णानि लोकालोकजूंषि यजूंषीव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि पूषा पापमुषि पुनरपि सञ्जहार जालकानि रोचिषाम्। क्रमेण च

---

(पा० सू० ७. १. ७.) इति रुडागमः। संविदत इति च पाठः। एतद् रुडागमाभावपक्षे रूपम्।

चेतसेत्यादि— अमुना जनेन चेतसा(वकाश?तावका)गुणा इमं कायकलिं प्रतिग्राहिताः, त्वमात्मगुणैरस्य जनस्य इमं कायं स्वशेषं कृतवानित्यर्थः। गुणवदायत्तः गुणवतस्तवायत्तः। प्रणयः याच्ञा। निर्घातं पूर्वागतं परम्। निविष्टं कृतस्थिति।

प्रणयिभ्यः बन्धुभ्यः। मधुपङ्कपिङ्गलः मधुपङ्कवत् पिङ्गलः, मधुपङ्केन पिङ्गलश्च। सञ्चुकोच अल्पावशेषोऽभवत्, मुकुलितश्च। चक्रवाकवल्लभः उभयत्र समानम्। विप्रकीर्णानि विशेषेण प्रकीर्णानि। अन्यत्र विप्रेषु ब्राह्मणेषु कीर्णानि विक्षिप्तानि। प्रसरारुणः प्रसरवदरुणः, प्रसरैररुणश्च। लोकालोकजूंषि लोकालोकपर्वतव्यापीनि, सर्वभुवनव्यापीनि इत्यर्थः। उभयत्र समानम्। कुपितेत्यादि — पुरा हि भगवान् याज्ञवल्क्यः उपाध्यायेन कोपितोऽस्मादधीतानि यजूंषि सरक्तं वदनाद् ववाम इति कथा। सञ्जहार आत्मनि समारोपितवान्।

समुपोह्यमानमांसलपद्मरागरोचिष्णुः उष्णांशुरुष्णीषबन्धबान्धवः सहज-चूडामणिरिव वृकोदरकरपुटोत्पाटितप्रत्यग्रशोणितशोणाङ्गरागरौद्रो द्रौणायनस्य, रुद्रभिक्षादानदक्षमुरमथनमुक्तमुण्डसिरानाडीरुधिरपूरण-कपिलः कपालकर्पर इव च पैतामहः, पितृवधरुषितरामरागविरचितः पृथिवीकण्टककार्तवीर्यांसकूटकुट्टाककुठारतुण्डतष्टद्रुष्टक्षत्रकण्ठकुहरकुल्याप्र-णालसहस्रपूरितो ह्रद इव दूररोधी रौधिरः, भयनिगूढकरचरणमुण्डमण्डला-कृतिगुरुगरुडनखरपञ्जराक्षेपक्षिप्तक्षतजोक्षितो विभावसुकमठ इव च विलोठ-मानो नभसि, अरुणगर्भो मांसपिण्ड इव च खण्डिमानमानीतः

---

उभयत्र समानम् । समुपोह्यमानः पुञ्जीभवन् । मांसलः स्थूलः । पद्मराग-रोचिष्णुः पद्मानां रागवद्रोचिष्णुः । अन्यत्र पद्मरागरत्नवद्रोचिष्णुः । सहजेत्यादि— वृकोदरः भीमसेनः । द्रौणायनस्य अश्वत्थाम्नः । पञ्चद्रौपदेयेषु अश्वत्थाम्ना सौप्तिके निहतेषु कोपातिशयादनशनोपविष्टाया द्रौपद्याः प्रसादार्थं भीमसेनोऽश्वत्थाम्नः शिरोगतं सहजं चूडामणिमुत्पाटितवानिति कथा । रुद्र-भिक्षेत्यादि— दानदक्षः दाननिपुणः । मुण्डं शिरः । सिरा नाडी । पुरा खलु ब्रह्ममहेश्वरयोः परस्परं प्राधान्यमुद्दिश्य अतिमहती स्पर्धा बभूव । ततो भगवान् रुद्रः कोपातिशयाद् ब्रह्मणः पञ्चमं शिरोऽच्छिनत् । अथ तत्पातक-प्रायश्चित्तार्थं किल तदीय एव शिरःकपाले भिक्षामटितवान् । देवतिर्यङ्मनुष्येषु कश्चिदपि तद् भिक्षाप्रदानेन पूरयितुं नाशकत् । ततः परमपुरुषः स्वमुण्डनाडी-मुक्तेन रुधिरेण अपूरयदिति पुराणम् । कपालकर्परः कपालाख्यकर्परः (ഠ।ഠ൦൮°) । 'कटाहः कर्परः' इति वैजयन्ती । रामरागविरचितः रामेण परशुरामेण रागेण मत्सरेण विरचितः । कण्टकः क्षुद्रशत्रुः । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । वृक्षकुट्टाकेति च पाठः । कुट्टाकः छेदकः । कुठारतुण्डं परशुधारा । तष्टः छिन्नः । दूररोधी दूरप्रवृद्ध इत्यर्थः । आक्षेपक्षिप्तः आकर्षणेन क्षिप्तः । विभावसुकमठः— विभावसुर्नाम कश्चिन्मुनिः भ्रातुः सुप्रतीकाभिधानस्य मुनेः शापात् कूर्मत्वं गतोऽमृतापहरणार्थं गच्छता गरुडेन मध्येमार्गं भक्षित इति कथा । खण्डिमानमानीय इति च पाठः ।

कालातिपातदूयमानदाक्षायणीक्षिप्तः तटभुवि सुमेरोः, असुरवधाभिचार-चरुपचनपिशुनः शोणितक्वाथकषायितकुक्षिरलिविशङ्कटः कटाह इव च बार्हस्पत्यः, सद्योगलितगजदानवदेहलोहितावलेपभीषणो मुखमण्डलाभोग इव च महाभैरवस्य मुहूर्तमदृश्यत। जलधिजलप्रतिबिम्बितारविन्द-बिम्बराजिताम्बरान्तावलम्बिनी गृहीतार्द्रमांसेव बभासे वासरावसान-वेताली। विततसन्ध्यारागरज्यमानजलप्रचयः पुनरिव पुराणपुरुष-पीवरोरुसम्पुटपिष्टमधुकैटभरुधिरपटलपाटलवपुरभवद् अधिपतिरर्णसाम्। अवसिते च सन्ध्यासमये समनन्तरमपरिमितयशःपानतृषिताय श्रीहर्षाय मुक्ताशैलचषक इव निजकुलकीर्त्या, कृतयुगकरणोद्यताया आदिराजशतमुद्रा-निवेश इव राजश्रिया, सकलद्वीपविजिगीषया चलिताय श्वेतद्वीपदूत इव च

---

कालातिपातदूयमानदाक्षायणीक्षिप्तः कालातिपात इति कालदैर्घ्यं विवक्षितम्। दाक्षायणी विनता। कालदैर्घ्यसञ्जातेन विषादेन दूयमानया विनतया क्षिप्त इत्यर्थः। असामर्थ्येऽपि खण्डिमानमानीय क्षिप्त इत्येवं सम्बन्धः। ईदृशाः प्रकाराः प्रबन्धान्तरेष्वपि दृश्यन्त एव। यथा— 'रतेर्गृहीतानुनयेन' इत्येव-मादयः। तटभुवि सुमेरोरिति पाठः। पुरा विनता ह्यात्मना सममेककालं प्रसूतायाः कद्र्वाः पुत्रान् उरगान् प्राप्त एव कालेऽण्डाद्विनिर्गतान्, अतिमहति काले गतेऽपि स्वपुत्रावनिर्गतौ च दृष्ट्वा अत्यन्तं व्रीलिता पुत्रार्थिनी च स्वप्रसूतयोरपि अण्डयोरेकमपक्वम् अन्तर्मांसपिण्डप्रायम् अप्रकाशितोरुभागम् अज्ञानात् स्वयं बिभेद। ततो निर्गतो गर्भः सूर्यसारथिररुणोऽभवदिति कथा। इदानीं सूर्यं सुमेरुशिरोगतत्वात् सुमेरोस्तटभुवि रविः क्षिप्तः सोऽरुणमांसपिण्ड इव-इत्युत्प्रेक्षितम्। शोणितक्वाथः शोणितपचनम्। कषायितम् अरुणितम्। बार्हस्पत्यः बृहस्पतिसम्बन्धी। महाभैरवस्य ईश्वरस्य। वेताली पिशाची। ऊरुसम्पुटपिष्टः ऊर्वोर्मध्येन पिष्टः। अधिपतिरर्णसां समुद्रः। मुक्ताशैलचषकः मुक्ताशिलामयश्चषकः। मुद्रानिवेशः मुद्रासन्निवेशः।

आयत्या, श्वेतभानुरुपानीयत निशया नरेन्द्राय । इति ॥

॥ इति श्रीहर्षचरिते राज्यश्रीदर्शनं नाम अष्टम उच्छ्वासः ॥

॥ समाप्तं चैतद् हर्षचरितम् ॥

---

आयत्या उत्तरकालेन । एतेन उत्तरकालभाविनी सम्पल्लक्ष्यते । श्वेतभानुः चन्द्रः ।

इति श्रीरङ्गनाथविरचिते हर्षचरितव्याख्याने अष्टम उच्छ्वासः ।

॥ समाप्तश्चायं हर्षचरितव्याख्यानग्रन्थः ॥

यियासूनां परं पारं साहित्याम्भोनिधेर्नृणाम् ।
तरीरिवैषा व्याख्यैका नित्यमद्भुतकारिणी ॥

॥ शुभमस्तु ॥

## मर्मावबोधिन्यां ग्रन्थान्तरोपात्तवाक्यानि ।

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २ | एकः शब्दः सुष्ठु .... | श्रुतिः | |
| ३ | गौर्गौः कामदुघा .... | काव्यादर्शः | दण्डी |
| ४ | उत्तरं यत् समुद्रस्य.... | विष्णुपुराणम् | |
| ७ | प्रसृतानाकुलश्राव्य .... | काव्यालङ्कारसूत्रम् | आचार्यः (भामहः) |
| ८ | औज्ज्वल्यं कान्तिः ... | काव्यालङ्कारसूत्रम् | वामनः |
| ९ | दूरानुबन्धि .... | | |
| १० | सर्वभाषामयीमाहुः .... | काव्यादर्शः | दण्डी |
| १२ | जयेज्जया .... | दैवम् | देवः |
| १३ | ब्रह्मा स्थाणु .... | महाभारतम् | |
| १३ | मरीच्यत्र्यङ्गिराः ... | | |
| १४ | द्वारं यन्मुक्तिभाजां .... | सूर्यशतकम् | मयूरः |
| १५ | तच्छापशासनपटं .... | | |
| १६ | ब्रह्मलोकश्चेन्द्रलोको .. | | |
| १७ | योगसाधनभूतं .... | | |
| १८ | आत्मनः स्खलने .... | | |
| १८ | विप्रवरा जाल्यन्ते.... | युधिष्ठिरविजयम् | वासुदेवः |
| २४ | सैनसामपध्वंसि .... | | |
| २९ | सर्वेषामेव .... | ब्रह्माण्डपुराणम् | |
| ३१ | भवायेत्यादिभिः .... | | |
| ३१ | बुकः पेणः सुधुर्धूरः | | |
| ३३ | भूयिष्ठं तेज .... | | दिवाकरः |
| ४० | तत्तनयश्च .... | कादम्बरी | बाणभट्टः |
| ४० | यत्सदा प्रेक्षमाणानां.... | | |
| ४० | भृत्यैर्नामास्य .... | | |
| ४१ | दाक्षिण्यं .... | | दिवाकरः |
| ४२ | अभवन् विमदा.... | | |

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ८२ | प्रकृत्यैव ... | | |
| ८१ | स्मितहेतावपि ... | | |
| ८३ | अभिमानमपि ... | | |
| ८३ | स एव स्वानु... | | |
| ८६ | मङ्गलार्थे तु ... | | |
| ८६ | आशुश्शिशानः .... | ऋक्संहिता | |
| ९१ | सदृक्सदृश ... | काव्यादर्शः | दण्डी |
| १०० | क्लेशैरुपहतस्यापि .... | | दिवाकरः |
| १०२ | पुरुषस्यैक ... | | |
| १०२ | पित्रा निसृष्टां.. | रघुवंशम् | कालिदासः |
| १०२ | संवादस्त्वानु ... | | |
| १०३ | प्रतिश्रुतानां ... | | |
| ११० | मृगयाक्षाः ... | | |
| १११ | नागायुतबलो भीमः .... | महाभारतम् | व्यासः |
| १११ | एको वेषपरिग्रहः .... | अनर्घराघवम् | मुरारिः |
| ११३ | तत्रार्थशून्यं विज्ञानं .... | | आचार्यः |
| ११३ | कर्म लेप्यादिकं ... | | |
| ११४ | वेदार्थ ... | | |
| ११४ | उद्धृते ... | मनुस्मृतिः | मनुः |
| ११९ | निरुक्तं ज्योतिषं .... | | |
| ११८ | आदित्यो वा ... | ब्राह्मणम् | |
| १२१ | क्षीराब्धौ ... | स्मृतिः | |
| १२४ | तमुपर्यासीनं ... | गौतमधर्मसूत्रम् | गौतमः |
| १२६ | अनल्पत्वाद् ... | शिशुपालवधम् | माघः |
| १३० | बहूनि तु ... | | |
| १३० | अश्वमेध ... | रामायणम् | वाल्मीकिः |

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २१८ | हविश्शमीपल्लव .... | रघुवंशम् | कालिदासः |
| २२३ | सान्द्रे रजस्यात्म.... | ,, | ,, |
| २३० | कर्मान्तं कर्म .... | अर्थशास्त्रम् | कौटल्यः |
| २३२ | रक्ताक्षं च ... | | |
| २३४ | सभायां ... | दैवम् | देवः |
| २३७ | कायबाल ... | अष्टाङ्गहृदयम् | वाहटः |
| २७४ | तुल्याग्न्यापो .. | याज्ञवल्क्यस्मृतिः | याज्ञवल्क्यः |
| २७४ | देवानुग्रान्... | ,, | ,, |
| २७६ | दर्पणं पूर्णकुम्भं .... | | |
| २८१ | हंसद्वारं भृगु .. | मेघदूतम् | कालिदासः |
| २८६ | क्लेशैरुपहतस्यापि .... | | दिवाकरः |
| २८८ | पाश्चात्यभाग ... | शिशुपालवधम् | माघः |
| २९७ | काननवनदेशे... | | |
| २९७ | चातुर्वर्ण्यसमेतं ... | | |
| ३०० | रहस्यं च न भवति .... | दशकुमारचरितम् | दण्डी |
| ३०१ | दुर्बलो बलवत्सेवी .... | | |
| ३०६ | तालैः शिञ्जद्... | मेघदूतम् | कालिदासः |
| ६१९ | यस्यां तु ... | | |
| ३२१ | भरद्वाजमयूरस्य .... | | |
| ३३१ | असन्तुष्टो ... | भारतम् | व्यासः |
| ३३२ | वैमनस्यं श्रमो ... | | दिवाकरः |
| ३३७ | समसूरकं प्रस्तरपटं .... | कामशास्त्रम् | |
| ३३७ | मरतकहरिन्ति .. | कादम्बरी | बाणभट्टः |
| ३४६ | प्रस्वेदात्मानमसौ ... | मनुस्मृतिः | मनुः |
| ३५० | तत्त्वार्थशून्यं ... | | |

# APPENDIX 2

## INDEX OF MAL. FORMS FOUND IN THE COMMENTARY.

| Page. | Sans | Mal. | Transliteration. |
|---|---|---|---|
| 15 | सिन्दुवारम् | നൊച്ചിപ്പൂ | Noccippū |
| .. | अष्टापदम् | ചൂതുപലക | Cūtupalaka |
| 17 | तर्जनी | ചൂണ്ടോന്റി | Cūṇṭōnty |
| .. | परिकरबन्धः | കെട്ടിച്ചുറ്റിയൊരു പട്ടകം | Keṭṭiccuttiyoru Paṭṭakam |
| 22 | ऊधः | അകിടു് | Akiṭŭ |
| 23 | कुसुम्भम् | കുയുമ്പ | Kuyumpa |
| 24 | कण्टकः | മുള്ളു് | Muḷḷŭ |
| 25 | तालः | പനെ | Pane |
| .. | चापः | കാടൻ | Kāṭan |
| .. | कटकः | മലയിനരെ പ്രദേശം | Malayinare Pradōśam |
| .. | प्रणालः | പർത്തലു് | Parttalŭ |
| 26 | क्रकचम् | ഈർവാൾ | Īrvāl |
| 28 | खलीनम् | മുഖക്കരുവി | Mukhakkaruvi |
| 29 | अर्गला | കണയാരം | Kaṇayāram |
| 32 | कचपल्लवः | കുഴറുകനെ | Kuḻarukane |
| .. | पङ्कः | ചാന്തു് | Cāntŭ |
| .. | केशबन्धः | ചീചുഴിയം | Cīcuḻiyam |
| .. | कल्कम् | കൊതു് (കൊത്തു്) | Kotŭ (Kottŭ) |
| .. | पट्टपट्टिका | പട്ടുക്കച്ച | Paṭṭukkacca |
| .. | असिधेनुः | പത്തിരം | Pattiram |
| 33 | घोणावंशः | മൂക്കുതണ്ടു് | Mūkkutaṇṭŭ |
| ,, | तक्कोलम् | തക്കോലപ്പുട്ടൽ | Takkōlappuṭṭal |
| ,, | लवङ्गम् | ഇലവങ്കം | Ilavaṅkam |
| ,, | पारिजातम् | ചാതിക്ക | Cātikka |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 34 | त्रिकण्टकः | നെരിഞ്ചി | Neriñci |
| ,, | कुन्दः | കുരുന്തു് | Kuruntŭ |
| ,, | पत्रभङ्गः | പത്തിക്കീററു് | Pattikkīttŭ |
| ,, | तलकक्षा | കീഴ്പ്പൊത്തു് | Kīḻppottŭ |
| 34 | हारीतः | പച്ചക്കിളി | Paccakkiḷi |
| ,, | श्रमः | ചിരമം | Ciramam |
| 35 | बलगनम् | മുരിപ്പു | Murippu |
| ,, | लालिका | മൂക്കുകയറു | Mūkkukkayarŭ |
| ,, | गोलाङ्गूलः | മച്ചു് മൊച്ച | Maccŭ(Mocca) |
| 41 | गव्यूतिः | അരക്കാതം | Arakkātam |
| 44 | लाङ्गलिका | മെത്തോന്നി | Mettōnni |
| 47 | नेत्रम् | നെത്തിരിപ്പട്ടു് | Nettirippaṭṭŭ |
| 48 | नीली | അവരി | Avari |
| 49 | वालिका | വാളി | Vāḷi |
| ,, | जूटिकाबन्धनम् | ചുഴിയം | Cuḻiyam |
| 50 | पाटलम् | പാതിരിപ്പൂ | Pātirippū |
| ,, | शिरीषम् | വാകപ്പൂവു് | Vākappūvŭ |
| 64 | पारशवः | ഉവച്ച | Uvaccar |
| ,, | वर्णकविः | ഒ?ളയൽപുണർപ്പാരെ | O?ḷyalppuṇarppāre |
| 72 | अर्जुनः | മരുതു് | Marutŭ |
| 73 | कन्दलः | വല്ലീ | Vallī |
| ,, | चीरी | ചീവീടു് | Cīvīṭŭ |
| ,, | मृगतृष्णिका | കാനൽ | Kānal |
| 74 | करञ्जः | പുങ്ങു് | Puṅṅŭ |
| ,, | कूटम् | കൂവൈ | Kūvai |
| 93 | व्यूहः | വകുപ്പു് | Vakuppŭ |
| 99 | वागुरा | കൈവല | Kaivala |
| 100 | लोहिताङ्गः | ചെവ്വാ | Cevvā |
| 101 | कज्जलम् | മൈയു് | Maiyŭ |
| 102 | मौञ्जः | ഉൾക്കൊത്തു് | Uḷkkottŭ |
| 104 | बिम्बम् | കോവെപ്പഴം | Kōveppaḻam |
| 105 | फेनकः | നുരെ | Nure |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 107 | कर्णिकाकोशः | താമരെ ിട | Tāmareppīṭam |
| 108 | तन्त्री | താംപ്പ് | Tāmpŭ |
| ,, | किणम् | തഴമ്പ് | Taḻampŭ |
| 109 | ज म्भा | കോട്ടുവാ വിടുക | Kōṭṭuvā viṭuka |
| ,, | अङ्गभङ्गम् | മൂരിനിവിരുക | Mūriniviruka |
| ,, | स्फुटनम् | ഞെട്ടുക | Ñeṭṭuka |
| 112 | ग्राहः | മുതല | Mutala |
| 113 | यो ङ्गिका | തിറ്റോല | Tittōla |
| 114 | तिरस्करिणी | തിരെ | Tire |
| 116 | आरकूटः | ആരക്കൂടം | Ārakūṭam |
| 117 | चटकः | ഊർക്കുരുവി | Ūrkkuruvi |
| ,, | आलवालः | പാത്തി | Pātti |
| ,, | याग पात्रम् | മരക്കലം | Marākkalam |
| 118 | द्रोणकाकः | അണ്ടൻകാക്ക | Aṇṭankākka |
| ,, | कोटरम् | പൊന്തു് | Pontŭ |
| 125 | सूत्रम् | ചരട് | Caraṭŭ |
| ,, | यन्त्रणम् | ഏട്ടണക്കാൽ | Eṭṭaṇakkāl |
| ,, | पत्रम् | ഏട് | Eṭŭ |
| ,, | कबलिका | ഏടിടും കവളിക | Eṭiṭum Kavaḷika |
| 128 | स्त्री | കരയൻ | Karayan |
| 129 | अश्वतरः | കോവെറുകഴുതെ | Kōveṟukaḻute |
| 131 | मदनः | മരുകാരെ | Marukāre |
| 134 | कुटीरम् | കുടിൽ | Kuṭil |
| ,, | पटलम् | ഇറപ്പ് | Eṛappŭ |
| 135 | कपिला | കുരാൽപശു | Kurālpaśu |
| 136 | त्रिकम् | കീഴ്മുതുക | Kiḻmutuku |
| ,, | बुसम् | പതിർ | Patir |
| 137 | वाटः | തോട്ടം | Tōṭṭam |
| ,, | खलधानम् | കളം | Kaḷam |
| ,, | सस्यकूटः | നെൽക്കൂട് | Nelkkūṭŭ |
| ,, | जीरकजूटकः | ചീരക്കൂ | Cīrakkūṭŭ |
| 139 | अर्जुनः | മരുതു് | Marutŭ |
| ,, | पाटली | പാതിരി | Pātiri |
| ,, | उरभ्रः | ചോനാടു് | Cōnna Āṭŭ |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 150 | पुस्तिकापूलिका | എട്ടുകൊട്ടു | Eṭṭukkottu |
| ,, | दशासूत्रम् | കരെനൂൽ | Karenūl |
| 1 2 | गुलिका | ഉണ്ട | Uṇṭa |
| ,, | खालत्यम् | കഷണ്ടി | Kaṣaṇṭi |
| ,, | कर्णशष्कुली | ചെവിപ്പൊത്തൽ | Ceviṗpottal |
| ,, | काचमृत्तिका | കുപ്പിമൺ | Kuppimaṇ |
| 153 | श्रवणपाली | കാതു് | Kātŭ |
| 154 | पर्यङ्कबन्धः | മുത്താപ്പു് | Muttāppŭ |
| ,, | पादुका | മരവടി | Maravaṭi |
| 158 | परिवारः | ഉറെ | Ure |
| 159 | दोहलम् | ചൂലാമെ | Cūlāme |
| ,, | कदरः | ചടങ്ങു് | Caṭaṅṅŭ |
| 161 | फलकम् | കടകു് | Kaṭakŭ |
| ,, | स्वस्तिकग्रन्थिः | പുള്ളടിക്കെട്ടു് | Puḷḷaṭikkeṭṭŭ |
| 162 | चर्मफलकम् | തോൽകടകു് | Tōlkaṭakŭ |
| ,, | असिधेनुः | പത്തിരം | Pattiram |
| 163 | प्रतिसरः | കാപ്പു് | Kāppŭ |
| 16 | आलानम् | തടി | Taṭi |
| ,, | पाली | പാളം | Pāḷam |
| ,, | आस्फोटनम् | പപ്പുതട്ടുക | Papputaṭṭuka |
| 165 | निघातः | ഉരുമ്മേൽ | Urummēl |
| ,, | शरावरणम् | കടകു് | Kaṭaku |
| 167 | तरङ्गः | തിരെപ്പു് | Tireppŭ |
| 172 | शङ्कुः | മുള്ളു് | Muḷḷŭ |
| ,, | वल्मीकः | പുററു് | Puttŭ |
| 176 | अवस्कन्दपातम् | ഇറാകിട്ടു | Irākiṭṭŭ |
| ,, | सभा | ചാല | Cāla |
| 177 | वेतसः | വഞ്ഞി | Vaññi |
| 181 | नान्दी | പള്ളിയെ<br>അർച്ചിക്കൊട്ടു് | Palliye<br>Arcikkoṭṭŭ |
| 183 | तृणस्तम्बः | പുൽമുതൽ | Pulmutal |
| ,, | नभः | ആവണിമാസം | Āvaṇimāsam |
| 184 | अपाश्रयः | പരമണെ | Paramaṇe |
| 186 | ज्यैष्ठामूलीयम् | ആനിമാസം | Ānimāsam |

| Page. | Sans. | Mal. | Transliteration |
| --- | --- | --- | --- |
| 187 | अर्वाक् | ഇപ്പാൽ | Ippāl |
| 189 | शाकटकम् | ഇലത്തട്ട് | Ilattaṭṭŭ |
| ,, | पटलकम् | പടലികൈ | Paṭalikai |
| 190 | वीटिका | വെററില-ച്ചുരുൾ | Veṭṭila-ccuruḷ |
| 191 | रासः | കുരവെക്കൂത്ത് | Kuravekkūttŭ |
| 192 | वेणुः | കുഴൽ | Kuḻal |
| ,, | झल्लरी | കഠമ | Kaṭhama |
| ,, | मर्द्दपटहः | ഉടുക്ക | Uṭukka |
| ,, | काहलः | കാളം | Kāḷam |
| ,, | अलाबुः | ചുരെപ്പത്തൽ | Cureppattal |
| 193 | कुरण्टकः | വാടാംകുറിഞ്ഞി | Vāṭāṁkuṟiññi |
| 198 | अश्वघ्नमः | മുരുക്ക് | Muṟukkŭ |
| 199 | [illegible] | മരുത് | Marutŭ |
| 200 | कुटीरकम् | കുടിൽ | Kuṭil |
| 201 | मषी | കരി | Kari |
| 205 | अम्लानम् | വാടാംകുറിഞ്ഞി | Vāṭāṁkuṟiññi |
| 206 | उत्कोचम् | കൈക്കൂലി | Kaikkūli |
| 209 | शिल्पी | പൊതുമകൻ | Potumakan |
| ,, | चर्मकारकः | ഉവച്ചൻ | Uvaccan |
| ,, | शिला | അമ്മി | Ammi |
| ,, | प्रकोष्ठम् | കൈപുടെ | Kaipuṭe |
| 210 | प्रणालः | പത്തൽ | Pattal |
| ,, | अलिन्दः | കല്ലൂരി | Kallūri |
| ,, | उत्थापितम् | എടുക്കപ്പെട്ടതു് | Eṭukkappeṭṭatŭ |
| ,, | लेपकः | ചാന്തിടുവാൻ | Cāntiṭuvān |
| ,, | मसृणम् | മെഴുത്തതു് | Meḻuttatŭ |
| ,, | अर्पणम् | അർച്ചിക്ക | Arcikka |
| 211 | कार्पासम् | പരുത്തി | Parutti |

| Page. | Sans. | Mal. | Transliteration. |
|---|---|---|---|
| 211 | तूलपल्लवकम् | പഞ്ഞിക്കൊത്തു | Paññikkottu |
| ,, | वर्णघृतम् | മീൻനെയ്യു് | Mīnneyyŭ |
| ,, | भक्तिः | അടുക്കു | Aṭukku |
| ,, | भुज्यमानः | കൊത്തുപിടിക്ക | Kottupiṭikka |
| 212 | नेत्रम् | നെത്തിരിപ്പട്ടു് | Nettirippaṭṭŭ |
| ,, | वितानम् | മേൽക്കെട്ടി | Mēlkkeṭṭi |
| ,, | स्तवरकम् | തെവാങ്കു | Tevāṅku |
| ,, | पटलम् | ഇറപ്പു് | Iṟappŭ |
| 213 | कपोतः | പിറാവു | Piṟāvu |
| ,, | नक्षत्रमाला | താരാമാലൈ | Tārāmālai |
| 218 | अमत्रमुखम् | വട്ടപ്പാലികൈ | Vaṭṭappālikai |
| ,, | दृषत् | അമ്മി | Ammi |
| 219 | शाफरकम् | ഇലത്തട്ടു് | Ilattaṭṭŭ |
| 223 | नीली | അവരി | Avari |
| ,, | चोरिका | കച്ച | Kacca |
| 225 | आपणः | കടെ | Kaṭe |
| ,, | पाशवागुरा | കയററുവല | Kayattuvala |
| ,, | प्रतिशयितः | വരംകിടന്താൻ | Varamkiṭantān |
| 225 | मुण्डोपहारहरणम् | തൂങ്കതലയിടുകൈ | Tūṅkatalayiṭukai |
| ,, | उद्घ्रियमाणम् | ഉഴലെക്കുറെക്കെ(?) | Uḻalekkuṟekke |
| ,, | वध्रा | വാറു് | Vāṟŭ |
| ,, | विक्षेपः | തെണ്ടവിടുക | Teṇṭaviṭuka |
| ,, | विपणिः | കടെത്തെരുവു് | Kaṭetteruvū |
| 228 | क्राथः | കുടിനീർ | Kuṭinīṟ |
| 229 | तिरस्करिणी | തിരെ | Tire |
| ,, | सुवीथीपथः | ഒഴുകുപാരം | Oḻukupāram |
| ,, | आचमनवाही | പടികമെടുപ്പാർ | Paṭikameṭuppāṟ |
| ,, | चन्द्रशालिका | നിലാമുററം | Nilāmuttam |
| ,, | सञ्जवनम् | നാർച്ചാർവു് | Nāṟccāṟvŭ |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 229 | शिरोरक्षी | തലകാപ്പു | Talakāppu |
| 230 | पौरोगवः | മടെമുതലി | Maṭemutali |
| ,, | चषकः | വട്ടിൽ | Vaṭṭil |
| ,, | गोपकर्त्तान्तिकः | തണ്ണീരമൃതെടു-പ്പാൻ | Taṇṇīramṛte-ṭuppān |
| ,, | मस्तु | തയിർപ്പഞ്ഞീർ | Tayiṟppaññīṟ |
| ,, | क्वथितम् | കായ്ച്ചപ്പെട്ടതു് | Kāyccappeṭṭatŭ |
| ,, | मल्लिका | പറൻ | Paraṉ |
| 231 | गल्वर्कः | വട്ടിൽ | Vaṭṭil |
| ,, | शालाजिरः | അകൽ | Akal |
| ,, | लाजसक्तु | പൊരിപ്പിണ്ടി | Porippiṇṭi |
| ,, | मासरः | പൊരിക്കഞ്ചി | Porikkañci |
| ,, | प्राचीनामलकम् | പെരുനെല്ലി | Perunelli |
| ,, | मातुलुङ्गम् | പറൽമാതളെ | Paralmātaḷe |
| ,, | दाडिमम् | താളിമാതളെ | Tāḷimātaḷe |
| ,, | द्राक्षा | മുന്തിരികെ | Muntirike |
| ,, | दृषत् | അമ്മി | Ammi |
| ,, | चर्चा | ഉടുക്കെ | Uṭukke |
| 232 | मृगतृष्णा | കാനൽ | Kānal |
| 233 | जृम्भिका | മൂരി | Mūri |
| 234 | उच्छूनम् | വീർക്കുകെ | Vīrkkuke |
| 238 | जलसेचनार्द्रम् | ഈറഒലിയൽ | Īraoliyal |
| 244 | प्रियङ्गुः | ഞാഴൽ | Ñāḻal |
| 245 | कण्ठेगुणः | കൊളമാലെ | Koḷamāle |
| 246 | महत्तराः | മുതലിപ്പേർ | Mutalipper |
| 247 | कुब्जिका | കൂനി | Kūni |
| ,, | राजहंसास्यभृङ्गारकः | അന്നവായ്ക്കിണ്ടി | Annavāykkiṇṭi |
| ,, | कलमूकः | ഊമച്ചൊകിടു് | Ūmoccokiṭŭ |
| 250 | उपरुध्यमानम् | ചൊരുകാനിന്റതു | Corukānintatu |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 251 | अप्रियप्रश्नः | മുഖംനോക്കി-ക്കാണ്ക | Mukhanōkki-kkāṇka |
| 254 | कलविङ्कः | ഊർക്കുരുവി | Ūṛkkuruvi |
| 255 | विकथम् | കൊട്ടുവിട്ട്(?) | Cottuvitŭ(?) |
| 256 | धमनीमनयः | ഊതിനിന്റ-നരമ്പുടയാർ | Ūtininta naramputayār |
| 261 | आचमनम् | പടിക്കം | Paṭikkam |
| 263 | स्विन्नम् | ഒറ്റപ്പെടുകെ | Ottappetuke |
| 264 | शिक्किका | മട്ടപ്പള്ളി-ക്കട്ടിൽ | Maṭṭappaḷḷi-kkaṭṭil |
| 265 | कुथा | നിലച്ചോട്ടെ | Nilaccōṭṭe |
| ,, | टङ्कः | ഉളി | Uḷi |
| ,, | मञ्जिष्ठा | മഞ്ചട്ടി | Mañcaṭṭi |
| ,, | कञ्चुकम् | കുട്ടേറ് | Kuṭṭērŭ |
| 267 | पुरुषद्वेषिणी | മുലൈമായനു പേയാൽ(?) | Muḷaimāyanu pēyāḷ |
| 268 | कुलीरः | ഞണ്ട് | Ñaṇṭŭ |
| 272 | वस्त्रकर्मान्तिकः | പരിവട്ട-മെടുപ്പാർ | Parivaṭṭa-meṭuppāṛ |
| 273 | कारा | ചിറംകോട്ടം | Ciṛamkoṭṭam |
| 275 | बन्दिग्रहः | ചിറപിടിക്കെ | Ciṛapiṭikke |
| ,, | अलगर्दः | നീർക്കോലി | Nīṛkkōli |
| 276 | आत्मम्भरिता | വയറുതാരി-ത്തനം | Vayarutāri-ttanam |
| 277 | पोतम् | മരക്കലം | Maṟakkalam |
| 278 | उल्का | എരികൊള്ളി | Erikoḷḷi |
| 290 | स्वेदः | ഒറ്റുക | Ottuka |
| ,, | सन्दंशः | ഇടുക്കി | Iṭukki |
| 295 | लूतातन्तुः | ചിലന്തിനൂൽ | Ciḷantinūl |
| 296 | वंशलता | പരിക്കോൽ | Parikkōl |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 296 | अनामुक्तः | പരികാരൻ | Parikāran |
| 297 | तोत्रलता | പരിക്കോൽ | Parikkōl |
| 301 | बलदर्शनम् | പടകാട്ടുക | Paṭakāṭṭuke |
| 302 | भूखात: | നിലവറെ | Nilavaṟe |
| 304 | शस्त्रम् | മയിർക്കത്തി | Mayiṟkkatti |
| 305 | कपोतः | പിറാവു് | Piṟāvŭ |
| 306 | तालिकातोद्यम् | കൈതട്ടുക | Kaitaṭṭuke |
| ,, | तर्जनी | ചുട്ടാമ്പട്ടി | Cuṭṭāmpaṭṭi |
| ,, | कोट्टवी | പിണന്തിന്നി | Piṇantinni |
| 309 | आक्षपटलिकः | പുരവരിക്കൂറു-ചെയ്യാർ | Puravarikkūṟu-ceyyāṟ |
| ,, | करणः | കണക്കൻ | Kaṇakkan |
| ,, | दिवसग्रहणम् | നാൾക്കൊൾക | Nāḷkkoḷka |
| ,, | शासनम् | തിരുമുഖം | Tirumukham |
| 310 | मुद्रा | ഇലച്ചന | Ilaccana |
| ,, | क्रोशः | (കൂലി?കൂവിടം) | (Kūli?Kūviṭam) |
| 311 | काहला | കാളം | Kāḷam |
| ,, | द्रुवणः | കൊട്ടാപ്പിടി | Koṭṭāppiṭi |
| ,, | उल्का | ചുഴഞ്ഞ്യ(?) | Cuḷaññya(?) |
| ,, | कीलः | ആണി | Āṇi |
| ,, | तालकः | ഇരപ്പുത്താൾ | Irapputtāḷ |
| 312 | लेखिकः | പരിക്കാരൻ | Parikkāran |
| ,, | प्रस्फोटितम् | ഉതപ്പൊട്ടതു് | Ūtappoṭṭatŭ |
| ,, | संवेष्ट्यमानम् | ചുരുട്ടുക | Curuṭṭuke |
| ,, | पटकुटी | പടങ്കു | Paṭaṅku |
| ,, | काण्डपटम् | തിരെ | Tire |
| ,, | पटवितानः | മേൽക്കെട്ടി | Mēlkkeṭṭi |
| ,, | चिपिटचर्मपुटः | അകലിയതോലെ | Akaliyatōle |
| ,, | भाण्डागारी | പണ്ടാരി | Paṇṭāri |

| Page. | Sans. | Mal. | Transliteration. |
|---|---|---|---|
| 313 | पेडा | പേഴ | Pēḻa |
| 314 | नासीरः | തൂചി | Tūci |
| ,, | अवरक्षिणी | ചുറവായ്ക്കയറു | Cuṟavāykkayaṟu |
| ,, | घाटा | പിടരി | Piṭari |
| ,, | प्ररोहकः | ചെക്കിണം | Cekkiṇam |
| 315 | घासिकः | പൈമെയാൻ | Paimeyān |
| ,, | तैलचक्रम् | ചക്കു | Cakku |
| ,, | लम्बनः | എരുതുവാണിയൻ | Erutuvāṇiyan |
| ,, | महानसम् | അടകവെളം | Aṭakaveḷam |
| ,, | कुटीरम् | കുടിൽ | Kuṭil |
| ,, | लोष्टम् | ഓട്ടു് | ōṭŭ |
| 316 | पल्ली | കുടിൽ | Kuṭil |
| ,, | खट्क्षत्रियः | ആശവാരിയർ | Āśavāriyar |
| ,, | टङ्करः | വാരിക്കഴുത | Vārikkaḻuta |
| ,, | वेसरः | കോവെറുകഴുത | Kōveṟukaḻuta |
| ,, | भिण्डिपालः | പിണ്ടിവാളം | Piṇṭivāḷam |
| ,, | फलकम् | കടകു | Kaṭaku |
| ,, | पर्याणम् | പത്തരെ | Pattare |
| 317 | पादपुलिका | അങ്കവടി | Aṅkavaṭi |
| ,, | स्तबकः | തെവാങ്കു് | Tevāṅkŭ |
| ,, | कूर्पासः | കുപ്പായം | Kuppāyam |
| 318 | नालः | കാമ്പു് | Kāmpŭ |
| ,, | क्षौमनिचोलम् | കുമ്മുക(?) | Kummuku(?) |
| ,, | कार्मरङ्गचर्म | മെത്തന്റ തോൽ- മേവിയ കടകു | Mettanta tōl- mēviya kaṭaku |
| ,, | लम्बापटहः | തിമില | Timila |
| 319 | मुद्रा | ഇലച്ചിനെ | Ilaccine |
| 321 | चाषः | കാടൻ | Kāṭan |
| 323 | कगवि | ചേരിന്തു | Cērintu |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 323 | धीवरी | വലെച്ചി | Valecci |
| 324 | चणकः | കടല | Faṭale |
| ,, | बदरम् | ഇലന്തപ്പഴം | Ilantappaḷam |
| ,, | गोणी | കോണിക | J ōṇika |
| 325 | दात्रम् | അരിവാൾ | Arivāḷ |
| 326 | कुद्दाकः | വെട്ടിയാർ | Veṭṭiyār |
| ,, | लुण्ठकः | ചൂറെക്കാരൻ | Cūṛekkāran |
| 327 | नौः | ഓടം | ōṭam |
| ,, | गडुकः | കുമാൽ (?) | Kumāl (?) |
| ,, | करकः | കരകം | Karakam |
| ,, | पतद्ग्रहः | പടിക്കം | Paṭikkam |
| ,, | अवगाहः | പഞ്ചാടി (?) | Pāñcāṭi(?) |
| ,, | वराहवधी | പന്റിവാർ | Pantivār |
| ,, | चटकजूटः | ഊർക്കുരുവിത്തിരൾ | Ūṛkkuruvittiraḷ |
| ,, | शुष्कशशकः | മുയലുപ്പുകണ്ടം | Muyaluppu-kaṇṭam |
| ,, | शाकपत्रम् | ഇലക്കറി | Ilakkaṛi |
| ,, | वेत्राग्रम् | പിരമ്പിൻകഴുത്തു് | Pirampinkaḷuttŭ |
| 328 | तलकम् | കരകക്കാൽ | Karakakkāl |
| ,, | तपकः | കാരുകാൽ | Kārukāl |
| ,, | हस्तकदर्वी | ചട്ടുകം | Caṭṭukam |
| ,, | तापिका | അങ്ഗാരവട്ടകെ | Aṅgāravaṭṭake |
| ,, | ताम्रचरुकः | ചെപ്പുപ്പാനെ | Ceppuppāne |
| ,, | कटाहः | മിടാവു് | Miṭāvŭ |
| ,, | पिटकः | പേഴെ | Pēḷe |
| ,, | कुसुमकरण्डकम् | പൂമ്പുട്ടിൽ | Pūmpuṭṭil |
| 329 | आयुक्तकाः | കോവിററമർ | I ōvittamaṛ |
| ,, | गिरीयकगुडः | അമ്മാനെ | Ammāne |
| ,, | लोष्टम् | ഒട്ടി | Oṭṭi |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| ,, | लगुडः | തടി | Taṭi |
| ,, | कोणः | കുറുന്തടി | Kuṟuntaṭi |
| 330 | शङ्कुः | മുള്ളു | Muḷḷu |
| ,, | कुन्तालः | കുന്താലി | Kuntāli |
| ,, | अवदारणम् | കോട്ടു് | Kōṭṭŭ |
| ,, | क्षत्रम् | അരിവാളെ | Arivāḷe |
| ,, | यष्टिः | മ്രാചു് | Mrācŭ |
| ,, | यावसिकाः | പൈമേയാർ | Paimēyār |
| ,, | मल्लकूटः | ചുറ്റുക്കോവിണം | Cuttukkōviṇam |
| ,, | दण्डपाशः | നായ്ക്കഴി | Nāykkaḻi |
| 332 | किष्कुः | മുഴം | Muḻam |
| ,, | प्रादेशः | ഒടെ | Oṭe |
| 334 | दन्तवीणा | പൽവരെ | *P*alvare |
| 336 | उल्लिखितम् | കടയപ്പെട്ടതു് | Kaṭayappeṭṭatŭ |
| 337 | चित्रपटी | ചിത്രമെഴുതിന-പട്ടു് | Citrameḻutina-paṭṭŭ |
| ,, | मसूरकोपधानम् | കെട്ടൈ(?) | Kettai (?) |
| ,, | प्रियङ्गुप्रसवः | ഞാഴൽപ്പൂ | Ñāḻalpū |
| ,, | लतासहकारः | കൊടിമാ | Koṭimā |
| ,, | कपोतः | പിറാവു് | Piṟāvŭ |
| ,, | कोशकः | ചുറ്റുക | Cuttuka |
| , | वैणवी | മുളംകുഴ | Muḻaṁkuḻa |
| 338 | कस्तूरिकाकोशम् | പുഴുകിൻചട്ടം | Puḻukincaṭṭam |
| ,, | जातिफलम् | ചാതിക്കായു് | Cātikkāyŭ |
| ,, | उल्लककलशी | കുപ്പിക്കണ്ടം | Kuppikkaṇṭam |
| ,, | जीवञ्जीवः | വൽവട്ടച്ചാവൽ | Valvaṭṭaccāval |
| 340 | नालिकेरसमुद्गम् | കളഭക്കയിൽ | Kaḻabhakkayil |
| ,, | अङ्गरक्षम् | ചാർത്തിനപടി | Cārttinapaṭi |
| ,, | पदकम् | പതക്കം | Patakkam |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 341 | वितानम् | മേൽക്കെട്ടി | Mēlkketṭi |
| 342 | यमजः | ഇരട്ടപ്പിള്ളൈ | Iraṭṭappiḷḷai |
| 347 | प्ररोहः | വിഴാതുവേർ | Viḻātuvēr |
| 350 | मलम् | അഴുക്കു | Aḻukku |
| 355 | स्थलकूर्मः | വറളാമെ | Vaṛaḷāme |
| ,, | सरटः | ഓന്തു് | Ōntŭ |
| ,, | जाहकः | ചാക്കിള | Cākkiḷa |
| ,, | कन्दुकः | പന്തു | Pantu |
| ,, | वेणुः | കുഴൽ | Kuḻal |
| ,, | करणम् | വായ്ക്കൈ | Vāykkai |
| ,, | पलालः | വൈക്കോൽ | Vaikkōl |
| ,, | राजिलः | ചേരെ | Cēre |
| 359 | सङ्ख्यालेख्यपत्रम् | വായോല | Vāyōla |
| ,, | षष्टिकः | അറുപതിനവനു് (?) | Aṛupatinavanŭ(?) |
| ,, | व्रीहिः | പതിർ | Patiṛ |
| ,, | बीजधानी | കുളാംകു് (?) | Kuḷāṁkŭ(?) |
| ,, | शाकः | തേക്കുമരം | Tēkkumaram |
| ,, | वनपालः | കാടുകാപ്പാൻ | Kāṭukāppān |
| ,, | कुन्दालम् | കുന്താലി | Kuntāli |
| 360 | कृष्णमृत्तिका | കളിമൺ | Kaḷimaṇ |
| ,, | अलम्बुसा | കോട്ടെക്കരന്ത | Kōṭṭekkaranta |
| ,, | कोकिलाक्षक्षुपः | മുള്ളിപ്പൂടു് | Muḷḷippūṭŭ |
| ,, | मञ्चः | പരൺ | Paraṇ |
| ,, | कटः | പായു് | Pāyŭ |
| ,, | कुटीरकम् | കുടിൽ | Kuṭil |
| ,, | सक्तुशरावः | തരുപ്പണം കുടിക്കും അകൽ | Taruppaṇam kuṭikkum Akal |
| 361 | अलिञ्जरम् | ചാൽ | Cāl |
| ,, | पाटलशर्करा | പാടലപുഷ്പപുടാമൽ (?) | Pāṭalapuṣpa-puṭāmal(?) |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 361 | पाटलपुष्पपदः | പാതിരിപ്പൂമണൈ | Pātirippūmaṇai |
| ,, | व्योकाराः | കന്നാർ | Kannāṛ |
| 362 | पाथेयस्थगिका | ചോററുക്കൂടൈ | Cōttukkūṭai |
| ,, | वालपाशः | മയിർക്കണ്ണി | Mayiṛkkaṇṇi |
| ,, | झर्झरा | തത്തര | Tattarā |
| ,, | कपिञ्जलः | കിവിൾതാരി | ] iviḷtāri |
| 363 | लशकः | പിചിൻ | Picin |
| ,, | लट्वा | കുരുക്കുരുവി | Kurukkuruvi |
| ,, | पाशिकः | കണ്ണിക്കാരൻ | Kaṇṇikkāran |
| ,, | तृणस्तम्बः | പുൽമുതൽ | Punmutal |
| ,, | तित्तिरिः | ചിച്ചിലി | Ciccili |
| ,, | धातकी | മലയാത്തി | Malayātti |
| ,, | पिचुः | പഞ്ചു | Pañcŭ |
| ,, | मयूराङ्गजः | പീലി | Pīli |
| ,, | मधूच्छिष्टम् | മെഴുകു | Meḻuku |
| ,, | लामज्जकम् | ഇലാമിച്ചം | Ilāmiccam |
| ,, | मुञ्जम् | മുഞ്ചി | Muñci |
| 364 | कुष्ठम् | കൊട്ടം | Koṭṭam |
| ,, | लोध्रम् | വള്ളി (?) | Vaḷḷi(?) |
| ,, | पिटकः | കടയി | Kaṭayi |
| 365 | वृतिः | വേലി | Vēli |
| ,, | शुङ्गा | മുകുഴ് | Mukuḻ |
| ,, | स्नुहिवाटः | കള്ളിവേലി | Kaḷḷivēḷi |
| ,, | कण्टकी | വേൽ | Vēl |
| ,, | करञ्जः | പുൻകു | Punkŭ |
| ,, | उरुबूकः | ആവണക്കു | Āvaṇakku |
| ,, | मरुवचा | വചമ്പു | Vacampŭ |
| ,, | वङ्गसेनः | അകത്തി | Akatti |
| ,, | वङ्गः | വഴുതിനൈ | Vaḻutine |

| Page. | Sans | Mal. | Transliteration. |
|---|---|---|---|
| 365 | संशकः | ഇഞ്ചി | Iñci |
| ,, | सुरसः | ചിറുകിഴങ്ങ് | Ciṛukiḻaṅṅŭ |
| ,, | सूरणः | കരണൈ | Karaṇai |
| ,, | शिग्रुः | മുരിങ്ങ | Muriṅṅa |
| ,, | ग्रन्थिपर्णम् | (ഫണ്ടിവെണ്ണ ? കരിഞ്ചണ്ണ | (Faṇṭiveṇṇa ?Kariñcaṇṇa) |
| ,, | गर्मुत् | പുല്ല് | Pullŭ |
| ,, | गृहवाटिका | പുഴക്കടെ | Puḻakkaṭe |
| ,, | लता | വള്ളി | Vaḷḷi |
| 366 | वेणुस्फोटः | മുങ്കിൽപിളർപ്പ് | Mūṅkilpiḷarppŭ |
| ,, | पोटगलः | കോവെക്കച്ചി | Kōvekkacci |
| ,, | शरः | വേഴം | Vēḻam |
| ,, | बल्वजम् | പുല്ല് | Pullŭ |
| ,, | अङ्गारः | കരി | Kari |
| ,, | शल्मलीतूलम् | ഇലവമ്പഞ്ചി | Ilavampañcŭ |
| ,, | यवनालः | ചോളം | Cōḷam |
| ,, | शालिः | ചെന്നെൽ | Cennel |
| ,, | वेणुतण्डुलम् | മുങ്കിലരി | Mūṅkilari |
| ,, | सालबीजम् | മരുതിൻപരൽ | Marutinparal |
| ,, | काश्मर्यबीजम् | പെരുങ്കുമിഴ് പരൽ | Perumkumiḻ paral |
| ,, | कटः | പായ് | Pāyŭ |
| ,, | राजादनः | പഴമുണ്ണിപ്പാല | Paḻamuṇṇippāla |
| ,, | मधूकः | ഇലുപ്പപ്പൂ | Iluppappū |
| 367 | कुसुम्भम् | കുചുമ്പെ | Kucumpe |
| ,, | कुसूलम् | കുതിർ | Kutir |
| ,, | राजमाषः | പെരുമ്പയറ് | Perumpayāṟŭ |
| ,, | त्रपुसम् | മിതുക്ക് | Mitukkŭ |
| ,, | कर्कटिका | വെള്ളരി | Veḷḷari |

| Page. | Sans. | Mal. | Transliteration |
|---|---|---|---|
| 367 | कर्कोटः | പഴപ്പാവൽ | Pa̲lappāval |
| ,, | कूश्माण्डः | പൂശണി | Pūśaṇi |
| ,, | अलाबुः | ചുരെ | Cure |
| ,, | वनविलालः | വെരുക് | Veruku |
| ,, | नकुलः | കീരി | Kīri |
| ,, | शालिजातकः | നാവി | Nāvi |
| 368 | श्यामा | ഞാഴൽ | Ñā̲lal |
| ,, | चिल्लः | ഉളിന്തിരികെ(?) | Uḷintirike(?) |
| 370 | नागदमनजूटिका | മണിനാകപ്പുല്ലിൻ വേരു് | Maṇinākappullin vērŭ |
| ,, | त्रपु | ഈയം | Īyam |
| ,, | अहीरणी | ഇരുതലമണ്ണെ-പ്പാമ്പു | Irutalamaṇṇe-ppāmpu |
| ,, | शङ्खिका | പത്തിരം | Pattiram |
| ,, | अच्छभल्लः | കരടി | Karaṭi |
| 371 | जटा | വേർ | Vēr̲ |
| ,, | पित्तम् | പിച്ചു് | Piccŭ |
| ,, | सारः | അകണി | Akaṇi |
| ,, | नलकः | കണക്കാലെലിമ്പു | Kaṇakkālelimpu |
| ,, | अटनी | വിൽക്കടെ | Vilkkaṭe |
| 372 | सारः | ഇരിമ്പു് | Irimpŭ |
| 374 | नमेरुः | ചുരപ്പുന്നെ | Curappunne |
| ,, | नालिकेरः | തെങ്കു | Teṁku |
| ,, | करिकेसरः | നാകം | Nākam |
| ,, | सरलः | ചരളം | Caraḷam |
| ,, | कोरकः | അരുമ്പു | Arumpu |
| ,, | कुरबकः | കുരാൽ | Kurāl |
| ,, | तिलकः | മഞ്ചാടി | Mañcāṭi |
| ,, | हिङ्गुः | പെരുങ്കായം | Peruṁkāyam |

| Page. | Sans, | Mal. | Transliteration. |
|---|---|---|---|
| 374 | प्रियङ्गुः | ഞാഴൽ | Ñāḻal |
| ,, | मुकुलः | മുരിക്ക | Murikka |
| ,, | देवदारुः | തേവതാരം | Tēvatāram |
| ,, | जम्बीरः | ചോനകനാരകം | Cōnakanārakam |
| 375 | चटका | കുരുവിപ്പെട്ടെ | Kuruvippeṭṭe |
| ,, | भारद्वाजः | പാറു | Pāṟu |
| ,, | पीलुः | ഉകായ് | Ukāyŭ |
| ,, | कट्फलम् | ചെറുകുമുഴം | Ceṟukumuḻam |
| ,, | शेफालिका | ചേപാലികെ | Cēpālike |
| ,, | शिफा | വേർ | Vēṟ |
| ,, | गोधेरः | ഉടുമ്പുക്കുട്ടി | Uṭumpukkuṭṭi |
| 376 | वृकः | ചെന്നായ് | Cennāyŭ |
| ,, | गवयधेनुः | കടമാൻപേടെ | Kaṭamānpēṭe |
| ,, | रुरुः | ഉഴുമാൻ | Uḻumān |
| ,, | गुञ्जागुञ्जः | കുന്റിത്തൂറ് | Kuntittūṟŭ |
| ,, | जाहकः | ചാക്കൻ | Cākkan |
| ,, | शालिजालः | നാവി | Nāvi |
| ,, | पाटलकीटपुटः | മുയിറ്റുക്കൂട | Muyittukkūṭa |
| ,, | लिकुचः | എഴുമിച്ചി | Eḻumicci |
| ,, | गोलाङ्गूलः | മൊച്ച | Mocca |
| ,, | एला | ഏലം | Ēlam |
| ,, | लवलिः | ഇലവെള്ളി | Ilaveḷḷi |
| ,, | कुल्या | വായ്ക്കാൽ | Vāykkāl |
| 377 | सूत्रशिक्यम् | ചരട്ടുറി | Caraṭṭuṟi |
| 379 | पारावतः | മാടപ്പിറാവ് | Māṭappiṟāvŭ |
| 380 | पिपीलिका | എറുമ്പ് | Eṟumpŭ |
| ,, | कणः | നുറുങ്ങരി | Nuṟuṅṅari |
| 386 | खर्जूरः | പേരീഞ്ചു | Pērīñcŭ |
| ,, | शतावरी | ചതാവേലി | Catāvēli |

| Sans. | Mal. | Transliteration. |
|---|---|---|
| विदारी | ഇരള | Iraḷa |
| बदरी | ഇലന്ത | Ilante |
| आमलकी | നെല്ലി | Nelli |
| कण्टाकिलता | വേലംകൊമ്പു് | Vēlaṁkompŭ |
| शिक्यम् | ഉറി | Uṛi |
| कोशः | മൂഴൈ | Mūḻai |
| पदकम् | പതക്കം | Patakkam |
| पदाङ्कः | തറയിൽപട്ട ചിററടി | Taṛayilpaṭṭa cittaṭi |
| हस्तः | അത്തം | Aṭṭam |
| कालनाडिका | നാഴിക | Nāḻike |
| नालिका | നാഴി | Nāḻi |
| कर्परः | മിടാവു് | Miṭāvŭ |